॥ श्री. ॥

# अथाष्टाङ्गहृदयविषयानुक्रमणिका ।

इति सूत्रस्थानम् ।

## अथ शारीरस्थानम् ।



इति शारीरस्थानम् ।

## अथ निदानस्थानम् ।

इति निदानस्थान पूर्वार्द्धञ्च समाप्तम् ।

## अथ चिकित्सास्थानम् ।

इत्युत्तरस्थानम् ।

इत्यष्टाङ्गहृदयानुक्रमणिका ।



॥ श्री ॥

अथ

# अष्टाङ्गहृदयम्।

## सूत्रस्थानम्।



श्रीगणेशाय नमः।

रागादिरोगान्सततानुषक्तानशेषकायप्रसृतानशेषान् ॥
औत्सुक्यमोहारतिदाञ्जघान यो पूर्ववैद्याय नमोऽस्तु तस्मै॥१॥

अथात आयुष्कामीयमध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः ॥
आयुष्कामयमानेन धर्मार्थसुखसाधनम् ॥
आयुर्वेदोपदेशेषु विधेयः परमादरः ॥ २ ॥
ब्रह्मा स्मृत्वायुषो वेदं प्रजापतिमजिग्रहत् ॥
सोऽश्विनौ तौ सहस्राक्षं सोऽत्रिपुत्रादिकान्मुनीन् ॥ ३ ॥
तेऽग्निवेशादिकांस्ते तु पृथक् तन्त्राणि तेनिरे।
तेभ्योऽतिविप्रकीर्णेभ्यः प्रायः सारतरोच्चयः ॥ ४ ॥
क्रियतेऽष्टाङ्गहृदयं नातिसंक्षेपविस्तरम् ॥
कायबालग्रहोर्ध्वाङ्गशल्यदंष्ट्राजरावृषान् ॥ ५ ॥

---

१ अधिकृत्येयमध्याय नामसंज्ञा प्रतिष्ठा इति।

अष्टावङ्गानि तस्याहुश्चिकित्सा येषु संश्रिता ॥
वायुः पित्तं कफश्चेति त्रयो दोषाः समासतः ॥ ६ ॥
विकृताऽविकृता देहं घ्नन्ति ते वर्त्तयन्ति च ॥
ते व्यापिनोऽपि हृन्नाभ्योरधोमध्योर्ध्वसंश्रयाः ॥ ७ ॥
वयोऽहोरात्रिभुक्तानां तेऽन्तमध्यादिगाः क्रमात् ॥
तैर्भवेद्विषमस्तीक्ष्णो मन्दश्चाग्निः समैः समः ॥ ८ ॥
कोष्ठः क्रूरो मृदुर्मध्यो मध्यः स्यात्तैः समैरपि ॥
शुक्रार्त्तवस्थैर्जन्मादौ विषेणेव विषक्रिमेः ॥ ९ ॥
तैश्च तिस्रः प्रकृतयो हीनमध्योत्तमाः पृथक् ॥
समधातुः समस्तासु श्रेष्ठा निन्द्या द्विदोषजाः ॥ १० ॥
तत्र रूक्षो लघुः शीतः खरः सूक्ष्मश्चलोऽनिलः ॥
पित्तं सस्नेहतीक्ष्णोष्णं लघु विस्रं सरं द्रवम् ॥ ११ ॥
स्निग्धःशीतो गुरुर्मन्दः श्लक्ष्णो मृत्स्नः स्थिरः कफः ॥
संसर्गः सन्निपातश्च तद्द्वित्रिक्षयकोपतः ॥ १२ ॥
रसासृङ्मांसमेदोऽस्थिमज्जाशुक्राणि धातवः ॥
सप्त दूष्यामला मूत्रशकृत्स्वेदादयोऽपि च ॥ १३ ॥
वृद्धिः समानैः सर्वेषां विपरीतैर्विपर्य्ययः ॥
रसाः स्वाद्वम्ललवणतिक्तोषणकषायकाः ॥ १४ ॥
षड् द्रव्यमाश्रितास्ते तु यथापूर्वं बलावहाः ॥
तत्राद्या मारुतं घ्नन्ति त्रयस्तिक्तादयः कफम् ॥ १५ ॥

कषायतिक्तमधुरा पित्तमन्ये तु कुर्वते ॥
शमनं कोपनं स्वस्थहितं द्रव्यमिति त्रिधा ॥ १६ ॥
उष्णशीतगुणोत्कर्षात्तत्र वीर्य्यं द्विधा स्मृतम् ॥
त्रिधा विपाको द्रव्यस्य स्वाद्वम्लकटुकात्मकः ॥ १७ ॥
गुरुमन्दहिमस्निग्धश्लक्ष्णसान्द्रमृदुस्थिराः ॥
गुणाः ससूक्ष्मविशदा विंशतिः सविपर्य्ययाः ॥ १८ ॥
कालार्थकर्मणां योगो हीनमिथ्यातिमात्रकः ॥
सम्यग्योगश्च विज्ञेयो रोगारोग्यैककारणम् ॥ १९ ॥
रोगस्तु दोषवैषम्यं दोषसाम्यमरोगता ॥
निजागन्तुविभागेन तत्र रोगा द्विधा स्मृताः ॥
तेषां कायमनोभेदादधिष्ठानमपि द्विधा ॥ २० ॥
रजस्तमश्च मनसो द्वौ च दोषावुदाहृतौ ॥
दर्शनस्पर्शनप्रश्नैः परीक्षेताथ रोगिणम् ॥ २१ ॥
रोगं निदानप्राग्रूपलक्षणोपशयाप्तिभिः ॥
भूमिदेहप्रभेदेन देशमाहुरिह द्विधा ॥ २२ ॥
जाङ्गलं वातभूयिष्ठमनूपं तु कफोल्बणम् ॥
साधारणं सममलं त्रिधा भूदेशमादिशेत् ॥ २३ ॥
क्षणादिर्व्याध्यवस्था च काले भेषजयोगकृत् ॥
शोधनं शमनं चेति समासादौषधं द्विधा ॥ २४ ॥
शरीरजानां दोषाणां क्रमेण परमौषधम् ॥
वस्तिर्विरेको वमनं तथा तैलं घृतं मधु ॥ २५ ॥

धीधैर्य्यात्मादिविज्ञानं मनोदोषौषधं परम् ॥
भिषग्द्रव्याण्युपस्थाता रोगी पादचतुष्टयम् ॥ २६ ॥
चिकित्सितस्य निर्दिष्टं प्रत्येकं तच्चतुर्गुणम् ॥
दक्षस्तीर्थात्तशास्त्रार्थो दृष्टकर्म्मा शुचिर्भिषक् ॥ २७ ॥
बहुकल्पं बहुगुणं सम्पन्नं योग्यमौषधम् ॥
अनुरक्तः शुचिर्दक्षो बुद्धिमान्परिचारकः ॥ २८ ॥
आढ्यो रोगी भिषग्वश्यो ज्ञापकः सत्त्ववानपि ॥
सर्वौषधक्षमे देहे यूनः पुंसो जितात्मनः ॥ २९ ॥
अमर्मगोऽल्पहेत्वग्ररूपरूपोऽनुपद्रवः ॥
अतुल्यदूष्यदेशर्तुप्रकृतिः पादसम्पदि ॥ ३० ॥
ग्रहेष्वनुगुणेष्वेकदोषमार्गो नवः सुखः ॥
शस्त्रादिसाधनः कृच्छ्रः सङ्करे च ततो गदः ॥ ३१ ॥
शेषत्वादायुषो याप्यः पथ्याभ्यासाद्विपर्य्यये ॥
अनुपक्रम एव स्यात् स्थितोऽत्यन्तविपर्यये ॥ ३२ ॥
औत्सुक्यमोहारतिकृद्दृष्टरिष्टोऽक्षनाशनः ॥
त्यजेदार्त्तं भिषग्भूपैर्द्विष्टं तेषां द्विषं द्विषम् ॥ ३३ ॥
हीनोपकरणं व्यग्रमविधेयं गतायुषम् ॥
चण्डं शोकातुरं भीरुं कृतघ्नं वैद्यमानिनम् ॥ ३४ ॥
तन्त्रस्यास्य परस्मातो वक्ष्यतेऽध्यायसंग्रहः ॥
आयुष्कामदिनर्त्वीहारोगानुत्पादनद्रवाः ॥ ३५ ॥
अन्नज्ञानान्नसंरक्षामात्राद्रव्यरसाश्रयाः ॥
दोषादिज्ञानतद्भेदतच्चिकित्साद्युपक्रमः ॥ ३६ ॥

शुद्ध्यादिस्नेहनस्वेदरेकास्थापननावनम् ॥
धूमगण्डूषदृक्सेकतृप्तियन्त्रकशस्त्रकम् ॥ ३७ ॥
शिराविधिः शल्यविधिः शस्त्रक्षाराग्निकर्मका ॥
सूत्रस्थान इमेऽध्यायास्त्रिंशत्, शारीरमुच्यते ॥ ३८ ॥
गर्भावक्रान्तितद्व्यापदङ्गमर्मविभागिकम् ॥
विकृतिर्दूतज षष्ठं, निदान सार्वरोगिकम् ॥ ३९ ॥
ज्वरासृक्कासयक्ष्मादिमदाद्यर्शोऽतिसारिणाम् ॥
मूत्राघातप्रमेहाणा विद्रध्याद्युदरस्य च ॥ ४० ॥
पाण्डुकुष्ठानिलार्त्ताना वातास्रस्य च षोडश, ॥
चिकित्सित ज्वरे रक्ते कासे श्वासे च यक्ष्मणि ॥ ४१ ॥
वमौ मदात्ययेऽर्शःसु विशि द्वौद्वौ च मूत्रिते ॥
विद्रधौ गुल्मजठरपाण्डुशोफविसर्पिषु ॥ ४२ ॥
कुष्ठश्वित्रानिलव्याधिवातास्रेषु चिकित्सितम् ॥
द्वाविंशतिरिमेऽध्याया, कल्पसिद्धिरत परम् ॥ ४३ ॥
कल्पो वमेर्विरेकस्य तत्सिद्धिर्वस्तिकल्पना ॥
सिद्धिर्वस्त्यापदा षष्ठो, द्रव्यकल्पोऽत उत्तरम् ॥ ४४ ॥
बालोपचारे तद्व्याधौ तद्ग्रहे द्वौ च भूतगौ ॥
उन्मादेऽथ स्मृतिभ्रंशे द्वौ द्वौ वर्त्मसु सन्धिषु ॥ ४५ ॥
दृक्तमोलिङ्गनाशेषु त्रयो द्वौ द्वौ च सर्वगौ ॥
कर्णनासामुखशिरोव्रणे भग्ने भगन्दरे ॥ ४६ ॥
ग्रन्थ्यादौ क्षुद्ररोगेषु गुह्यरोगे पृथग् द्वयम् ॥
विषे भुजङ्गे कीटेषु मूषकेषु रसायने ॥४७ ॥

चत्वारिंशोऽनपत्यानामध्यायो बीजपोषणः ॥
इत्यध्यायशतं विंशं षड्भिः स्थानैरुदीरितम् ॥ ४८ ॥

इत्यष्टाङ्गहृदयसंहितायां सूत्रस्थाने प्रथमोऽध्यायः ॥ १ ॥

## द्वितीयोऽध्यायः ।

अथातो दिनचर्याध्यायं व्याख्यास्यामः ।
ब्राह्मे मुहूर्ते उत्तिष्ठेत् स्वस्थो रक्षार्थमायुषः ॥
शरीरचिन्तां निर्वर्त्य कृतशौचविधिस्ततः ॥ १ ॥
अर्कन्यग्रोधखदिरकरञ्जककुभादिकम् ॥
प्रातर्भुक्त्वा च मृद्वग्रं कषायकटुतिक्तकम् ॥ २ ॥
भक्षयेद्दन्तधवनं दन्तमांसान्यबाधयन् ॥
नाद्यादजीर्णवमथुश्वासकासज्वरार्दिती ॥ ३ ॥
तृष्णास्यपाकहृन्नेत्रशिरःकर्णामयी च तत् ॥
सौवीरमञ्जनं नित्यं हितमक्ष्णोस्ततो भजेत् ॥ ४ ॥
चक्षुस्तेजोमयं तस्य विशेषात् श्लेष्मणो भयम् ॥
योजयेत् सप्तरात्रेऽस्मात्स्रावणार्थे रसाञ्जनम् ॥ ५ ॥
ततो नावनगण्डूषधूमताम्बूलभाग्भवेत् ॥
ताम्बूलं क्षतपित्तास्रूक्षोत्कुपितचक्षुषाम् ॥ ६ ॥
विषमूर्च्छामदार्तानामपथ्यं शोषिणामपि ॥
अभ्यङ्गमाचरेन्नित्यं स जराश्रमवातहा ॥ ७ ॥

दृष्टिप्रसादपुष्ट्यायु स्वप्नसुत्वक्त्वदार्ढ्यकृत् ॥
शिरःश्रवणपादेषु त विशेषेण शीलयेत् ॥ ८ ॥
वर्ज्योऽभ्यङ्ग. कफग्रस्तकृतसशुद्ध्यजीर्णिभि ॥
लाघव कर्म्मसामर्थ्यं दीप्तोऽग्निर्मेदस. क्षय ॥ ९ ॥
विभक्तघनगात्रत्व व्यायामादुपजायते ॥
वातपित्तामयी वालो वृद्धोऽजीर्णी च त त्यजेत् ॥ १० ॥
अर्द्धशक्त्या निषेव्यस्तु वलिभि स्निग्धभोजिभिः ॥
शीतकाले वसन्ते च मन्दमेव ततोऽन्यदा ॥ ११ ॥
तं कृत्वाऽनुसुख देहं मर्दयेच्च समन्तत. ॥
तृष्णाक्षयः प्रतमको रक्तपित्त श्रम क्लम ॥ १२ ॥
अतिव्यायामत. कासो ज्वरश्छर्दिश्च जायते ॥
व्यायामजागराध्वस्त्रीहास्यभाष्यादिसाहसम् ॥ १३ ॥
गज सिंह इवाकर्षन् भजन्नति विनश्यति ॥
उद्वर्तन कफहर मेदसः प्रविलापनम् ॥ १४ ॥
स्थिरीकरणमङ्गाना त्वक्प्रसादकर परम् ॥
दीपन वृष्यमायुष्य स्नानमूर्जावलप्रदम् ॥ १५ ॥
कण्डूमलश्रमस्वेदतन्द्रातृड्दाहपाप्मजित् ॥
उष्णाम्बुनाध कायस्य परिषेको वलावह. ॥ १६ ॥
तेनैव चोत्तमाङ्गस्य वलहृत् केशचक्षुषाम् ॥
स्नानमर्दितनेत्रास्यकर्णरोगातिसारिषु ॥ १७ ॥
आध्मानपीनसाजीर्णभुक्तवत्सु च गर्हितम् ॥
जीर्णे हित मित चाद्यान्न वेगानीरयेद्बलात् ॥ १८ ॥

न वेगितोऽन्यकार्य्यः स्यान्नाजित्वा साध्यमामयम् ॥
सुखार्थाः सर्वभूतानां मताः सर्वाः प्रवृत्तयः ॥ १९ ॥
सुखञ्च न विना धर्मात्तस्माद्धर्मपरो भवेत् ॥
भक्त्या कल्याणमित्राणि सेवेतेतरदूरगः ॥ २० ॥
हिंसास्तेयान्यथाकामं पैशुन्यं परुषानृते ॥
सम्भिन्नालापव्यापादमभिध्यादृग्विपर्य्ययम् ॥ २१ ॥
पापं कर्मेति दशधा कायवाङ्मानसैस्त्यजेत् ॥
अवृत्तिव्याधिशोकार्त्ताननुवर्तेत शक्तितः ॥ २२ ॥
आत्मवत् सततं पश्येदपि कीटपिपीलिकम् ॥
अर्चयेद्देवगोविप्रवृद्धवैद्यनृपातिथीन् ॥ २३ ॥
विमुखान्नार्थिनः कुर्य्यान्नावमन्येत नाक्षिपेत् ॥
उपकारप्रधानः स्यादपकारपरेऽप्यरौ ॥ २४ ॥
सम्पद्विपत्स्वेकमना हेतावीर्ष्येत् फले न तु ॥
काले हितं मितं ब्रूयादविसंवादि पेशलम् ॥ २५ ॥
पूर्वाभिभाषी सुमुखः सुशीलः करुणामृदुः ॥
नैकः सुखी न सर्वत्र विश्रब्धो न च शङ्कितः ॥ २६ ॥
न कञ्चिदात्मनः शत्रुं नात्मानं कस्यचिद्रिपुम् ॥
प्रकाशयेन्नावमानं न च निःस्नेहतां प्रभोः ॥ २७ ॥
जनस्याशयमालक्ष्य यो यथा परितुष्यति ॥
तं तथैवानुवर्तेत पराराधनपण्डितः ॥ २८ ॥
न पीडयेदिन्द्रियाणि न चैतान्यतिलालयेत् ॥
त्रिवर्गशून्यं नारम्भं भजेत्तञ्चाविरोधयन् ॥ २९ ॥

अनुयायात्प्रतिपद सर्वधर्मेषु मध्यमाम् ॥
नीचरोमनखश्मश्रुर्निर्मलाऽङ्घ्रिमलायनः ॥ ३० ॥
स्नानशील सुसुरभि सुवेषोऽनुल्वणोज्ज्वल ॥
धारयेत् सतत रत्नसिद्धमन्त्रमहौषधी ॥ ३१ ॥
सातपत्रपदत्राणो विचरेद्युगमात्रदृक् ॥
निशि चात्ययिके कार्य्ये दण्डी मौली सहायवान् ॥३२॥
चैत्यपूज्यध्वजाशस्तच्छायाभस्मतुषाशुचीन् ॥
नाक्रामेच्छर्करालोष्टबलिस्नानभुवोऽपि च ॥ ३३ ॥
नदी तरेन्न बाहुभ्या नाग्निस्कन्धमभिव्रजेत् ॥
सन्दिग्धनाव वृक्षञ्च नारोहेद्दुष्टयानवत् ॥ ३४ ॥
नासवृतमुख कुर्य्यात् क्षुतिहास्यविजृम्भणम् ॥
नासिका न विकुष्णीयान्नाकस्माद्विलिखेद्भुवम् ॥ ३५ ॥
नाङ्गैश्चेष्टेत विगुण नासीतोत्कटकस्थित ॥
देहवाक्चेतसा चेष्टा प्राक् श्रमाद्विनिवर्त्तयेत् ॥ ३६ ॥
नोर्द्ध्वजानुश्चिरं तिष्ठेन्नक्त सेवेत न द्रुमम् ॥
तथा चत्वरचैत्यान्तचतुष्पथसुरालयान् ॥ ३७ ॥
सूनाटवीशून्यगृहश्मशानानि दिवापि च ॥
सर्वथेक्षेत नादित्य न भारं शिरसा वहेत् ॥ ३८ ॥
नेक्षेत प्रतत सूक्ष्मदीप्तामेध्याप्रियाणि च ॥
मद्यविक्रयसन्धानदानादानानि नाचरेत् ॥ ३९ ॥
पुरोवातातपरजस्तुषारपरुषानिलान् ॥
अनृजुक्षवथूद्गारकासस्वप्नान्नमैथुनम् ॥ ४० ॥

कूलच्छायानृपद्विष्टव्यालदंष्ट्रिविषाणिनः ॥
हीनानार्य्यातिनिपुणसेवां विग्रहमुत्तमैः ॥ ४१ ॥
सन्ध्यास्वभ्यवहारस्त्रीस्वप्नाध्ययनचिन्तनम् ॥
शत्रुसत्रगणाकीर्णगणिकापणिकाशनम् ॥ ४२ ॥
गात्रवक्त्रनखैर्वाद्यं हस्तकेशावधूननम् ॥
तोयाग्निपूज्यमध्येन यानं धूमं शवाश्रयम् ॥ ४३ ॥
मद्यातिसक्तिं विश्रम्भस्वातन्त्र्ये स्त्रीषु च त्यजेत् ॥
आचार्य्यः सर्वचेष्टासु लोक एव हि धीमतः ॥ ४४ ॥
अनुकुर्य्यात्तमेवातो लौकिकेऽर्थे परीक्षकः ॥
आर्द्रसन्तानतात्यागः कायवाक्चेतसां दमः ॥ ४५ ॥
स्वार्थबुद्धिः परार्थेषु पर्याप्तमिति सद्व्रतम् ॥
नक्तंदिनानि मे यान्ति कथम्भूतस्य सम्प्रति ॥ ४६ ॥
दुःखभाङ् न भवत्येव नित्यं सन्निहितस्मृतिः ॥
इत्याचारः समासेन सम्प्राप्नोति समाचरन् ॥ ४७ ॥
आयुरारोग्यमैश्वर्य्यं यशो लोकांश्च शाश्वतान् ॥ ४८ ॥

इत्यष्टाङ्गहृदयसंहितायां सूत्रस्थाने द्वितीयोऽध्यायः ॥ २ ॥

---

## तृतीयोऽध्यायः ।

अथात ऋतुचर्य्याध्यायं व्याख्यास्यामः ।
मासैर्द्विसंख्यैर्माघाद्यैः क्रमात् षडृतवः स्मृताः ॥
शिशिरोऽथ वसन्तश्च ग्रीष्मवर्षाशरद्धिमाः ॥ १ ॥

शिशिराद्यास्त्रिभिस्तैस्तु विद्यादयनमुत्तरम् ॥
आदानञ्च तदादत्ते नृणां प्रतिदिनं बलम् ॥ २ ॥
तस्मिन् ह्यत्यर्थतीक्ष्णोष्णरूक्षा मार्गस्वभावतः ॥
आदित्यपवनाः सौम्यान् क्षपयन्ति गुणान् भुवः ॥ ३ ॥
तिक्तः कषायः कटुको बलिनोऽत्र रसाः क्रमात् ॥
तस्मादादानमाग्नेयमृतवो दक्षिणायनम् ॥ ४ ॥
वर्षादयो विसर्गश्च यद्बलं विसृजत्ययम् ॥
सौम्यत्वादत्र सोमो हि बलवान् हीयते रविः ॥ ५ ॥
मेघवृष्ट्यनिलैः शीतैः शान्ततापे महीतले ॥
स्निग्धाश्चेहाम्ललवणमधुरा बलिनो रसाः ॥ ६ ॥
शीतेऽग्र्यं वृष्टिघर्मेऽल्पं बलं मध्यन्तु शेषयोः ॥
बलिनः शीतसंरोधाद्धेमन्ते प्रबलोऽनलः ॥ ७ ॥
भवत्यल्पेन्धनो धातून् स पचेद्वायुनेरितः ॥
अतो हिमेऽस्मिन् सेवेत स्वाद्वम्ललवणान् रसान् ॥८॥
दैर्घ्यान्निशानामेतर्हि प्रातरेव बुभुक्षितः ॥
अवश्यकार्य्यं सम्भाव्य यथोक्तं शीलयेदनु ॥ ९ ॥
वातघ्नतैलैरभ्यङ्गं मूर्ध्नि तैलविमर्दनम् ॥
नियुद्धं कुशलैः सार्द्धं पादाघातं च युक्तितः ॥ १० ॥
कषायापहृतस्नेहस्ततः स्नातो यथाविधि ॥
कुङ्कुमेन सदर्पेण प्रदिग्धोऽगुरुधूपितः ॥ ११ ॥
रसान् स्निग्धान् पलं पुष्टं गौडमच्छसुरां सुराम् ॥
गोधूमपिष्टमाषेक्षुक्षीरोत्थविकृतीः शुभाः ॥ १२ ॥

नवमद्यं वसा तैलं शौचकार्ये सुखोदकम् ॥
प्रावाराजिनकौशेयप्रवेणीकौचवास्तृतम् ॥ १३ ॥
उष्णस्वभावैर्लघुभिः प्रावृतः शयनं भजेत् ॥
युक्त्यार्ककिरणान् स्वेदं पादत्राणं च सर्वदा ॥ १४ ॥
पीवरोरुस्तनश्रोण्यः समदाः प्रमदाः प्रियाः ॥
हरन्ति शीतमुष्णाङ्ग्यो धूपकुंकुमयौवनैः ॥ १५ ॥
अंगारतापसन्तप्तगर्भभूवेश्मचारिणः ॥
शीतपारुष्यजनितो न दोषो जातु जायते ॥ १६ ॥
अयमेव विधिः कार्य्यः शिशिरेऽपि विशेषतः ॥
तदा हि शीतमधिकं रौक्ष्यं चादानकालजम् ॥ १७ ॥
कफश्चितो हि शिशिरे वसन्तेऽकांशुतापितः ॥
हत्वाऽग्निं कुरुते रोगानतस्तं त्वरया जयेत् ॥ १८ ॥
तीक्ष्णैर्वमननस्याद्यैर्लघुरूक्षैश्च भोजनैः ॥
व्यायामोद्वर्त्तनाघातैर्जित्वा श्लेष्माणमुल्बणम् ॥ १९ ॥
स्नातोऽनुलिप्तः कर्पूरचन्दनागुरुकुङ्कुमैः ॥
पुराणयवगोधूमक्षौद्रजाङ्गलशूल्यभुक् ॥ २० ॥
सहकाररसोन्मिश्रानास्वाद्य प्रिययार्पितान् ॥
प्रियास्यसङ्गसुरभीन् प्रियानेत्रोत्पलाङ्कितान् ॥ २१ ॥
सौमनस्यकृतो हृद्यान् वयस्यैः सहितः पिबेत् ॥
निर्गदानासवारिष्टसीधुमार्द्वीकमाधवान् ॥ २२ ॥
शृङ्गवेराम्बु साराम्बु मध्वम्बु जलदाम्बु वा ॥
दक्षिणानिलशीतेषु परितो जलवाहिषु ॥ २३ ॥

अदृष्टनष्टसूर्येषु मणिकुट्टिमकान्तिषु ॥
परपुष्टविघुष्टेषु कामकर्म्मान्तभूमिषु ॥ २४ ॥
विचित्रपुष्पवृक्षेषु काननेषु सुगन्धिषु ॥
गोष्ठीकथाभिश्चित्राभिर्मध्याह्नं गमयेत्सुखी ॥ २५ ॥
गुरुशीतदिवास्वप्नस्निग्धाम्लमधुरास्त्यजेत् ॥
तीक्ष्णांशुरतितीक्ष्णांशुर्ग्रीष्मे संक्षिपतीव यत् ॥ २६ ॥
प्रत्यहं क्षीयते श्लेष्मा तेन वायुश्च वर्द्धते ॥
अतोऽस्मिन् पटुकट्वम्लव्यायामार्ककरास्त्यजेत् ॥२७ ॥
भजेन्मधुरमेवान्नं लघुस्निग्धं हिमं द्रवम् ॥
सुशीततोयसिक्ताङ्गो लिह्यात्सक्तून्सशर्करान् ॥ २८ ॥
मद्यं न पेयं पेयं वा स्वल्पं सुबहुवारि वा ॥
अन्यथा शोफशैथिल्यदाहमोहान्करोति तत् ॥ २९ ॥
कुन्देन्दुधवलं शालिमश्नीयाज्जाङ्गलैः पलैः ॥
पिबेद्रसं नातिघनं रसालां रागखाण्डवौ ॥ ३० ॥
पानकं पञ्चसारं वा नवमृद्भाजनास्थितम् ॥
मोचचोचदलैर्युक्तं साम्लं मृन्मयशुक्तिभिः ॥ ३१ ॥
पाटलावासितं चाम्भः सकर्पूरं सुशीतलम् ॥
शशाङ्ककिरणान्भक्ष्यान्रजन्यां भक्षयन्पिबेत् ॥ ३२ ॥
ससितं माहिषं क्षीरं चन्द्रनक्षत्रशीतलम् ॥
अभ्रंकषमहाशालतालरुद्धोष्णरश्मिषु ॥ ३३ ॥
वनेषु माधवीश्लिष्टद्राक्षास्तवकशालिषु ॥
सुगन्धिहिमपानीयसिच्यमानपटालिके ॥ ३४ ॥

कायमाने चिते चूतप्रवालफललम्बिभिः ॥
कदलीदलकह्लारमृणालकमलोत्पलैः ॥ ३५ ॥
कल्पिते कोमलैस्तल्पे हसत्कुसुमपल्लवे ॥
मध्यंदिनेऽर्कतापार्त्तः स्वप्याद्धारागृहेऽथ वा ॥ ३६ ॥
पुस्तस्त्रीस्तनहस्तास्यप्रवृत्तोशीरवारिणि ॥
निशाकरकराकीर्णे सौधपृष्ठे निशासु च ॥ ३७ ॥
आसना स्वस्थचित्तस्य चन्दनार्द्रस्य मालिनः ॥
निवृत्तकामतन्त्रस्य सुसूक्ष्मतनुवाससः ॥ ३८ ॥
जलार्द्रतालवृन्तानि विस्तृताः पद्मिनीपुटाः ॥
उत्क्षेपाश्च मृदूत्क्षेपा जलवर्षिहिमानिलाः ॥ ३९ ॥
कर्पूरमल्लिकामालाहाराः सहरिचन्दनाः ॥
मनोहरकलालापाः शिशवः सारिकाः शुकाः ॥ ४० ॥
मृणालवलयाः कान्ताः प्रोत्फुल्लकमलोज्ज्वलाः ॥
जंगमा इव पद्मिन्यो हरन्ति दयिताः क्लमम् ॥ ४१ ॥
आदानग्लानवपुषामग्निः सन्नोऽपि सीदति ॥
वर्षासु दोषैर्दुष्यन्ति तेऽम्बुलम्ब्यम्बुदेम्बरे ॥ ४२ ॥
सतुषारेण मरुता सहसा शीतलेन च ॥
भूबाष्पेणाम्लपाकेन मलिनेन च वारिणा ॥ ४३ ॥
वह्निनैव च मन्देन तेष्वित्यन्योन्यदूषिषु ॥
भजेत्साधारणं सर्वमूष्मणस्तेजनं च यत् ॥ ४४ ॥
आस्थापनं शुद्धतनुर्जीर्णं धान्यं रसान्कृतान् ॥
जाङ्गलं पिशितं यूषान्मध्वारिष्टं चिरन्तनम् ॥ ४५ ॥

मस्तु सौवर्चलाढ्यं वा पञ्चकोलावचूर्णितम् ॥
दिव्यं कौपं शृतं चाम्भो भोजनं त्वतिदुर्दिने ॥ ४६ ॥
व्यक्ताम्ललवणस्नेहं संशुष्कं क्षौद्रवल्लघु ॥
अपादचारी सुरभिः सततं धूपिताम्बरः ॥ ४७ ॥
हर्म्यपृष्ठे वसेद्बाष्पशीतशीकरवर्जिते ॥
नदीजलोदमन्थाहः स्वप्नायासातपांस्त्यजेत् ॥ ४८ ॥
वर्षाशीतोचिताङ्गानां सहसैवार्करश्मिभिः ॥
तप्तानां सञ्चितं वृष्टौ पित्तं शरदि कुप्यति ॥ ४९ ॥
तज्जयाय घृतं तिक्तं विरेको रक्तमोक्षणम् ॥
तिक्तं स्वादु कषायं च क्षुधितोऽन्नं भजेल्लघु ॥ ५० ॥
शालिमुद्गसिताधात्रीपटोलमधुजाङ्गलम् ॥
तप्तं तप्तांशुकिरणैः शीतं शीतांशुरश्मिभिः ॥ ५१ ॥
समन्तादप्यहोरात्रमगस्त्योदयनिर्विषम् ॥
शुचि हंसोदकं नाम निर्मलं मलजिज्जलम् ॥ ५२ ॥
नाभिष्यन्दि न वा रूक्षं पानादिष्वमृतोपमम् ॥
चन्दनोशीरकर्पूरमुक्तास्रग्वसनोज्ज्वलः ॥ ५३ ॥
सौधेषु सौधधवलां चन्द्रिकां रजनीमुखे ॥
तुषारक्षारसौहित्यदधितैलवसातपान् ॥ ५४ ॥
तीक्ष्णमद्यदिवास्वप्नपुरोवातान्परित्यजेत् ॥
शीते वर्षासु चाद्यांस्त्रीन् वसन्तेऽन्त्यान्रसान्भजेत् ॥५५॥
स्वादु निदाघे शरदि स्वादुतिक्तकषायकान् ॥
शरद्वसन्तयो रूक्षं शीतं घर्मघनान्तयोः ॥ ५६ ॥

अन्नपानं समासेन विपरीतमतोऽन्यदा ॥
नित्यं सर्वरसाभ्यासः सत्त्वाधिक्यमृतावृतौ ॥ ५७ ॥
ऋत्वोरन्त्यादिसप्ताहावृतुसंधिरिति स्मृतः ॥
तत्र पूर्वो विधिस्त्याज्यः सेवनीयोऽपरः क्रमात् ॥५८॥
असात्म्यजा हि रोगाः स्युः सहसा त्यागशीलनात् ॥५९॥

इत्यष्टाङ्गहृदयसंहितायां सूत्रस्थाने तृतीयोऽध्यायः ॥ ३ ॥

## चतुर्थोऽध्यायः ।



अथातो रोगानुत्पादनीयाध्यायं व्याख्यास्यामः ॥
वेगान्न धारयेद्वातविण्मूत्रक्षवतृट्क्षुधाम् ॥
निद्राकासश्रमश्वासजृम्भाश्रुच्छर्दिरेतसाम् ॥ १ ॥
अधोवातस्य रोधेन गुल्मोदावर्तरुक्क्लमाः ॥
वातमूत्रशकृत्सङ्गदृष्ट्यग्निवधहृद्गदाः ॥ २ ॥
स्नेहस्वेदविधिस्तत्र वर्तयो भोजनानि च ॥
पानानि बस्तयश्चैव शस्तं वातानुलोमनम् ॥ ३ ॥
शकृतः पिण्डिकोद्वेष्टप्रतिश्यायशिरोरुजः ॥
ऊर्ध्ववायुः परीकर्तो हृदयस्योपरोधनम् ॥ ४ ॥
मुखेन विट्प्रवृत्तिश्च पूर्वोक्ताश्चामयाः स्मृताः ॥
अङ्गभङ्गाश्मरीबस्तिमेढ्रवंक्षणवेदनाः ॥ ५ ॥
मूत्रस्य रोधात्पूर्वे च प्रायो रोगास्तदौषधम् ॥
वर्त्यभ्यङ्गावगाहाश्च स्वेदनं बस्तिकर्म च ॥ ६ ॥

अन्नपानं च विड्भेदि विड्रोधोत्थेषु यक्ष्मसु ॥
मूत्रजेषु च पाने च प्राग्भक्तं शस्यते घृतम् ॥ ७ ॥
जीर्णान्तिकं चोत्तमया मात्रया योजनाद्द्वयम् ॥
अवपीडकमेतच्च संज्ञितं धारणात्पुनः ॥ ८ ॥
उद्गारस्यारुचिः कम्पो विबन्धो हृदयोरसोः ॥
आध्मानकासहिध्माश्च हिध्मावत्तत्र भेषजम् ॥ ९ ॥
शिरोर्तीन्द्रियदौर्बल्यमन्यास्तम्भार्दितं क्षुतेः ॥
तीक्ष्णधूमाञ्जनाघ्राणनावनार्कविलोकनैः ॥ १० ॥
प्रवर्त्तयेत् क्षुतिं सक्तां स्नेहस्वेदौ च शीलयेत् ॥
शोषाङ्गसादबाधिर्यसंमोहभ्रमहृद्गदाः ॥ ११ ॥
तृष्णाया निग्रहात्तत्र शीतः सर्वो विधिर्हितः ॥
अंगभंगारुचिग्लानिकार्श्यशूलभ्रमाः क्षुधः ॥ १२ ॥
तत्र योज्यं लघु स्निग्धमुष्णमल्पं च भोजनम् ॥
निद्राया मोहमूर्द्धाक्षिगौरवालस्यजृम्भिकाः ॥ १३ ॥
अंगमर्दश्च तत्रेष्टः स्वप्नः संवाहनानि च ॥
कासस्य रोधात्तद्वृद्धिः श्वासारुचिहृदामयाः ॥ १४ ॥
शोषो हिध्मा च कार्योऽत्र कासहा सुतरां विधिः ॥
गुल्महृद्रोगसम्मोहाः श्रमश्वासाद्विधारितात् ॥ १५ ॥
हितं विश्रमणं तत्र वातघ्नश्च क्रियाक्रमः ॥
जृम्भायाः क्षववद्रोगाः सर्वश्चानिलजिद्विधिः ॥ १६ ॥
पीनसाक्षिशिरोहृद्रुग्मन्यास्तम्भारुचिभ्रमाः ॥
सगुल्मा बाष्पतस्तत्र स्वप्नो मद्यं प्रियाः कथाः ॥ १७ ॥

विसर्पकोठकुष्ठाक्षिकण्डूपाण्ड्वामयज्वराः ॥
सकासश्वासहृल्लासव्यंगश्वयथवो वमेः ॥ १८ ॥
गण्डूषधूमानाहारान् रूक्षं भुक्त्वा तदुद्वमः ॥
व्यायामः स्रुतिरस्रस्य शस्तं चात्र विरेचनम् ॥ १९ ॥
सक्षारलवणं तैलमभ्यंगार्थं च शस्यते ॥
शुक्रात्तत्स्रवणं गुह्यवेदनाश्वयथुर्ज्वरः ॥ २० ॥
हृद्व्यथामूत्रसंगांगभंगवृद्ध्यश्मषण्ढताः ॥
ताम्रचूडसुराशालिबस्त्यभ्यंगावगाहनम् ॥ २१ ॥
बस्तिशुद्धिकरैः सिद्धं भजेत् क्षीरं प्रियाः स्त्रियः ॥
तृट्शूलार्तं त्यजेत् क्षीणं विड्वमं वेगरोधिनम् ॥ २२ ॥
रोगाः सर्वेऽपि जायन्ते वेगोदीरणधारणैः ॥
निर्दिष्टं साधनं तत्र भूयिष्ठं ये तु तान् प्रति ॥ २३ ॥
ततश्चानेकधा प्रायः पवनो यत् प्रकुप्यति ॥
अन्नपानौषधं तत्र युञ्जीतातोऽनुलोमनम् ॥ २४ ॥
धारयेत्तु सदा वेगान् हितैषी प्रेत्य चेह च ॥
लोभेर्ष्याद्वेषमात्सर्यरागादीनां जितेन्द्रियः ॥ २५ ॥
यतेत च यथाकालं मलानां शोधनं प्रति ॥
अत्यर्थसञ्चितास्ते हि क्रुद्धाः स्युर्जीवितच्छिदः ॥ २६ ॥
दोषाः कदाचित् कुप्यन्ति जिता लङ्घनपाचनैः ॥
ये तु संशोधनैः शुद्धा न तेषां पुनरुद्भवः ॥ २७ ॥
यथाक्रमं यथायोगमत ऊर्ध्वं प्रयोजयेत् ॥
रसायनानि सिद्धानि वृष्ययोगांश्च कालवित् ॥ २८ ॥

भेषजक्षपिते पथ्यमाहारैर्बृंहणं क्रमात् ॥
शालिषष्टिकगोधूममुद्गमांसघृतादिभिः ॥ २९ ॥
हृद्यदीपनभैषज्यसंयोगाद्रुचिपक्तिदैः ॥
साभ्यङ्गोद्वर्त्तनस्नाननिरूहस्नेहबस्तिभिः ॥ ३० ॥
तथा स लभते शर्म सर्वपावकपाटवम् ॥
धीवर्णेन्द्रियवैमल्यं वृषतां दैर्घ्यमायुषः ॥ ३१ ॥
ये भूतविषवाय्वग्निक्षतभङ्गादिसम्भवाः ॥
कामक्रोधभयाद्याश्च ते स्युरागन्तवो गदाः ॥ ३२ ॥
त्यागः प्रज्ञापराधानामिन्द्रियोपशमः स्मृतिः ॥
देशकालात्मविज्ञानं सद्वृत्तस्यानुवर्तनम् ॥ ३३ ॥
अनुत्पत्त्यै समासेन विधिरेष प्रदर्शितः ॥
निजागन्तुविकाराणामुत्पन्नानां च शान्तये ॥ ३४ ॥
शीतोद्भवं दोषचयं वसन्ते विशोधयन् ग्रीष्मजमभ्रकाले ॥
घनात्यये वार्षिकमाशु सम्यक् प्राप्नोति रोगानृतुजान्न जातु ३५
नित्यं हिताहारविहारसेवी समीक्ष्यकारी विषयेष्वसक्तः ॥
दाता समः सत्यपरः क्षमावानाप्तोपसेवी च भवत्यरोगः ॥३६॥

इत्यष्टाङ्गहृदयसंहितायां सूत्रस्थाने चतुर्थोऽध्यायः ॥ ४ ॥

## पंचमोऽध्यायः ।

अथातो द्रवद्रव्यविज्ञानीयमध्यायं व्याख्यास्यामः ॥
जीवनं तर्पणं हृद्यं ह्लादि बुद्धिप्रबोधनम् ॥
तन्वव्यक्तरसं मृष्टं शीतं लघ्वमृतोपमम् ॥ १ ॥

गङ्गाम्बु नभसो भ्रष्टं स्पृष्टं त्वर्केन्दुमारुतैः ॥
हिताहितत्वे तद्भूयो देशकालावपेक्षते ॥ २ ॥
घनाभिवृष्टममलं शाल्यन्नं राजतस्थितम् ॥
अक्लिन्नमविवर्णं च तत्पेयं गाङ्गमन्यथा ॥ ३ ॥
सामुद्रं तन्न पातव्यं मासादाश्वयुजाद्विना ॥
ऐन्द्रमम्बु सुपात्रस्थमविपन्नं सदा पिबेत् ॥ ४ ॥
तदभावे च भूयिष्ठमन्तरिक्षानुकारि यत् ॥
शुचि पृथ्वीस्थितेश्वेते देशेऽर्कपवनाहतम् ॥ ५ ॥
न पिबेत्पङ्कशैवालतृणपर्णाविलास्तृतम् ॥
सूर्येन्दुपवनादृष्टमभिवृष्टं घनं गुरु ॥ ६ ॥
फेनिलं जन्तुमत्तप्तं दन्तग्राह्यतिशैत्यतः ॥
अनार्त्तवं च यद्दिव्यमार्तवं प्रथमं च यत् ॥ ७ ॥
लूतादितन्तुविण्मूत्रविषसंश्लेषदूषितम् ॥
पश्चिमोदधिगाः शीघ्रवहा याश्चामलोदकाः ॥ ८ ॥
पथ्याः समासात्ता नद्यो विपरीतास्त्वतोऽन्यथा ॥
उपलास्फालनाक्षेपविच्छेदैः खेदितोदकाः ॥ ९ ॥
हिमवन्मलयोद्भूताः पथ्यास्ता एव च स्थिराः ॥
कृमिश्लीपदहृत्कण्ठशिरोरोगान् प्रकुर्वते ॥ १० ॥
प्राच्याऽऽवन्त्यापरान्तोत्था दुर्नामानि महेन्द्रजाः ॥
उदरश्लीपदातंकान् सह्यविन्ध्योद्भवाः पुनः ॥ ११ ॥
कुष्ठपाण्डुशिरोरोगान् दोषघ्नाः पारियात्रजाः ॥
बलपौरुषकारिण्यः सागराम्भस्त्रिदोषकृत् ॥ १२ ॥

विद्यात् कूपतडागादीन् जाङ्गलानूपशैलतः ॥
नाम्बु पेयमशक्त्या वा स्वल्पमल्पाग्निगुल्मिभिः ॥ १३ ॥
पाण्डूदरातिसारार्शोग्रहणीदोषशोथिभिः ॥
ऋते शरन्निदाघाभ्यां पिबेत् स्वस्थोऽपि चाल्पशः ॥१४॥
समस्थूलकृशाभक्तमध्यान्तप्रथमाम्बुपाः ॥
शीतं मदात्ययग्लानिमूर्च्छाछर्दिश्रमभ्रमान् ॥ १५ ॥
तृष्णोष्णदाहपित्तास्रविषाण्यम्बु नियच्छति ॥
दीपनं पाचनं कण्ठ्यं लघूष्णं वस्तिशोधनम् ॥ १६ ॥
हिध्माध्मानानिलश्लेष्मसद्यःशुद्धे नवज्वरे ॥
कासामपीनसश्वासपार्श्वरुक्षु च शस्यते ॥ १७ ॥
अनभिस्यन्दि लघु च तोयं क्वथितशीतलम् ॥
पित्तयुक्ते हितं दोषे व्युषितं तत्रिदोषकृत् ॥ १८ ॥
नालिकेरोदकं स्निग्धं स्वादु वृष्यं हिमं लघु ॥
तृष्णापित्तानिलहरं दीपनं वस्तिशोधनम् ॥ १९ ॥
वर्षासु दिव्यनादेये परं तोये वरावरे ॥
स्वादुपाकरसं स्निग्धमोजस्यं धातुवर्धनम् ॥ २० ॥
वातपित्तहरं वृष्यं श्लेष्मलं गुरु शीतलम् ॥
प्रायः पयोऽत्र गव्यं तु जीवनीयं रसायनम् ॥ २१ ॥
क्षतक्षीणहितं मेध्यं बल्यं स्तन्यकरं सरम् ॥
श्रमभ्रममदालक्ष्मीश्वासकासातितृट्क्षुधः ॥ २२ ॥
जीर्णज्वरं मूत्रकृच्छ्रं रक्तपित्तं च नाशयेत् ॥
हितमत्यग्न्यनिद्रेभ्यो गरीयो माहिषं हिमम् ॥ २३ ॥

अल्पाम्बुपानव्यायामकटुतिक्ताशनैर्लघु ॥
आजं शोषज्वरश्वासरक्तपित्तातिसारजित् ॥ २४ ॥
ईषद्रुक्षोष्णलवणमौष्ट्रकं दीपनं लघु ॥
शस्तं वातकफानाहक्रिमिशोफोदरार्शसाम् ॥ २५ ॥
मानुषं वातपितासृगभिघाताक्षिरोगजित् ॥
तर्पणाश्च्योतनैर्नस्यैरहृद्यं तूष्णमाविकम् ॥ २६ ॥
वातव्याधिहरं हिध्माश्वासपित्तकफप्रदम् ॥
हस्तिन्याः स्थैर्य्यकृद्बाढमुष्णं त्वेकशफं लघु ॥ २७ ॥
शाखावातहरं साम्ललवणं जडताकरम् ॥
पयोऽभिस्यन्दि गुर्वामं युक्त्या शृतमतोऽन्यथा ॥ २८ ॥
भवेद्गरीयोऽतिशृतं धारोष्णममृतोपमम् ॥
अम्लपाकरसं ग्राहि गुरूष्णं दधि वातजित् ॥ २९ ॥
मेदःशुक्रबलश्लेष्मपित्तरक्ताग्निशोफकृत् ॥
रोचिष्णु शस्तमरुचौ शीतके विषमज्वरे ॥ ३० ॥
पीनसे मूत्रकृच्छ्रे च रूक्षं तु ग्रहणीगदे ॥
नैवाद्यान्निशि नैवोष्णं वसन्तोष्णशरत्सु न ॥ ३१ ॥
नामुद्गसूपं नाक्षौद्रं तन्नाघृतसितोपलम् ॥
न चानामलकं नापि नित्यं नामन्दमन्यथा ॥ ३२ ॥
ज्वरासृक्पित्तवीसर्पकुष्ठपांडुभ्रमप्रदम् ॥
तक्रं लघु कषायाम्लं दीपनं कफवातजित् ॥ ३३ ॥
शोफोदरार्शोग्रहणीदोषमूत्रग्रहारुचीः ॥
प्लीहगुल्मघृतव्यापद्गरपाण्ड्वामयाञ्जयेत् ॥ ३४ ॥

तद्वन्मस्तु सर स्रोत शोधि विष्टम्भजिल्लघु ॥
नवनीतं नवं वृष्य शीत वर्णवलाग्निकृत् ॥ ३५ ॥
संग्राहि वातपित्तासृक्क्षयाशोर्ऽर्दितकासजित् ॥
क्षीरोद्भव तु सग्राहि रक्तपित्ताक्षिरोगजित् ॥ ३६ ॥
शस्त धीस्मृतिमेधाग्निवलायु शुक्रचक्षुपाम् ॥
वालवृद्धप्रजाकान्तिसौकुमार्य्यस्वरार्थिनाम् ॥ ३७ ॥
क्षतक्षीणपरीसर्पशस्त्राग्निग्लपितात्मनाम् ॥
वातपित्तविषोन्मादशोपालक्ष्मीज्वरापहम् ॥ ३८ ॥
स्नेहानामुत्तम शीत वयस. स्थापनं परम् ॥
सहस्रवीर्य्य विधिभिर्घृत कर्मसहस्रकृत् ॥ ३९ ॥
मदापस्मारमूर्च्छायशिर कर्णाक्षियोनिजान् ॥-
पुराण जयति व्याधीन् व्रणशोधनरोपणम् ॥ ४० ॥
वल्या. किलाटपीयूषकूर्चिकामोरणादय ॥
शुक्रनिद्राकफकरा विष्टम्भिगुरुदोषला. ॥ ४१ ॥
गव्ये क्षीरघृते श्रेष्ठे निन्दिते चाविसम्भवे ॥
इक्षो रसो गुरु. स्निग्धो वृहण. कफमूत्रकृत् ॥ ४२ ॥
वृष्यः शीतोऽस्रपित्तघ्नः स्वादुपाकरस. सर. ॥
सोऽग्रे सलवणो दन्तपीडित. शर्करासम. ॥ ४३ ॥
मूलाग्रजन्तुजग्धादिपीडनान्मलसङ्करात् ॥
किञ्चित्काल विधृत्वा च विकृति याति यान्त्रिक. ॥४४॥
विदाही गुरुर्विष्टम्भी तेनासौ तत्र पौण्ड्रक. ॥
शैत्यप्रसादमाधुर्यैर्वरस्तमनुवाशिकः ॥ ४५ ॥

शातपर्वककान्तारनैपालाद्यास्ततः क्रमात् ॥
सक्षाराः सकषायाश्च सोष्णाः किञ्चिद्विदाहिनः ॥ ४६ ॥
फाणितं गुर्वभिष्यन्दि चयकृन्मूत्रशोधनम् ॥
नातिश्लेष्मकरो धौतः सृष्टमूत्रशकृद्गुडः ॥ ४७ ॥
प्रभूतकृमिमज्जासृङ्मेदोमांसकफोऽपरः ॥
हृद्यः पुराणः पथ्यश्च नवः श्लेष्माग्निसादकृत् ॥ ४८ ॥
वृष्याः क्षतक्षीणहिता रक्तपित्तानिलापहाः ॥
मत्स्यण्डिकाखण्डसिताः क्रमेण गुणवत्तमाः ॥ ४९ ॥
तद्गुणा तिक्तमधुरा कषाया या सशर्करा ॥
दाहतृट्छर्दिमूर्च्छासृक्पित्तघ्न्यः सर्वशर्कराः ॥ ५० ॥
शर्करेक्षुविकाराणां फाणितं च वरावरे ॥
चक्षुष्यं छेदि तृट्श्लेष्मविषहिध्मास्रपित्तनुत् ॥ ५१ ॥
मेहकुष्ठकृमिच्छर्दिश्वासकासातिसारनुत् ॥
व्रणशोधनसन्धानरोपणं वातलं मधु ॥ ॥ ५२ ॥
रूक्षं कषायमधुरं तत्तुल्या मधुशर्करा ॥
उष्णमुष्णार्त्तमुष्णे च युक्तं चोष्णैर्निहन्ति तत् ॥५३॥
प्रच्छर्दने निरूहे च मधूष्णं न निवार्य्यते ॥
अलब्धपाकमाश्वेव तयोर्यस्मान्निवर्त्तते ॥ ५४ ॥
तैलं स्वयोनिवत्तत्र मुख्यं तीक्ष्णं व्यवायि च ॥
त्वग्दोषकृदचक्षुष्यंसूक्ष्मोष्णं कफकृन्न च ॥ ५५ ॥
कृशानां बृंहणायालं स्थूलानां कर्शनाय च ॥
बद्धविट्कं कृमिघ्नं च संस्कारात् सर्वदोषजित् ॥ ५६ ॥

सतिक्तोष्णमैरण्ड च तैल स्वादु सर गुरु ॥
वर्ध्मगुल्मानिलकफानुदर विषमज्वरम् ॥ ५७ ॥
रुक्शोफौ च कटीगुह्यकोष्ठपृष्ठाश्रयौ जयेत् ॥
तीक्ष्णोष्ण पिच्छिलं विस्रं रक्तैरण्डोद्भव त्वति ॥ ५८ ॥
कटूष्ण सार्षप तीक्ष्ण कफशुक्रानिलापहम् ॥
लघुपित्तास्रकृत्कोठकुष्ठार्शोव्रणजंतुजित् ॥ ५९ ॥
आक्षं स्वादु हिमं केश्यं गुरु पित्तानिलापहम् ॥
नात्युष्णं निम्बज तिक्त कृमिकुष्ठकफप्रणुत् ॥ ६० ॥
उमाकुसुम्भज़ चोष्णं त्वग्दोषकफपित्तकृत् ॥
वसा मज्जा च वातघ्नौ वलपित्तकफप्रदौ ॥ ६१ ॥
मांसानुगस्वरूपौ च विद्यान्मेदोऽपि ताविव ॥
दीपन रोचन मद्यं तीक्ष्णोष्ण तुष्टिपुष्टिदम् ॥ ६२ ॥
सस्वादुतिक्तकटुकमम्लपाकरस सरम् ॥
सकषायं स्वरारोग्यप्रतिभावर्णकृल्लघु ॥ ६३ ॥
नष्टनिद्रातिनिद्रेभ्यो हित पित्तास्रदूषणम् ॥
कृशस्थूलहित रूक्षं सूक्ष्म स्रोतोविशोधनम् ॥ ६४ ॥
वातश्लेष्महर युक्त्या पीत विषवदन्यथा ॥
गुरु त्रिदोषजनन नव जीर्णमतोऽन्यथा ॥ ६५ ॥
पेयं नोष्णोपचारेण न विरक्तक्षुधातुरैः ॥
नात्यर्थतीक्ष्णमृद्वल्पसंभार कलुष न च ॥ ६६ ॥
गुल्मोदरार्शोग्रहणीशोषहृत् स्नेहनी गुरुः ॥
सुराऽनिलघ्नी मेदोऽसृक्स्तन्यमूत्रकफावहा ॥ ६७ ॥

तद्गुणा वारुणी हृद्या लघुतीक्ष्णा निहन्ति च ॥
शूलकासवमिश्वासविबन्धाध्मानपीनसान् ॥ ६८ ॥
नातितीव्रमदा लघ्वी पथ्या वैभीतकी सुरा ॥
व्रणे पाण्ड्वामये कुष्ठे न चात्यर्थं विरुध्यते ॥ ६९ ॥
यथाद्रव्यगुणोऽरिष्टः सर्वमद्यगुणाधिकः ॥
ग्रहणीपाण्डुकुष्ठार्शःशोफशोषोदरज्वरान् ॥ ७० ॥
हन्ति गुल्मकृमिप्लीहान् कषायः कटुवातलः ॥
मार्द्वीकं लेखनं हृद्यं नात्युष्णं मधुरं सरम् ॥ ७१ ॥
अल्पपित्तानिलं पाण्डुमेहार्शःकृमिनाशनम् ॥
अस्मादल्पान्तरगुणं खार्जूरं वातलं गुरु ॥ ७२ ॥
शार्करः सुरभिः स्वादुर्हृद्यो नातिमदो लघुः ॥
सृष्टमूत्रशकृद्वातो गौडस्तर्पणदीपनः ॥ ७३ ॥
वातपित्तकरः सीधुः स्नेहश्लेष्मविकारहा ॥
मेदःशोफोदरार्शोघ्नस्तत्र पक्वरसो वरः ॥ ७४ ॥
छेदी मध्वासवस्तीक्ष्णो मेहपीनसकासजित् ॥
रक्तपित्तकफोत्क्लेदि शुक्तं वातानुलोमनम् ॥ ७५ ॥
भृशोष्णतीक्ष्णरूक्षाम्लहृद्यं रुचिकरं सरम् ॥
दीपनं शिशिरस्पर्शं पाण्डुदृक्कृमिनाशनम् ॥ ७६ ॥
गुडेक्षुमद्यमार्द्वीकशुक्तं लघु यथोत्तरम् ॥
कन्दमूलफलाद्यं च तद्वद्विद्यात्तदासुतम् ॥ ७७ ॥
शाण्डाकी चासुतं चान्यत्कालाम्लं रोचनं लघु ॥
धान्याम्लं भेदि तीक्ष्णोष्णं पित्तकृत्स्पर्शशीतलम ॥७८॥

श्रमक्लमहर रुच्य दीपनं वस्तिशूलनुत् ॥
शस्तमास्थापने हृद्यं लघु वातकफापहम् ॥ ७९ ॥
मूत्र गोजाविमहिषीगजाश्वोष्ट्रखरोद्भवम् ॥
पित्तलं रूक्षतीक्ष्णोष्ण लवणानुरस कटु ॥ ८० ॥
कृमिशोफोदरानाहशूलपाण्डुकफानिलान् ॥
गुल्मारुचिविषश्वित्रकुष्ठार्शांसि जयेल्लघु ॥ ८१ ॥
तोयक्षीरेक्षुतैलाना वर्गैर्मद्यस्य च क्रमात् ॥
इति द्रवैकदेशोऽयं यथास्थूलमुदाहृत ॥ ८२ ॥

इत्यष्टाङ्गहृदयसहिताया सूत्रस्थान पञ्चमोऽध्याय ॥ ५ ॥

---

## षष्ठोऽध्यायः ।

अथातोऽन्नस्वरूपविज्ञानीयमध्याय व्याख्यास्याम. ॥
रक्तो महान् सकलमस्तूर्णक शकुनाहृत ॥
सारामुखो दीर्घशूको रोध्रशूक' सुगन्धक. ॥ १ ॥
पतगास्तपनीयाश्च ये चान्ये शालय शुभा. ॥
स्वादुपाकरसा' स्निग्धा वृष्या बद्धाल्पवर्चस. ॥ २ ॥
कषायानुरसा. पथ्या लघवो मूत्रला हिमा ॥
शूकजेषु वरस्तत्र रक्तस्तृष्णात्रिदोषहा ॥ ३ ॥
महास्तस्यानुकलमस्त चाप्यनु तत परे ॥
यवका हायना पासुवाष्पनैषधकादय ॥ ४ ॥

स्वादूष्णा गुरवः स्निग्धाः पाकेऽम्लाः श्लेष्मपित्तलाः ॥
सृष्टमूत्रपुरीषाश्च पूर्वंपूर्वं च निन्दिताः ॥ ५ ॥
स्निग्धो ग्राही गुरुः स्वादुस्त्रिदोषघ्नः स्थिरो हिमः ॥
षष्टिको व्रीहिषु श्रेष्ठो गौरश्चासितगौरतः ॥ ६ ॥
ततः क्रमान्महाव्रीहिकृष्णव्रीहिजतूमुखाः ॥
कुक्कुटाण्डकपालाख्यपारावतकशूकराः ॥ ७ ॥
वरकोद्दालकोज्ज्वालचीनशारददर्दुराः ॥
गन्धनाः कुरुविन्दाश्च गुणैरल्पान्तराः स्मृताः ॥ ८ ॥
स्वादुरम्लविपाकोऽन्यो व्रीहिः पित्तकरो गुरुः ॥
बहुमूत्रपुरीषोष्मा त्रिदोषस्त्वेव पाटलः ॥ ९ ॥
कङ्गुकोद्रवनीवारश्यामाकादि हिमं लघु ॥
तृणधान्यं पवनकृल्लेखनं कफपित्तहृत् ॥ १० ॥
भग्नसन्धानकृत्तत्र प्रियङ्गुर्बृंहणी गुरुः ॥
कोरदूषः परं ग्राही स्पर्शशीतो विषापहः ॥ ११ ॥
रूक्षः शीतो गुरुः स्वादुः सरो विड्वातकृद्यवः ॥
वृष्यः स्थैर्यकरो मूत्रमेदःपित्तकफाञ्जयेत् ॥ १२ ॥
पीनसश्वासकासोरुस्तम्भकण्ठत्वगामयान् ॥
न्यूनो यवादनुयवो रूक्षोष्णो वंशजो यवः ॥ १३ ॥
वृष्यः शीतो गुरुः स्निग्धो जीवनो वातपित्तहा ॥
सन्धानकारी मधुरो गोधूमः स्थैर्यकृत्सरः ॥ १४ ॥
पथ्या नन्दीमुखी शीता कषायमधुरा लघुः ॥
मुद्गाढकीमसूरादि शिम्बीधान्यं विबन्धकृत् ॥ १५ ॥

कषायं स्वादु सग्राहि कटुपाक हिम लघु ॥
मेदःश्लेष्मास्रपित्तेषु हितं लेपोपसेकयो ॥ १६ ॥
वरोऽत्र मुद्गोऽल्पचल. कलायस्त्वतिवातल ॥
राजमाषोऽनिलकरो रूक्षो वहुशकृद्गुरु. ॥ १७ ॥
उष्णा' कुलत्था. पाकेऽम्ला. शुक्राश्मश्वासपीनसान् ॥
कासार्शकफवाताश्च घ्नन्ति पित्तास्रदा. परम् ॥ १८ ॥
निष्पावो वातपित्तास्रस्तन्यमूत्रकरो गुरु. ॥
सरो विदाहो दृक्शुक्रकफशोफविषापह' ॥ १९ ॥
माष स्निग्धो वलश्लेष्ममलपित्तकर. सर' ॥
गुरूष्णोऽनिलहा स्वादु. शुक्रवृद्धिविरेककृत् ॥ २० ॥
फलानि माषवद्विद्यात्काकाण्डोलात्मगुप्तयो. ॥
उष्णस्त्वच्यो हिम' स्पर्शे केश्यो वल्यास्तिलो गुरु.॥२१॥
अल्पमूत्र. कटु. पाके मेधाग्निकफपित्तकृत् ॥
स्निग्धोमा स्वादुस्तिक्तोष्णा कफपित्तकरी गुरु. ॥ २२ ॥
दृक्शुक्रहृत् कटु. पाके तद्वद्वीज कुसुम्भजम् ॥
माषोऽत्र सर्वेष्ववरो यवक शूकजेषु च ॥ २३ ॥
नव धान्यमभिष्यन्दि लघु संवत्सरोषितम् ॥
शीघ्रजन्म तथा सूप्यं निस्तुष युक्तिभर्जितम् ॥ २४
मण्डपेयाविलेपीनामोदनस्य च लाघवम् ॥
यथापूर्वं शिवस्तत्र मण्डो वातानुलोमनः ॥ २५ ॥
तृड्ग्लानिदोषशोषघ्न. पाचनो धातुसाम्यकृत् ॥
स्रोतोमार्दवकृत् स्वेदी सन्धुक्षयति चानलम् ॥ २६ ॥

क्षुत्तृष्णाग्लानिदौर्बल्यकुक्षिरोगज्वरापहा ॥
मलानुलोमनी पथ्या पेया दीपनपाचनी ॥ २७ ॥
विलेपी ग्राहिणी हृद्या तृष्णाघ्नी दीपनी हिता ॥
व्रणाक्षिरोगसंशुद्धदुर्बलस्नेहपायिनाम् ॥ २८ ॥
सुधौतः प्रस्रुतः स्विन्नोऽत्यक्तोष्मा चौदनो लघुः ॥
यश्चाग्नेयौषधक्वाथसाधितो भृष्टतण्डुलः ॥ २९ ॥
विपरीतो गुरुः क्षीरमांसाद्यैर्यश्च साधितः ॥
इति द्रव्यक्रियायोगमानाद्यैः सर्वमादिशेत् ॥ ३० ॥
बृंहणः प्रीणनो वृष्यश्चक्षुष्यो व्रणहा रसः ॥
मौद्गस्तु पथ्यः संशुद्धव्रणकण्ठाक्षिरोगिणाम् ॥ ३१ ॥
वातानुलोमी कौलत्थो गुल्मतूनिप्रतूनिजित् ॥
तिलपिण्याकविकृतिः शुष्कशाकं विरूढकम् ॥ ३२ ॥
शाण्डाकी वटकं दृग्घ्नं दोषलं ग्लपनं गुरु ॥
रसाला बृंहणी वृष्या स्निग्धा बल्या रुचिप्रदा ॥ ३३ ॥
श्रमक्षुत्तृट्क्लमहरं पानकं प्रीणनं गुरु ॥
विष्टम्भि मूत्रलं हृद्यं यथाद्रव्यगुणं च तत् ॥ ३४ ॥
लाजास्तृट्छर्द्यतीसारमेहमेदःकफच्छिदः ॥
कासपित्तोपशमना दीपना लघवो हिमाः ॥ ३५ ॥
पृथुका गुरवो बल्याः कफविष्टम्भकारिणः ॥
धाना विष्टम्भिनी रूक्षा तर्पणी लेखनी गुरुः ॥ ३६ ॥
सक्तवो लघवः क्षुत्तृट्श्रमनेत्रामयव्रणान् ॥
घ्नन्ति सन्तर्पणाः पानात् सद्य एव बलप्रदाः ॥ ३७ ॥

नोदकान्तरिता न द्विर्न निशायां न केवलान् ॥
न भुक्त्वा न द्विजैश्छित्त्वा सक्तूनद्यान्न वा बहून् ॥३८॥
पिण्याको ग्लपनो रूक्षो विष्टम्भी दृष्टिदूषणः ॥
वेसवारो गुरुः स्निग्धो बलोपचयवर्द्धनः ॥ ३९ ॥
मुद्गादिजास्तु गुरवो यथाद्रव्यगुणानुगाः ॥
कुकूलकर्परभ्राष्ट्रकन्द्वङ्गारविपाचितान् ॥ ४० ॥
एकयोनील्लँघून्विद्यादपूपानुत्तरोत्तरम् ॥
हरिणैणकुरङ्गर्क्षगोकर्णमृगमातृकाः ॥ ४१ ॥
शशशम्बरचारुष्कशरभाद्या मृगाः स्मृताः ॥
लाववर्त्तीकवार्त्तीररक्तवर्त्मककुक्कुभाः ॥ ४२ ॥
कपिञ्जलोपचक्राख्यचकोरकुरुवाहवः ॥
वर्त्तको वर्त्तिका चैव तित्तिरिः क्रकरः शिखी ॥ ४३ ॥
ताम्रचूडाख्यबकरगोनर्दगिरिवर्तिकाः ॥
तथा शारपदेन्द्राभवारटाश्चेति विष्किराः ॥ ४४ ॥
जीवंजीवकदात्यूहभृगाह्वशुकसारिकाः ॥
लटाकोकिलहारीतकपोतचटकादयः ॥ ४५ ॥
प्रतुदा भेकगोधाहिश्वाविदाद्या विलेशयाः ॥
गोखराश्वतरोष्ट्राश्वद्वीपिसिंहर्क्षवानराः ॥ ४६ ॥
मार्जारमूषकव्याघ्रवृकबभ्रुतरक्षवः ॥
लोपाकजम्बुकश्येनचाषवान्तादिवायसाः ॥ ४७ ॥
शशघ्नीभासकुररगृध्रोलूककुलिङ्गकाः ॥
धूमिका मधुहा चेति प्रसहा मृगपक्षिणः ॥ ४८ ॥

वराहमहिषन्यङ्कुरुरुरोहितवारणाः ॥
सृमरश्चमरः खड्गो गवयश्च महामृगाः ॥ ४९ ॥
हंससारसकादम्बवककारण्डवप्लवाः ॥
बलाकोत्क्रोशचक्राह्वमद्गुक्रौञ्चादयोऽप्चराः ॥ ५० ॥
मत्स्या रोहितपाठीनकूर्म्मकुम्भीरकर्कटाः ॥
शुक्तिशंखोद्रशम्बूकशफरीवर्मिचन्द्रिकाः ॥ ५१ ॥
चुलकीनक्रमकरशिशुमारतिमिंगिलाः ॥
राजीचिलिचिमाद्याश्च मांसमित्याहुरष्टधा ॥ ५२ ॥
योनिष्वजावी व्यामिश्रगोचरत्वादनिश्चिते ॥
आद्यान्त्या जांगलानूपा मध्यौ साधारणौ स्मृतौ ॥५३॥
तत्र बद्धमलाः शीता लघवो जांगला हिताः ॥
पित्तोत्तरे वातमध्ये सन्निपाते कफानुगे ॥ ५४ ॥
दीपनः कटुकः पाके ग्राही रूक्षो हिमः शशः ॥
ईषदुष्णा गुरुः स्निग्धा बृंहणा वर्त्तकादयः ॥ ५५ ॥
तित्तिरिस्तेष्वपि वरो मेधाग्निबलशुक्रकृत् ॥
ग्राही वर्ण्योऽनिलोद्रिक्तसन्निपातहरः परम् ॥ ५६ ॥
नातिपथ्यः शिखी पथ्यः श्रोत्रस्वरवयोदृशाम् ॥
तद्वच्च कुक्कुटो वृष्यो ग्राम्यस्तु श्लेष्मलो गुरुः ॥ ५७ ॥
मेधानलकरा हृद्याः क्रकराः सोपचक्रकाः ॥
गुरुः सलवणः काणकपोतः सर्वदोषकृत् ॥ ५८ ॥
चटकाः श्लेष्मलाः स्निग्धा वातघ्नाः शुक्रलाः परम् ॥
गुरूष्णस्निग्धमधुरा वर्गाश्चातो यथोत्तरम् ॥ ५९ ॥

मूत्रशुक्रकृतो वल्या वातघ्ना. कफपित्तलाः ॥
शीता महामृगास्तेपु क्रव्यादाः प्रसहा' पुन. ॥ ६० ॥
लवणानुरसाः पाके कटुका मासवर्द्धनाः ॥
जीर्णार्शोग्रहणीदोपशोषार्तांना परं हिता. ॥ ६१ ॥
नातिशीत गुरु स्निग्ध मासमाजमदोपलम् ॥
शरीरधातुसामान्यादनभिष्यन्दि वृंहणम् ॥ ६२ ॥
विपरीतमतो ज्ञेयमाविकं वृहण तु तत् ॥
शुष्ककासश्रमात्यग्निविपमज्वरपीनसान् ॥ ६३ ॥
कार्श्यं केवलवाताश्च गोमासं सन्नियच्छति ॥
उष्णो गरीयान्महिप स्वप्नदार्ढ्यवृहत्त्वकृत् ॥ ६४ ॥
तद्वद्वराह' श्रमहा रुचिशुक्रवलप्रद' ॥
मत्स्या' पर कफकरा. चिलिचीमस्त्रिदोपकृत् ॥ ६५ ॥
लावरोहितगोधैणा. स्वे स्वेवर्गे वराः परम् ॥
मासं सद्यो हतं शुद्ध वयस्थ च भजेत्त्यजेत् ॥ ६६ ॥
मृतं कृशं भृशं मेद्य व्याधिवारिविषैर्हतम् ॥
पुंस्त्रियो पूर्वपश्चार्द्धे गुरुणीं गर्भिणी गुरु' ॥ ६७ ॥
लघुर्योपिच्चतुष्पात्सु विहगेपु पुन पुमान् ॥
शिरःस्कन्धोरुपृष्ठस्य कट्याः सक्थ्नोश्च गौरवम् ॥६८॥
तथामपक्काशययोर्यथापूर्वं विनिर्दिशेत् ॥
शोणितप्रभृतीना च धातूनामुत्तरोत्तरम् ॥ ६९ ॥
मासाद्गरीयो वृषणमेढ्रवृक्कयकृद्गुदम् ॥
शाक पाठासठीपूषासुनिपण्णसतीनजम् ॥ ७० ॥

त्रिदोषघ्नं लघु ग्राहि सराजक्षववास्तुकम् ॥
सुनिषण्णोऽग्निकृद्वृष्यस्तेषु राजक्षवः परम् ॥ ७१ ॥
ग्रहण्यर्शोविकारघ्नो वर्चोभेदि तु वास्तुकम् ॥
हन्ति दोषत्रयं कुष्ठं वृष्या सोष्णा रसायनम् ॥ ७२ ॥
काकमाची सरा स्वर्या चांगेर्यम्लाग्निदीपनी ॥
ग्रहण्यर्शोऽनिलश्लेष्महितोष्णा ग्राहिणी लघुः ॥ ७३ ॥
पटोलं ससलारिष्टशांगेष्टावल्गुजाऽमृताः ॥
वेत्राग्रं बृहती वासा कुन्तलीतिलपर्णिका ॥ ७४ ॥
मण्डूकपर्णी कर्कोटकारवेल्लकपर्पटाः ॥
नाडी कलायं गोजिह्वा वार्त्ताकं वनतिक्तकम् ॥ ७५ ॥
करीरं कुलकं नन्दी कुचेला शकुलादनी ॥
कटिल्लं केम्बुकं शीतं सकोशातककर्कशम् ॥ ७६ ॥
तिक्तं पाके कटु ग्राहि वातलं कफपित्तजित् ॥
हृद्यं पटोलं कृमिनुत् स्वादुपाकं रुचिप्रदम् ॥ ७७ ॥
पित्तलं दीपनम्भेदि वातघ्नं बृहतीद्वयम् ॥
वृषन्तु वमिकासघ्नं रक्तपित्तहरं परम् ॥ ७८ ॥
कारवेल्लं सकटुकं दीपनं कफजित्परम् ॥
वार्त्ताकं कटुतिक्तोष्णं मधुरं कफवातजित् ॥ ७९ ॥
सक्षारमग्निजननं हृद्यं रुच्यमपित्तलम् ॥
करीरमाध्मानकरं कषायस्वादुतिक्तकम् ॥ ८० ॥
कोशातकावल्गुजकौ भेदनावग्निदीपनौ ॥
तण्डुलीयो हिमो रूक्षः स्वादुपाकरसो लघुः ॥ ८१ ॥

भदपित्तविपासन्नो मुञ्जात वातपित्तजित् ॥
स्निग्ध शीतं गुरु स्वादु वृहण शुक्रकृत्परम् ॥ ८२ ॥
गुर्वी सरा तु पालक्या मदघ्नी चाप्युपोदका ॥
पालक्यावत्स्मृतश्चचु' स तु सग्रहणात्मक. ॥ ८३ ॥
विदारी वातपित्तघ्नी मूत्रला स्वादुशीतला ॥
जीवनी वृहणी कण्ठ्या गुर्वी वृष्या रसायनम् ॥ ८४ ॥
चक्षुष्या सर्वदोषघ्नी जीवन्ती मधुरा हिमा ॥
कुष्माण्डतुम्बकालिगकर्कारूर्वारुतिण्डिशम् ॥ ८५ ॥
तथा त्रपुसचीनाकचिर्भट कफवातजित् ॥
भेदि विष्टम्भाभिष्यन्दि स्वादु पाकरस गुरु ॥ ८६ ॥
वल्लीफलाना प्रवरं कूष्माण्ड वातपित्तजित् ॥
बस्तिशुद्धिकर वृष्य त्रपुस त्वातिमूत्रलम् ॥ ८७ ॥
तुम्ब रूक्षतर ग्राहि कालिगोर्वारुचिर्भटम् ॥
बाल पित्तहर शीत विद्यात् पक्कमतोऽन्यथा ॥ ८८ ॥
शीर्णवृन्त तु सक्षार पित्तल कफवातजित् ॥
रोचन दीपन हृद्यमष्ठीलानाहनुल्लघु ॥ ८९ ॥
मृणालबिसशालूककुमुदोत्पलकन्दकम् ॥
नन्दीमाषककेलूटशृगाटककशेरुकम् ॥ ९० ॥
क्रौञ्चादन कलोड्य च रूक्षं ग्राहि हिम गुरु ॥
कलम्बनालिकामार्षकुटिञ्जरकुतुम्बकम् ॥ ९१ ॥
चिल्लीलट्वाकलोणीकाकुरूटकगवेधुकम् ॥
जीवन्तझुञ्ज्वेडगजयवशाकसुवर्चलम् ॥ ९२ ॥

आलुकानि च सर्वाणि तथा सूप्यानि लक्ष्मणम् ॥
स्वादु रूक्षं सलवणं वातश्लेष्माकरं गुरु ॥ ९३ ॥
शीतलं सृष्टविण्मूत्रं प्रायो विष्टभ्य जीर्य्यति ॥
स्विन्नं निष्पीडितरसं स्नेहाढ्यं नातिदोषलम् ॥ ९४ ॥
लघुपत्रा तु या चिल्ली सा वास्तुकसमा मता ॥
तर्कारीवरणं स्वादु सतिक्तं कफवातजित् ॥ ९५ ॥
वर्षाभ्वी कालशाकं च सक्षारं कटुतिक्तकम् ॥
दीपनं भेदनं हन्ति गरशोफकफानिलान् ॥ ९६ ॥
दीपनाः कफवातघ्नाश्चिरबिल्वाङ्कुराः सराः ॥
शतावर्य्यङ्कुरास्तिक्ता वृष्या दोषत्रयापहाः ॥ ९७ ॥
रूक्षो वंशकरीरस्तु विदाही वातपित्तलः ॥
पत्तूरो दीपनस्तिक्तः प्लीहार्शःकफवातजित् ॥ ९८ ॥
कृमिकासकफोत्क्लेदान् कासमर्दो जयेत्सरः ॥
रूक्षोष्णमम्लं कौसुंभं गुरु पित्तकरं सरम् ॥ ९९ ॥
गुरूष्णं सार्षपं बद्धविण्मूत्रं सर्वदोषकृत् ॥
यद्बालमव्यक्तरसं किञ्चित्क्षारं सतिक्तकम् ॥ १०० ॥
तन्मूलकं दोषहरं लघुसोष्णं नियच्छति ॥
गुल्मकासक्षयश्वासव्रणनेत्रगलामयान् ॥ १०१ ॥
स्वराग्निसादोदावर्तपीनसांश्च महत्पुनः ॥
रसे पाके च कटुकमुष्णवीर्य्यं त्रिदोषकृत् ॥ १०२ ॥
गुर्वभिष्यन्दि च स्निग्धस्विन्नं तदपि वातजित् ॥
वातश्लेष्महरं शुष्कं सर्वमामं तु दोषलम् ॥ १०३ ॥

कटूष्णो वातकफहा पिण्डालुः पित्तवर्धनः ॥
कुठेरशिग्रुसुरससुमुखासुरिभूस्तृणम् ॥ १०४ ॥
फणिज्जार्जकजम्बीरप्रभृति ग्राहि शालनम् ॥
विदाहि कटु रूक्षोष्णं हृद्यं दीपनरोचनम् ॥ १०५ ॥
दृक्शुक्रकृमिहृत्तीक्ष्णं दोषोत्क्लेशकरं लघु ॥
हिध्मकासश्रमश्वासपार्श्वरुक्पूतगन्धिहा ॥ १०६ ॥
सुरस सुमुखो नातिविदाही गरशोफहा ॥
आर्द्रिका तिक्तमधुरा मूत्रला न च पित्तकृत् ॥ १०७ ॥
लशुनो भृशतीक्ष्णोष्ण कटुपाकरस सरः ॥
हृद्यः केश्यो गुरुर्वृष्य स्निग्धो रोचनदीपन ॥ १०८ ॥
किलासकुष्ठगुल्मार्शोमेहक्रिमिकफानिलान् ॥
सहिध्मपीनसश्वासकासान् हन्त्यस्रपित्तकृत् ॥ १०९ ॥
पलाण्डुस्तद्गुणन्यून. श्लेष्मलो नातिपित्तल ॥
कफवातार्शसा पथ्य. स्वेदेऽभ्यवहृतौ तथा ॥ ११० ॥
तीक्ष्णो गृञ्जनको ग्राही पित्तिना हितकृन्न सः ॥
दीपन सूरणो रुच्यः कफघ्नो विशदो लघुः ॥ १११ ॥
विशेषादर्शसा पथ्यो भूकन्दस्त्वतिदोषल ॥
पत्रे पुष्पे फले नाले कन्दे च गुरुता क्रमात् ॥ ११२ ॥
वरा शाकेषु जीवन्ती सर्षपास्त्ववराः परम् ॥
द्राक्षा फलोत्तमा वृष्या चक्षुष्या सृष्टमूत्रविट् ॥ ११३ ॥
स्वादुपाकरसा स्निग्धा सकषाया हिमा गुरुः ॥
निहन्त्यनिलपित्तास्रतिक्तास्यत्वमदात्ययान् ॥ ११४ ॥

तृष्णाकासश्रमश्वासस्वरभेदक्षतक्षयान् ॥
उद्रिक्तपित्ताञ्जयति त्रीन् दोषान् स्वादु दाडिमम् ॥ ११५ ॥
पित्ताविरोधि नात्युष्णमुष्णं वातकफापहम् ॥
सर्वं हृद्यं लघु स्निग्धं ग्राहि रोचनदीपनम् ॥ ११६ ॥
मोचखर्जूरपनसनालिकेरपरूपकम् ॥
आम्राततालकाश्मर्यराजादनमधूकजम् ॥ ११७ ॥
सौवीरबदरांकोलफल्गुश्लेष्मातकोद्भवम् ॥
वातामाभीषुकाक्षोडमुकूलकनिकोचकम् ॥ ११८ ॥
उरुमाणं प्रियालञ्च बृंहणं गुरु शीतलम् ॥
दाहक्षतक्षयहरं रक्तपित्तप्रसादनम् ॥ ११९ ॥
स्वादुपाकरसं स्निग्धं विष्टम्भि कफशुक्रकृत् ॥
फलन्तु पित्तलं तालं सरं काश्मर्यजं हिमम् ॥ १२० ॥
शकृन्मूत्रविबन्धघ्नं केश्यं मेध्यं रसायनम् ॥
वातामाद्युष्णवीर्य्यन्तु कफपित्तकरं सरम् ॥ १२१ ॥
परं वातहरं स्निग्धमनुष्णन्तु प्रियालजम् ॥
प्रियालमज्जा मधुरो वृष्यः पित्तानिलापहः ॥ १२२ ॥
कोलमज्जगुणैस्तद्वत्तृट्छर्दिकासजिच्च सः ॥
पक्वं सुदुर्जरं बिल्वं दोषलं पूतिमारुतम् ॥ १२३ ॥
दीपनं कफवातघ्नं बालं ग्राह्युभयं हि तत् ॥
कपित्थमामं कण्ठघ्नं दोषलं दोषघाति तु ॥ १२४ ॥
पक्वं हिध्मावमथुजित्सर्वं ग्राहि विषापहम् ॥
जाम्बवं गुरु विष्टम्भि शीतलं भृशवातलम् ॥ १२५ ॥

संग्राहि मूत्रशकृतोरकण्ठ्यं कफपित्तनुत् ॥
वातपित्तास्रकृद्बालं बद्धास्थि कफपित्तकृत् ॥ १२६ ॥
गुर्वाम्र वातजित्पक्वं स्वाद्वम्लं कफशुक्रकृत् ॥
वृक्षाम्लं ग्राहि रूक्षोष्णं वातश्लेष्महरं लघु ॥ १२७ ॥
शम्या गुरूष्णं केशघ्नं रूक्षं पीलु तु पित्तलम् ॥
कफवातहरं भेदि प्लीहार्शः कृमिगुल्मनुत् ॥ १२८ ॥
सतिक्तं स्वादु यत्पीलु नात्युष्णं तत्त्रिदोषजित् ॥
त्वक्तिक्तकटुका स्निग्धा मातुलुङ्गस्य वातजित्॥१२९॥
बृंहणं मधुरं मांसं वातपित्तहरं गुरु ॥
लघु तत्केसरं कासश्वासहिक्कामदात्ययान् ॥ १३० ॥
आस्यशोषानिलश्लेष्मविबन्धच्छर्द्यरोचकान् ॥
गुल्मोदरार्शःशूलानि मन्दाग्नित्वं च नाशयेत् ॥ १३१ ॥
भल्लातकस्य त्वङ्मांसं बृंहणं स्वादु शीतलम् ॥
तदस्थ्यग्निसमं मेध्यं कफवातहरं परम् ॥ १३२ ॥
स्वाद्वम्लं शीतमुष्णं च द्विधा पालेवतं गुरु ॥
रुच्यमत्यग्निशमनं रुच्यं मधुरमारुकम् ॥ १३३ ॥
पक्वमाशु जरां याति नात्युष्णं गुरु दोषलम् ॥
द्राक्षापरूषकं चार्द्रमम्लं पित्तकफप्रदम् ॥ १३४ ॥
गुरूष्णवीर्यं वातघ्नं सरं च करमर्दकम् ॥
तथाम्लं कोलकर्कन्धूलकुचाम्रातमारुकम् ॥ १३५ ॥
ऐरावतं दन्तशठं सतूदं मृगलिण्डिकम् ॥
नीतिपित्तकरं पक्वं शुष्कं च करमर्दकम् ॥ १३६ ॥

दीपनं भेदनं शुष्कमम्लीकाकोलयोः फलम् ॥
तृष्णाश्रमक्लमच्छेदि लघिष्ठं कफवातयोः ॥ १३७ ॥
फलानामवरं तत्र लकुचं सर्वदोषकृत् ॥
हिमानिलोष्णदुर्वातव्याललालादिदूषितम् ॥ १३८ ॥
जन्तुजुष्टं जले मग्नमभूमिजमनार्तवम् ॥
अन्यधान्ययुतं हीनवीर्यं जीर्णतयापि च ॥ १३९ ॥
धान्यं त्यजेत्तथा शाकं रूक्षसिद्धमकोमलम् ॥
असञ्जातरसं तद्वच्छुष्कं चान्यत्र मूलकात् ॥ १४० ॥
प्रायेण फलमप्येवं तथामं बिल्ववर्जितम् ॥
विष्यन्दि लवणं सर्वं सूक्ष्मं सृष्टमलं विदुः ॥ १४१ ॥
वातघ्नं पाकि तीक्ष्णोष्णं रोचनं कफपित्तकृत् ॥
सैन्धवं तत्र सुस्वादु वृष्यं हृद्यं त्रिदोषनुत् ॥ १४२ ॥
लघ्वनुष्णं दृशः पथ्यमविदाह्यग्निदीपनम् ॥
लघु सौवर्चलं हृद्यं सुगन्ध्युद्गारशोधनम् ॥ १४३ ॥
कटुपाकं विबन्धघ्नं दीपनीयं रुचिप्रदम् ॥
ऊर्ध्वाधःकफवातानुलोमनं दीपनं विडम् ॥ १४४ ॥
विबन्धानाहविष्टम्भशूलगौरवनाशनम् ॥
विपाके स्वादु सामुद्रं गुरु श्लेष्मविवर्द्धनम् ॥ १४५ ॥
सतिक्तकटुकक्षारं तीक्ष्णमुत्क्लेदि चोद्भिदम् ॥
कृष्णे सौवर्चलगुणा लवणे गन्धवर्जिताः ॥ १४६ ॥
रोमकं लघु पांसूत्थं सक्षारं श्लेष्मलं गुरु ॥
लवणानां प्रयोगे तु सैन्धवादीन् प्रयोजयेत् ॥ १४७ ॥

गुल्महृद्ग्रहणीपाण्डुप्लीहानाहगलामयान् ॥
श्वासार्शःकफकासांश्च शमयेद्यवशूकजः ॥ १४८ ॥
क्षारः सर्वश्च परम तीक्ष्णोष्णः कृमिजिल्लघुः ॥
पित्तासृग्दूषणः पाकी छेद्यहृद्यो विदारणः ॥ १४९ ॥
अपथ्य. कटुलावण्याच्छुक्रौजःकेशचक्षुषाम् ॥
हिंगुवातकफानाहशूलघ्न पित्तकोपनम् ॥ १५० ॥
कटुपाकरसं रुच्य दीपन पाचनं लघु ॥
कषाया मधुरा पाके रूक्षा विलवणा लघुः ॥ १५१ ॥
दीपनी पाचनी मेध्या वयस. स्थापनी परा ॥
उष्णवीर्या सरायुष्या बुद्धीन्द्रियबलप्रदा ॥ १५२ ॥
कुष्ठवैवर्ण्यवैस्वर्यपुराणविषमज्वरान् ॥
शिरोऽक्षिपाण्डुहृद्रोगकामलाग्रहणीगदान् ॥ १५३ ॥
सशोषशोफातीसारमेदोमोहवमिक्रिमीन् ॥
श्वासकासप्रसेकार्श प्लीहानाहगरोदरम् ॥ १५४ ॥
विबन्ध स्रोतसा गुल्ममूरुस्तम्भमरोचकम् ॥
हरीतकी जयेद्व्याधीस्तांस्ताश्च कफवातजान् ॥ १५५ ॥
तद्वदामलक शीतमम्लं पित्तकफापहम् ॥
कटु पाके हिम केश्यमक्षमीषच्च तद्गुणम् ॥ १५६ ॥
इय रसायनवरा त्रिफलाऽक्ष्यामयापहा ॥
रोपणी त्वग्गदक्लेदमेदोमेहकफास्रजित् ॥ १५७ ॥
सकेसर चतुर्जात त्वक्पत्रैल त्रिजातकम् ॥
पित्तप्रकोपि तीक्ष्णोष्ण रूक्ष दीपनरोचनम् ॥ १५८ ॥

रसे पाके च कटुकं कफघ्नं मरिचं लघु ॥
श्लेष्मला स्वादुशीताऽऽर्द्रा गुर्वी स्निग्धा च पिप्पली॥१५९॥
सा शुष्का विपरीताऽतः स्निग्धा वृष्या रसे कटुः ॥
स्वादुपाकाऽनिलश्लेष्मश्वासकासापहा सरा ॥ १६० ॥
न तामत्युपयुञ्जीत रसायनविधिं विना ॥
नागरं दीपनं वृष्यं ग्राहि हृद्यं विबन्धनुत् ॥ १६१ ॥
रुच्यं लघु स्वादुपाकं स्निग्धोष्णं कफवातजित् ॥
तद्वदार्द्रकमेतच्च त्रयं त्रिकटुकं जयेत् ॥ १६२ ॥
स्थौल्याग्निसदनश्वासकासश्लीपदपीनसान् ॥
चविका पिप्पलीमूलं मरिचाल्पान्तरं गुणैः ॥ १६३ ॥
चित्रकोऽग्निसमः पाके शोफार्शःकृमिकुष्ठहा ॥
पञ्चकोलकमेतच्च मरिचेन विना स्मृतम् ॥ १६४ ॥
गुल्मप्लीहोदरानाहशूलघ्नं दीपनं परम् ॥
बिल्वकाश्मर्यतर्कारीपाटलाटुण्टुकैर्महत् ॥ १६५ ॥
जयेत् कषायतिक्तोष्णं पञ्चमूलं कफानिलौ ॥
ह्रस्वं बृहत्यंशुमतीद्वयगोक्षुरकैः स्मृतम् ॥ १६६ ॥
स्वादुपाकरसं नातिशीतोष्णं सर्वदोषजित् ॥
बलापुनर्नवैरण्डशूर्पपर्णीद्वयेन तु ॥ १६७ ॥
मध्यमं कफवातघ्नं नातिपित्तकरं सरम् ॥
अभीरुवीराजीवन्तीजीवकर्षभकैः स्मृतम् ॥ १६८ ॥
जीवनाख्यं च चक्षुष्यं वृष्यं पित्तानिलापहम् ॥
तृणाख्यं पित्तजिद्दर्भकाशेक्षुशरशालिभिः ॥ १६९ ॥

शूकशिम्बीजपक्वान्नमांसशाकफलौषधैः ॥
वर्गितैरन्नलेशोऽयमुक्तो नित्योपयोगिकः ॥ १७० ॥

इत्यष्टाङ्गहृदयसंहितायां सूत्रस्थाने षष्ठोऽध्यायः ॥ ६ ॥

# सप्तमोऽध्यायः।

अथातोऽन्नरक्षाध्यायं व्याख्यास्यामः ।
राजा राजगृहासन्ने प्राणाचार्यं निवेशयेत् ॥
सर्वदा स भवत्येवं सर्वत्र प्रतिजागृविः ॥ १ ॥
अन्नपानं विषाद्रक्षेद्विशेषेण महीपतेः ॥
योगक्षेमौ तदायत्तौ धर्माद्यास्तन्निबन्धनाः ॥ २ ॥
ओदनो विषवान् सान्द्रो यात्यविस्राव्यतामिव ॥
चिरेण पच्यते पक्वो भवेत्पर्युषितोपमः ॥ ३ ॥
मयूरकण्ठतुल्योष्मा मोहमूर्च्छाप्रसेककृत् ॥
हीयते वर्णगन्धाद्यैः क्लिद्यते चन्द्रकाञ्चितः ॥ ४ ॥
व्यञ्जनान्याशु शुष्यन्ति ध्यामक्काथानि तत्र च ॥
हीनातिरिक्ता विकृताच्छाया दृश्येत नैव वा ॥ ५ ॥
फेनोर्ध्वराजीसीमन्ततन्तुबुद्बुदसम्भवः ॥
विच्छिन्नविरसा रागाः खाण्डवाः शाकमामिषम् ॥ ६ ॥
नीला राजी रसे ताम्रा क्षीरे दधनि दृश्यते ॥
श्यावा पीताऽसिता तक्रे घृते पानीयसन्निभा ॥ ७ ॥

काली मद्याम्भसोः क्षौद्रे हरित्तैलेऽरुणोपमा ॥
पाकः फलानामामानां पक्कानां परिकोथनम् ॥ ८ ॥
द्रव्याणामार्द्रशुष्काणां स्यातां म्लानिविवर्णते ॥
मृदूनां कठिनानां च भवेत् स्पर्शविपर्य्ययः ॥ ९ ॥
माल्यस्य स्फुटिताग्रत्वं म्लानिर्गन्धान्तरोद्भवः ॥
ध्यामसण्डलता वस्त्रे शदनं तन्तुपक्ष्मणाम् ॥ १० ॥
धातुमौक्तिककाष्ठाश्मरत्नादिषु मलाक्तता ॥
स्नेहस्पर्शप्रभाहानिः सप्रभत्वं तु मृन्मये ॥ ११ ॥
विषदः श्यावशुष्कास्यो विलक्षो वीक्षते दिशः ॥
स्वेदवेपथुमांस्त्रस्तो भीतः स्खलति जृम्भते ॥ १२ ॥
प्राप्यान्नं सविषं त्वग्निरेकावर्त्तः स्फुटत्यति ॥
शिखिकण्ठाभधूमार्चिरनर्चिर्वोग्रगन्धवान् ॥ १३ ॥
म्रियन्ते मक्षिकाः प्राश्य काकः क्षामस्वरो भवेत् ॥
उत्क्रोशन्ति च दृष्ट्वैतच्छुकदात्यूहसारिकाः ॥ १४ ॥
हंसः प्रस्खलति ग्लानिर्जीवञ्जीवस्य जायते ॥
चकोरस्याक्षिवैराग्यं क्रौञ्चस्य स्यान्मदोदयः ॥ १५ ॥
कपोतपरभृद्दक्षचक्रवाका जहत्यसून् ॥
उद्वेगं याति मार्जारः शकृन्मुञ्चति वानरः ॥ १६ ॥
हृष्येन्मयूरस्तद्दृष्ट्वा मन्दतेजो भवेद्विषम् ॥
इत्यन्नं विषवज्ज्ञात्वा त्यजेदेवं प्रयत्नतः ॥ १७ ॥
यथा तेन विपद्येरन्नपि न क्षुद्रजंतवः ॥
स्पृष्टे तु कण्डूदाहोषाज्वरार्तिस्फोटसुप्तयः ॥ १८ ॥

नखरोमच्युतिः शोफः सेकाद्या विषनाशनाः ॥
शस्तास्तत्र प्रलेपाश्च सेव्यचन्दनपद्मकैः ॥ १९ ॥
ससोमवल्कतालीशपत्रकुष्ठामृतानतैः ॥
लालाजिह्वौष्ठयोर्जाड्यमूषा चिमिचिमायनम् ॥ २० ॥
दन्तहर्षो रसाज्ञत्वं हनुस्तम्भश्च वक्त्रगे ॥
सेव्याद्यैस्तत्र गण्डूषाः सर्वं च विषजिद्धितम् ॥ २१ ॥
आमाशयगते स्वेदमूर्च्छाध्मानमदभ्रमाः ॥
रोमहर्षो वमिर्दाहश्चक्षुर्हृदयरोधनम् ॥ २२ ॥
बिन्दुभिश्चाचयोऽङ्गानां पक्वाशयगते पुनः ॥
अनेकवर्णं वमति मूत्रयत्यतिसार्यते ॥ २३ ॥
तन्द्रा कृशत्वं पाण्डुत्वमुदरं बलसंक्षयः ॥
तयोर्वान्तविरिक्तस्य हरिद्रे कटभी गुडम् ॥ २४ ॥
सिन्दुवारितनिष्पाववाष्पिकाशतपर्विकाः ॥
तण्डुलीयकमूलानि कुक्कुटाण्डमवल्गुजम् ॥ २५ ॥
नावनाञ्जनपानेषु योजयेद्विषशान्तये ॥
विषभुक्ताय दद्याच्च शुद्धायोर्द्ध्वमधस्तथा ॥ २६ ॥
सूक्ष्मं ताम्ररजः काले सक्षौद्रं हृद्विशोधनम् ॥
शुद्धे हृदि ततः शाणं हेमचूर्णस्य दापयेत् ॥ २७ ॥
न सज्जते हेमपाङ्गे पद्मपत्रेम्बुवद्विषम् ॥
जायते विपुलं चायुर्गरेप्येष विधिः स्मृतः ॥ २८ ॥
विरुद्धमपि चाहारं विद्याद्विषगरोपमम् ॥
आनूपमामिषं माषक्षौद्रक्षीरविरूढकैः ॥ २९ ॥

विरुध्यते सह बिसैर्मूलकेन गुडेन वा ॥
विशेषात् पयसा मत्स्या मत्स्येष्वपि चिलीचिमः ॥३०॥
विरुद्धमम्लं पयसा सह सर्वं फलं तथा ॥
तद्वत्कुलत्थवरककङ्गुवल्लमकुष्ठकाः ॥ ३१ ॥
भक्षयित्वा हरितकं मूलकादि पयस्त्यजेत् ॥
वाराहं श्वाविधा नाद्याद्दध्ना पृषतकुक्कुटौ ॥ ३२ ॥
आममांसानि पित्तेन माषसूपेन मूलकम् ॥
अविं कुसुम्भशाकेन बिसैः सह विरूढकम् ॥ ३३ ॥
माषसूपगुडक्षीरदध्याज्यैर्लाकुचं फलम् ॥
फलं कदल्यास्तक्रेण दध्ना तालफलेन वा ॥ ३४ ॥
कणोषणाभ्यां मधुना काकमाचीं गुडेन वा ॥
सिद्धां वा मत्स्यपचने पचने नागरस्य वा ॥ ३५ ॥
सिद्धामन्यत्र वा पात्रे कामाच्चामुषितां निशाम् ॥
मत्स्यनिस्तलनस्नेहसाधिताः पिप्पलीस्त्यजेत् ॥ ३६ ॥
कांस्ये दशाहमुषितं सर्पिरुष्णं त्वरुष्करे ॥
भासो विरुध्यते शूल्यः कम्पिल्लस्तक्रसाधितः ॥ ३७ ॥
ऐकध्यं पायससुराकृशराः परिवर्जयेत् ॥
मधुसर्पिर्वसातैलपानीयानि द्विशस्त्रिशः ॥ ३८ ॥
एकत्र वा समांशानि विरुध्यन्ते परस्परम् ॥
भिन्नांशे अपि मध्वाज्ये दिव्यवार्यनुपानतः ॥ ३९ ॥
मधुपुष्करबीजं च मधुमैरेयशार्करम् ॥
मन्थानुपानः क्षैरेयो हारिद्रः कटुतैलवान् ॥ ४० ॥

उपोदकातिसारांय तिलकल्केन साधिता ॥
बलाका वारुणीयुक्ता कुल्माषैश्च विरुध्यते ॥ ४१ ॥
भृष्टा वराहवसया सैव सद्यो निहन्त्यसून् ॥
तद्वत्तित्तिरिपत्राढ्यगोधालावकपिञ्जला ॥ ४२ ॥
ऐरण्डेनाग्निना सिद्धास्तत्तैलेन विमूर्च्छिता ॥
हारीतमांसं हारिद्रशूलकप्रोतमर्चितम् ॥ ४३ ॥
हारिद्रवह्निना सद्यो व्यापादयति जीवितम् ॥
भस्मपांशुपरिध्वस्तं तदेव च समाक्षिकम् ॥ ४४ ॥
यत्किञ्चिद्दोषमुत्क्लेश्य न हरेत्तत्समासतः ॥
विरुद्धं शुद्धिरत्रेष्टा शमो वा तद्विरोधिभिः ॥ ४५ ॥
द्रव्यैस्तैरेव वा पूर्वं शरीरस्याभिसंस्कृतिः ॥
व्यायामस्निग्धदीप्ताग्निवयःस्थबलशालिनाम् ॥ ४६ ॥
विरोध्यपि न पीडायै सात्म्यमल्पं च भोजनम् ॥
पादेनापथ्यमभ्यस्तं पादपादेन वा त्यजेत् ॥ ४७ ॥
निषेवेत हितं तद्वदेकाद्यन्तरीकृतम् ॥
अपथ्यमपि हि त्यक्तं शीलितं पथ्यमेव वा ॥ ४८ ॥
सात्म्यासात्म्यविकाराय जायते सहसान्यथा ॥
क्रमेणापचिता दोषाः क्रमेणोपचिता गुणाः ॥ ४९ ॥
नाप्नुवन्ति पुनर्भावमप्रकम्प्या भवन्ति च ॥
अत्यन्तसन्निधानानां दोषाणां दूषणात्मनाम् ॥ ५० ॥
अहितैर्दूषणं भूयो न विद्वान् कर्तुमर्हति ॥
आहारशयनब्रह्मचर्यैर्युक्त्या प्रयोजितैः ॥ ५१ ॥

शरीरं धार्य्यते नित्यमागारमिव धारणैः ॥
आहारो वर्णितस्तत्र तत्र तत्र च वक्ष्यते ॥ ५२ ॥
निद्रायत्तं सुखं दुःखं पुष्टिः कार्श्यं वलावलम् ॥
वृषता क्लीवता ज्ञानमज्ञानं जीवितं न च ॥ ५३ ॥
अकालेऽतिप्रसंगाच्च न च निद्रा निषेविता ॥
सुखायुषी परा कुर्य्यात्कालरात्रिरिवापरा ॥ ५४ ॥
रात्रौ जागरणं रूक्षं स्निग्धं प्रस्वपनं दिवा ॥
अरूक्षमनभिष्यन्दि त्वासीनप्रचलायितम् ॥ ५५ ॥
ग्रीष्मे वायुचयादानरौक्ष्यरात्र्यल्पभावतः ॥
दिवास्वप्नो हितोऽन्यस्मिन्कफपित्तकरो हि सः ॥ ५६ ॥
मुक्त्वा तु भाष्ययानाध्वमद्यस्त्रीभारकर्म्मभिः ॥
क्रोधशोकभयैः क्लान्ताञ्श्वासहिध्मातिसारिणः ॥५७॥
वृद्धबालाबलक्षीणक्षततृट्शूलपीडितान् ॥
अजीर्णाभिहतोन्मत्तान् दिवास्वप्नोचितानपि ॥ ५८ ॥
धातुसाम्यं तथा ह्येषां श्लेष्मा चाङ्गानि पुष्यति ॥
बहुमेदःकफाः स्वप्युः स्नेहनित्याश्च नाहनि ॥ ५९ ॥
विषार्तः कण्ठरोगी च नैव जातु निशास्वपि ॥
अकालशयनान्मोहज्वरस्तैमित्यपीनसाः ॥ ६० ॥
शिरोरुक्शोफहृल्लासस्रोतोरोधाग्निमन्दताः ॥
तत्रोपवासवमनस्वेदनावनमौषधम् ॥ ६१ ॥
योजयेदतिनिद्रायां तीक्ष्णं प्रच्छर्दनाञ्जनम् ॥
नावनं लङ्घनं चिन्तां व्यवायं शोकभीक्रुधः ॥ ६२ ॥

एभिरेव च निद्राया नाश श्लेष्मातिसक्षयात् ॥
निद्रानाशादङ्गमर्दशिरोगौरवजृम्भिका. ॥ ६३ ॥
जाड्यं ग्लानिभ्रमापक्तितन्द्रारोगाश्च वातजा ॥
यथाकालमतो निद्रा रात्रौ सेवेत सात्म्यत ॥ ६४ ॥
असात्म्याज्जागरादर्ध प्रात स्वप्यादभुक्तवान् ॥
शीलयेन्मन्दनिद्रस्तु क्षीरमद्यरसान् दधि ॥ ६५ ॥
अभ्यङ्गोद्वर्तनस्नानमूर्द्धकर्णाक्षितर्पणम् ॥
कान्तावाहुलताश्लेषो निर्वृति कृतकृत्यता ॥ ६६ ॥
मनोऽनुकूला विषयाः काम निद्रासुखप्रदा ॥
ब्रह्मचर्यरतेर्ग्राम्यसुखनि.स्पृहचेतस ॥ ६७ ॥
निद्रा सन्तोषतृप्तस्य स्व काल नातिवर्तते ॥
ग्राम्यधर्मे त्यजेन्नारीमनुत्ताना रजस्वलाम् ॥ ६८ ॥
अप्रियामप्रियाचारा दुष्टसङ्कीर्णमेहनाम् ॥
अतिस्थूलकृशा सूता गर्भिणीमन्ययोषितम् ॥ ६९ ॥
वर्णिनीमन्ययोनि च गुरुदेवनृपालयम् ॥
चैत्यश्मशानायतनचत्वराम्बुचतुस्पथम् ॥ ७० ॥
पर्वाण्यनङ्गं दिवसं शिरोहृदयताडनम् ॥
अत्याशितोऽधृति क्षुद्वान् दु.स्थिताङ्ग पिपासित.॥७१॥
बालो वृद्धोऽन्यवेगार्त्तस्त्यजेद्रोगी च मैथुनम् ॥
सेवेत कामत काम तृप्तो वाजीकृता हिमे ॥ ७२ ॥
त्र्यहाद्वसन्तशरदो. पक्षाद्वर्षानिदाघयो. ॥
भ्रमक्लमोरुदौर्बल्यबलधात्विन्द्रियक्षय ॥ ७३ ॥

अपर्वमरणं च स्यादन्यथा गच्छतः स्त्रियम् ॥
स्मृतिमेधायुरारोग्यपुष्टीन्द्रिययशोवलैः ॥
अधिका मन्दजरसो भवन्ति स्त्रीषु संयताः ॥ ७४ ॥

स्नानानुलेपनहिमानिलखण्डखाद्य-
शीताम्बुदुग्धरसयूषसुराप्रसन्नाः ॥
सेवेत चानुशयनं विरतौ रतस्व
तस्यैवमाशु वपुषः पुनरेति धाम ॥ ७५ ॥
श्रुतचरितसमृद्धे कर्म्मदक्षे दयालौ
भिषजि निरनुवन्धं देहरक्षां निवेश्य ॥
भवति विपुलतेजःस्वास्थ्यकीर्तिप्रभावः
स्वकुशलफलभोगी भूमिपालश्चिरायुः ॥ ७६ ॥

इत्यष्टाङ्गहृदयसंहितायां सूत्रस्थाने सप्तमोऽध्यायः ॥ ७ ॥

## अष्टमोऽध्यायः ।



अथातो मात्राशितीयमध्यायं व्याख्यास्यामः ।
मात्राशी सर्वकालं स्यान्मात्रा ह्यग्नेः प्रवर्त्तिका ॥
मात्रां द्रव्याण्यपेक्षन्ते गुरून्यपि लघून्यपि ॥ १ ॥
गुरूणामर्द्धसौहित्यं लघूनां नातितृप्तता ॥
मात्राप्रमाणं निर्दिष्टं सुखं यावद्विजीर्य्यति ॥ २ ॥
भोजनं हीनमात्रं तु न बलोपचयौजसे ॥
सर्वेषां वातरोगाणां हेतुतां च प्रपद्यते ॥ ३ ॥

अतिमात्र पुनः सर्वानाशु दोषान् प्रकोपयेत् ॥
पीड्यमाना हि वाताद्या युगपत्तेन कोपिता॰ ॥ ४ ॥
आमेनान्नेन दुष्टेन तदेवाविश्य कुर्वते ॥
विष्टम्भयन्तोऽलसक च्यावयन्तो विषूचिकाम् ॥ ५ ॥
अधरोत्तरमार्गाभ्या सहसैवाजितात्मन॰ ॥
प्रयाति नोर्ध्व नाधस्तादाहारो न च पच्यते ॥ ६ ॥
आमाशयेऽलसीभूतस्तेन सोऽलसक॰ स्मृत॰ ॥
विविधैर्वेदनोद्भेदैर्वाय्वादिभृशकोपत ॥ ७ ॥
सूचीभिरिव गात्राणि विध्यतीति विषूचिका ॥
तत्र शूलभ्रमानाहकम्पस्तम्भादयोऽनिलात् ॥ ८ ॥
पित्ताज्ज्वरातिसारान्तर्दाहतृट्प्रलयादय ॥
कफाच्छर्द्यङ्गगुरुतावाक्सगष्ठीवनादय॰ ॥ ९ ॥
विशेषाद्दुर्बलस्याल्पवह्नेर्वेगविधारिण॰ ॥
पीडित मारुतेनान्न श्लेष्मणा रुद्धमन्तरा ॥ १० ॥
अलस क्षोभित दोषै शल्यत्वेनैव संस्थितम् ॥
शूलादीन् कुरुते तीव्राञ्छर्द्यतीसारवर्जितान् ॥ ११ ॥
सोऽलसोऽत्यर्थदुष्टास्तु दोषा दुष्टामबद्धखा ॥
यान्तस्तिर्यक्तनु सर्वां दण्डवत् स्तम्भयन्ति चेत् ॥१२॥
दण्डकालसक नाम त त्यजेदाशुकारिणम् ॥
विरुद्धाध्यशनाजीर्णशीलिनो विषलक्षणम् ॥ १३ ॥
आमदोष महाघोर वर्जयेद्विषसंज्ञकम् ॥
विषरूपाशुकारित्वाद्विरुद्धोपक्रमत्वतः ॥ १४ ॥

अथाममलसीभूतं साध्यं त्वरितमुल्लिखेत् ॥
पीत्वा सोग्रापटुफलं वार्युष्णं योजयेत्ततः ॥ १५ ॥
स्वेदनं फलवर्तिं च मलवातानुलोमनीम् ॥
नाम्यमानानि चांगानि भृशं स्विन्नानि वेष्टयेत् ॥१६॥
विषूच्यामतिवृद्धायां पार्ष्ण्योर्दाहः प्रशस्यते ॥
तदहश्चोपवास्यैनं विरिक्तवदुपाचरेत् ॥ १७ ॥
तीव्रार्तिरपि नाजीर्णी पिबेच्छूलघ्नमौषधम् ॥
आमसन्नो नलो नालं पक्तुं दोषौषधाशनम् ॥ १८ ॥
निहन्यादपि चैतेषां विभ्रमः सहसातुरम् ॥
जीर्णाशने तु भैषज्यं युञ्ज्यात् स्तब्धगुरूदरे ॥ १९ ॥
दोषशेषस्य पाकार्थमग्नेः सन्धुक्षणाय च ॥
शान्तिरामविकाराणां भवति त्वपतर्पणात् ॥ २० ॥
त्रिविधं त्रिविधे दोषे तत्समीक्ष्य प्रयोजयेत् ॥
तत्राल्पे लङ्घनं पथ्यं मध्ये लङ्घनपाचनम् ॥ २१ ॥
प्रभूते शोधनं तद्धि मूलादुन्मूलयेन्मलान् ॥
एवमन्यानपि व्याधीन् स्वनिदानविपर्ययात् ॥ २२ ॥
चिकित्सेदनुबन्धे तु सति हेतुविपर्य्ययम् ॥
त्यक्त्वा यथायथं वैद्यो युञ्ज्याद्व्याधिविपर्ययम् ॥ २३ ॥
तदर्थकारि वा पक्वे दोषे त्विद्धे च पावके ॥
हितमभ्यञ्जनस्नेहपानबस्त्यादि युक्तितः ॥ २४ ॥
अजीर्णं च कफादामं तत्र शोफोऽक्षिगण्डयोः ॥
सद्योभुक्त इवोद्गारः प्रसेकोत्क्लेशगौरवम् ॥ २५ ॥

विष्टब्धमनिलाच्छूलविबन्धाध्मानसादकृत् ॥
पित्ताद्विदग्धं तृण्मोहभ्रमाम्लोद्गारदाहवत् ॥ २६ ॥
लङ्घनं कार्यमामे विष्टब्धे स्वेदनं भृशम् ॥
विदग्धे वमनं यद्वा यथावस्थं हितं भवेत् ॥ २७ ॥
गरीयसो भवेल्लीनादामादेव विलम्बिका ॥
कफवातानुबद्धामलिङ्गा तत्समसाधना ॥ २८ ॥
अश्रद्धा हृद्व्यथा शुद्धेऽप्युद्गारे रसशेषतः ॥
शयीत किञ्चिदेवात्र सर्वश्चानाशितो दिवा ॥ २९ ॥
स्वप्यादजीर्णी सञ्जातबुभुक्षोऽश्नीयान्मितं लघु ॥
विबन्धोऽतिप्रवृत्तिर्वा ग्लानिर्मारुतमूढता ॥ ३० ॥
अजीर्णलिङ्गं सामान्यं विष्टम्भो गौरवं भ्रमः ॥
न चातिमात्रमेवान्नमामदोषाय केवलम् ॥ ३१ ॥
द्विष्टविष्टम्भिदग्धामगुरुरूक्षहिमाशुचि ॥
विदाहि शुष्कमत्यम्बुप्लुतं वान्नं न जीर्यति ॥ ३२ ॥
उपतप्तेन भुक्तं च शोकक्रोधक्षुधादिभिः ॥
मिश्रं पथ्यमपथ्यं च भुक्तं समशनं मतम् ॥ ३३ ॥
विद्यादध्यशनं भूयो भुक्तस्योपरि भोजनम् ॥
अकाले बहु चाल्पं वा भुक्तं तु विषमाशनम् ॥ ३४ ॥
त्रीण्यप्येतानि मृत्युं वा घोरान् व्याधीन्सृजन्ति वा ॥
काले सात्म्यं शुचि हितं स्निग्धोष्णं लघु तन्मनाः ॥३५॥
षड्रसं मधुरप्रायं नातिद्रुतविलम्बितम् ॥
स्नातः क्षुद्वान्विविक्तस्थो धौतपादकराननः ॥ ३६ ॥

तर्पयित्वा पितॄन्देवानतिथीन्बालकान्गुरून् ॥
प्रत्यवेक्ष्य तिरश्चोऽपि प्रतिपन्नपरिग्रहान् ॥ ३७ ॥
समीक्ष्य सम्यगात्मानमनिन्दन्नब्रुवन्द्रवम् ॥
इष्टमिष्टैः सहाश्नीयाच्छुचिभक्तजनाहृतम् ॥ ३८ ॥
भोजनं तृणकेशादिजुष्टमुष्णीकृतं पुनः ॥
शाकावरान्नभूयिष्ठमत्युष्णलवणं त्यजेत् ॥ ३९ ॥
किलाटदधिकूर्चीकाक्षारशुक्तामसमूलकम् ॥
कृशशुष्कवराहाविगोमत्स्यमहिषामिषम् ॥ ४० ॥
माषनिष्पावशालूकबिसपिष्टविरूढकम् ॥
शुष्कशाकानि यवकान्फाणितं च न शीलयेत् ॥ ४१ ॥
शीलयेच्छालिगोधूमयवषष्टिकजाङ्गलम् ॥
पथ्यामलकमृद्वीकापटोलीमुद्गशर्कराः ॥ ४२ ॥
घृतदिव्योदकक्षीरक्षौद्रदाडिमसैन्धवम् ॥
त्रिफलां मधुसर्पिर्भ्यां निशि नेत्रबलाय च ॥ ४३ ॥
स्वास्थ्यानुवृत्तिकृद्यच्च रोगोच्छेदकरं च यत् ॥
बिसेक्षुमोचचोचाम्रमोदकोत्कारिकादिकम् ॥ ४४ ॥
अद्यात्द्रव्यं गुरु स्निग्धं स्वादु मन्दं स्थिरं पुरः ॥
विपरीतमतश्चान्ते मध्येऽम्ललवणोत्कटम् ॥ ४५ ॥
अन्नेन कुक्षेर्द्वावंशौ पानेनैकं प्रपूरयेत् ॥
आश्रयं पवनादीनां चतुर्थमवशेषयेत् ॥ ४६ ॥
अनुपानं हिमं वारि यवगोधूमयोर्हितम् ॥
दध्नि मद्ये विषे क्षौद्रे कोष्णं पिष्टमयेषु तु ॥ ४७ ॥

शाकमुद्गादिविकृतौ मस्तुतक्राम्लकाञ्जिकम् ॥
सुरा कृशाना पुष्ट्यर्थ स्थूलाना तु मधूदकम् ॥ ४८ ॥
शोषे मासरसो मद्य मासे स्वल्पे च पावके ॥
व्याध्यौषधाध्वभाष्यस्त्रीलघनातपकर्मभि ॥ ४९ ॥
क्षीणे वृद्धे च बाले च पय पथ्य यथामृतम् ॥
विपरीत यदन्नस्य गुणै॰ स्यादविरोधि च ॥ ५० ॥
अनुपान समासेन सर्वदा तत्प्रशस्यते ॥
अनुपान करोत्यूर्जा तृप्ति व्याप्ति दृढाङ्गताम् ॥ ५१ ॥
अन्नसङ्घातशैथिल्यविक्लित्तिजरणानि च ॥
नोर्ध्वजत्रुगदश्वासकासोर क्षतपीनसे ॥ ५२ ॥
गीतभाष्यप्रसङ्गे च स्वरभेदे च तद्धितम् ॥
प्रक्लिन्नदेहमेहाक्षिगलरोगव्रणातुरा ॥ ५३ ॥
पान त्यजेयु सर्वश्च भाष्याध्वशयन त्यजेत् ॥
पीत्वा भुक्त्वाऽऽतप वह्नि यान प्लवनवाहनम् ॥ ५४ ॥
प्रसृष्टे विण्मूत्रे हृदि सुविमले दोषे स्वपथगे
विशुद्धे चोद्गारे क्षुदुपगमने वातेऽनुसरति ॥
तथाग्नावुद्रिक्ते विशदकरणे देहे च सुलघौ
प्रयुञ्जीताहार विधिनियमित काल स हि मतः ॥५५॥

इत्यष्टाङ्गहृदयसहिताया सूत्रस्थाने अष्टमोऽध्याय ॥ ८ ॥

# नवमोऽध्यायः ।



अथातो द्रव्यादिविज्ञानीयमध्यायं व्याख्यास्यामः ।

द्रव्यमेव रसादीनां श्रेष्ठं ते हि तदाश्रयाः ॥
पञ्चभूतात्मकं तत्तु क्ष्मामधिष्ठाय जायते ॥ १ ॥
अम्बुयोन्यग्निपवननभसां समवायतः ॥
तन्निवृत्तिर्विशेषश्च व्यपदेशस्तु भूयसा ॥ २ ॥
तस्मान्नैकरसं द्रव्यं भूतसंघातसम्भवात् ॥
नैकदोषास्ततो रोगास्तत्र व्यक्तो रसः स्मृतः ॥ ३ ॥
अव्यक्तोऽनुरसः किञ्चिदन्ते व्यक्तोऽपि चेष्यते ॥
गुर्वादयो गुणा द्रव्ये पृथिव्यादौ रसाश्रये ॥ ४ ॥
रसेषु व्यपदिश्यन्ते साहचर्य्योपचारतः ॥
तत्र द्रव्यं गुरुस्थूलस्थिरगन्धगुणोल्वणम् ॥ ५ ॥
पार्थिवं गौरवस्थैर्य्यसङ्घातोपचयावहम् ॥
द्रवशीतगुरुस्निग्धमंदसान्द्ररसोल्वणम् ॥ ६ ॥
आप्यं स्नेहनविस्पन्दक्लेदप्रह्लादबन्धकृत् ॥
रूक्षतीक्ष्णोष्णविशदसूक्ष्मरूपगुणोल्वणम् ॥ ७ ॥
आग्नेयं दाहभावर्णप्रकाशपचनात्मकम् ॥
वायव्यं रूक्षविशदं लघुस्पर्शगुणोल्वणम् ॥ ८ ॥
रौक्ष्यलाघववैशद्यविचारग्लानिकारकम् ॥
नाभसं सूक्ष्मविशदलघुशब्दगुणोल्वणम् ॥ ९ ॥

सौषिर्य्यलाघवकरं जगत्येवमनौषधम् ॥
न किञ्चिद्विद्यते द्रव्यं वशान्नानार्थयोगयोः ॥ १० ॥
द्रव्यमूर्ध्वगतं तत्र प्रायोऽग्निपवनोत्कटम् ॥
अधोगामि च भूयिष्ठं भूमितोयगुणाधिकम् ॥ ११ ॥
इति द्रव्यं रसान्भेदैरुत्तरत्रोपदेक्ष्यते ॥
वीर्य्यं पुनर्वदन्त्येके गुरुस्निग्धहिमं मृदु ॥ १२ ॥
लघुरूक्षोष्णतीक्ष्णञ्च तदेव मतमष्टधा ॥
चरकस्त्वाह वीर्य्यं तद्येन या क्रियते क्रिया ॥ १३ ॥
नावीर्य्यं कुरुते किञ्चित्सर्वा वीर्य्यकृता हि सा ॥
गुर्वादिष्वेव वीर्य्याख्या तेनान्वर्थेति वर्ण्यते ॥ १४ ॥
समग्रगुणसारेषु शक्त्युत्कर्षविवर्त्तिषु ॥
व्यवहाराय मुख्यत्वाद्बह्वग्रग्रहणादपि ॥ १५ ॥
अतश्च विपरीतत्वात्सम्भवन्त्यपि नैव सा ॥
विवक्ष्यते रसाद्येषु वीर्य्यं गुर्वादयो ह्यतः ॥ १६ ॥
उष्णं शीतं द्विधैवान्ये वीर्य्यमाचक्षतेऽपि च ॥
नानात्मकमपि द्रव्यमग्नीषोमौ महाबलौ ॥ १७ ॥
व्यक्ताव्यक्तं जगदिव नातिक्रामति जातुचित् ॥
तत्रोष्णं भ्रमतृड्ग्लानिस्वेददाहाशुपाकिताः ॥ १८ ॥
शमञ्च वातकफयोः करोति शिशिरं पुनः ॥
ह्लादनं जीवनं स्तम्भं प्रसादं रक्तपित्तयोः ॥ १९ ॥
जाठरेणाग्निना योगाद्यदुदेति रसान्तरम् ॥
रसानां परिणामान्ते स विपाक इति स्मृतः ॥ २० ॥

स्वादुः पटुश्च मधुरमम्लोऽम्लं पच्यते रसः ॥
तिक्तोष्णककषायाणां विपाकः प्रायशः कटुः ॥ २१ ॥
रसैरसौ तुल्यफलस्तत्र द्रव्यं शुभाशुभम् ॥
किञ्चिद्रसेन कुरुते कर्म्म पाकेन वापरम् ॥ २२ ॥
गुणान्तरेण वीर्य्येण प्रभावेणैव किञ्चन ॥
यद्यद्द्रव्ये रसादीनां बलवत्त्वेन वर्त्तते ॥ २३ ॥
अभिभूयेतरास्तत्तत्कारणत्वं प्रपद्यते ॥
विरुद्धगुणसंयोगे भूयसाल्पं हि जीयते ॥ २४ ॥
रसं विपाकस्तौ वीर्य्यं प्रभावस्तान्यपोहति ॥
बलसाम्ये रसादीनामिति नैसर्गिकं बलम् ॥ २५ ॥
रसादिसाम्ये यत्कर्म्म विशिष्टं तत्प्रभावजम् ॥
दन्ती रसाद्यैस्तुल्यापि चित्रकस्य विरेचनी ॥ २६ ॥
मधुकस्य च मृद्वीका घृतं क्षीरस्य दीपनम् ॥
इति सामान्यतः कर्म्म द्रव्यादीनां पुनश्च तत् ॥ २७ ॥
विचित्रप्रत्ययारब्धद्रव्यभेदेन भिद्यते ॥
स्वादुर्गुरुश्च गोधूमो वातजिद्वातकृद्यवः ॥ २८ ॥
उष्णा मत्स्याः पयः शीतं कटुः सिंहो न सूकरः ॥ २९ ॥

इत्यष्टाङ्गहृदयसंहितायां सूत्रस्थाने नवमोऽध्यायः ॥ ९ ॥

# दशमोऽध्यायः ।



अथातो रसभेदीयमध्यायं व्याख्यास्यामः ।

क्ष्माम्भोऽग्निक्ष्माम्बुतेजःखवाय्वग्न्यनिलगोऽनिलैः ॥
द्वयोल्बणैः क्रमाद्भूतैर्मधुरादिरसोद्भवः ॥ १ ॥

तेषा विद्याद्रस स्वादु यो वक्त्रमनुलिम्पति ॥
आस्वाद्यमानो देहस्य ह्लादनोऽक्षप्रसादन ॥ २ ॥
प्रिय पिपीलिकादीनामम्लः क्षालयते मुखम् ॥
हर्षणो रोमदन्तानामक्षिभ्रुवनिकोचन· ॥ ३ ॥
लवण स्यन्दयत्यास्य कपोलगलदाहकृत् ॥
तिक्तो विशदयत्यास्य रसन प्रतिहन्ति च ॥ ४ ॥
उद्वेजयति जिह्वाग्र कुर्वश्चिमिचिमा कटु· ॥
स्रावयत्यक्षिनासास्य कपोलौ दहतीव च ॥ ५ ॥
कषायो जडयेज्जिह्वा कण्ठस्रोतोविबन्धकृत् ॥
रसानामिति रूपाणि कर्माणि मधुरो रस ॥ ६ ॥
आजन्मसात्म्यात् कुरुते धातूना प्रबल बलम् ॥
बालवृद्धक्षतक्षीणवर्णकेशेन्द्रियौजसम् ॥ ७ ॥
प्रशस्तो बृहण कण्ठ्य स्तन्यसन्धानकृद्गुरु· ॥
आयुष्यो जीवन स्निग्ध पित्तानिलविषापह ॥ ८ ॥
कुरुतेत्युपयोगेन समेद कफजान् गदान् ॥
स्थौल्याग्निसादसन्यासमेहगण्डार्बुदादिकान् ॥ ९ ॥
अम्लोऽग्निदीप्तिकृत् स्निग्धो हृद्य· पाचनरोचन ॥
उष्णवीर्यो हिमस्पर्श प्रीणन क्लेदनो लघु ॥ १० ॥
करोति कफपित्तास्त्र मूढवातानुलोमनम् ॥
सोऽत्यभ्यस्तस्तनो कुर्य्याच्छैथिल्य तिमिर भ्रमम्॥११॥
कण्डुपाण्डुत्ववीसर्पशोफविस्फोटतृड्ज्वरान् ॥
लवण स्तम्भसङ्घातबन्धविध्मापनोऽग्निकृत् ॥ १२ ॥

स्नेहनः स्वेदनस्तीक्ष्णो रोचनश्छेदभेदकृत् ॥
सोऽतियुक्तोऽस्रपवनं खलतिं पलितं बलिम् ॥ १३ ॥
तृट्कुष्ठविषवीसर्पाञ्जनयेत् क्षपयेद्बलम् ॥
तिक्तः स्वयमरोचिष्णुररुचिं कृमितृड्विषम् ॥ १४ ॥
कुष्ठमूर्च्छाज्वरोत्क्लेशदाहपित्तकफाञ्जयेत् ॥
क्लेदमेदोवसामज्जशकृन्मूत्रोपशोषणः ॥ १५ ॥
लघुर्मेध्यो हिमो रूक्षः स्तन्यकण्ठविशोधनः ॥
धातुक्षयानिलव्याधीनतियोगात् करोति सः ॥ १६ ॥
कटुर्गलामयोदर्दकुष्ठालसकशोफजित् ॥
व्रणावसादनस्नेहमेदःक्लेदोपशोषणः ॥ १७ ॥
दीपनः पाचनो रुच्यः शोधनोऽन्नस्य शोषणः ॥
छिनत्ति बन्धान् स्रोतांसि विवृणोति कफापहः ॥ १८ ॥
कुरुते सोऽतियोगेन तृष्णां शुक्रबलक्षयम् ॥
मूर्च्छामाकुञ्चनं कम्पं कटिपृष्ठादिषु व्यथाम् ॥ १९ ॥
कषायः पित्तकफहा गुरुरस्रविशोधनः ॥
पीडनो रोपणः शीतः क्लेदमेदोविशोषणः ॥ २० ॥
आमसंस्तम्भनो ग्राही रूक्षोऽतित्वक्प्रसादनः ॥
करोति शीलितः सोऽतिविष्टम्भाध्मानहृद्रुजः ॥ २१ ॥
तृट्कार्श्यपौरुषभ्रंशस्रोतोरोधमलग्रहान् ॥
घृतहेमगुडाक्षोडमोचचोचपरूषकम् ॥ २२ ॥
अभीरुवीरापनसराजादनबलात्रयम् ॥ २३ ॥

मेदे चतस्त्र पर्णिन्यो जीवन्ती जीवकर्षभौ ॥
मधूक मधुक बिम्बी विदारी श्रावणीयुगम् ॥ २४ ॥
क्षीरशुक्ला तुगा क्षीरीक्षीरिण्यौ काश्मरीसहे ॥
क्षीरेक्षुगोक्षुरक्षौद्रद्राक्षादिर्मधुरो गण. ॥ २५ ॥
अम्लो धात्रीफलाम्लीकामातुलुङ्गाम्लवेतसम् ॥
दाडिम रजत तक्र चुक्र पालेवत दधि ॥ २६ ॥
आम्रमाम्रातक भव्य कपित्थ करमर्दकम् ॥
वर सौवर्चल कृष्ण विड सामुद्रमौद्भिदम् ॥ २७ ॥
रोमक पासुज शीस क्षारश्च लवणो गण. ॥
तिक्त पटोलो त्रायन्ती वालकोशीरचन्दनम् ॥ २८ ॥
भूनिम्वनिम्बकटुकातगरागुरुवत्सकम् ॥
नक्तमालद्विरजनीमुस्तमूर्वाटरूषकम् ॥ २९ ॥
पाठापामार्गकास्यायो गुडूची धन्वयासकम् ॥
पञ्चमूल महद्व्याघ्र्यौ विशालाऽतिविषा वचा ॥ ३० ॥
कटुको हिङ्गुमरिचक्रिमिजित् पञ्चकोलकम् ॥
कुठेराद्या हरितका पित्त मूत्रमरुक्करम् ॥ ३१ ॥
वर्ग कषाय पथ्याक्ष शिरीष खदिरो मधु ॥
कदम्बोदुम्बर मुक्ताप्रवालाञ्जनगैरिकम् ॥ ३२ ॥
बाल कपित्थ खर्जूरं विसपद्मोत्पलादि च ॥
मधुर श्लेष्मल प्रायो जीर्णाच्छालियवादृते ॥ ३३ ॥
मुद्गाद्गोधूमत. क्षौद्रात्सिताया जाङ्गलामिषात् ॥
प्रायोऽम्ल पित्तजनन दाडिमामलकादृते ॥ ३४ ॥

अपथ्यं लवणं प्रायश्चक्षुषोऽन्यत्र सैन्धवात् ॥
तिक्तं कटु च भूयिष्ठमवृष्यं वातकोपनम् ॥ ३५ ॥
ऋतेऽमृतापटोलीभ्यां शुण्ठीकृष्णारसोनतः ॥
कषायं प्रायशः शीतं स्तम्भनं चाभयामृते ॥ ३६ ॥
रसाः कट्वम्ललवणा वीर्येणोष्णा यथोत्तरम् ॥
तिक्तः कषायो मधुरस्तद्वदेव च शीतलः ॥ ३७ ॥
तिक्तः कटुः कषायश्च रूक्षा बद्धमलास्तथा ॥
पट्वम्लमधुराः स्निग्धाः सृष्टविण्मूत्रमारुताः ॥ ३८ ॥
पटोः कषायस्तस्माच्च मधुरः परमं गुरुः ॥
लघुरम्लः कटुस्तस्मात्तस्मादपि च तिक्तकः ॥ ३९ ॥
संयोगाः सप्तपञ्चाशत्कल्पना तु त्रिषष्टिधा ॥
रसानां यौगिकत्वेन यथास्थूलं विभज्यते ॥ ४० ॥
एकैकहीनांस्तान् पञ्चपञ्च यान्ति रसा द्विके ॥
त्रिके स्वादुर्दशाम्लः षट् त्रीन् पटुस्तिक्त एककम् ॥४१॥
चतुष्केषु दश स्वादुश्चतुरोऽम्लः पटुः सकृत् ॥
पञ्चकेष्वेकमेवाम्लो मधुरः पञ्च सेवते ॥
द्रव्यमेकं षडास्वादमसंयुक्ताश्च षड्रसाः ॥ ४२ ॥
षट्पञ्चकाः षट् च पृथग्रसाः स्युश्चतुर्द्विकौ पञ्चदशप्रकारौ॥
भेदास्त्रिकाविंशतिरेकमेकं द्रव्यं षडास्वादमिति त्रिषष्टिः ४३
ते रसानुरसतो रसभेदास्तारतम्यपरिकल्पनया च ॥
संभवन्ति गणनां समतीता दोषभेषजवशादुपयोज्याः॥४४॥

इत्यष्टाङ्गहृदयसंहितायां सूत्रस्थाने दशमोऽध्यायः ॥ १० ॥

# एकादशोऽध्यायः ।



अथातो दोषादिविज्ञानीयमध्यायं व्याख्यास्यामः ।

दोषा धातुमला मूलं सदा देहस्य तं चलः ॥
उत्साहोच्छ्वासनिश्वासचेष्टावेगप्रवर्त्तनैः ॥ १ ॥
सम्यग्गत्या च धातूनामक्षाणां पाटवेन च ॥
अनुगृह्णात्यविकृतः पित्तं पक्त्यूष्मदर्शनैः ॥ २ ॥
क्षुत्तृड्रुचिप्रभामेधाधीशौर्यतनुमार्दवैः ॥
श्लेष्मास्थिरत्वस्निग्धत्वसन्धिबन्धक्षमादिभिः ॥ ३ ॥
प्रीणनं जीवनं लेपः स्नेहो धारणपूरणे ॥
गर्भोत्पादश्च धातूनां श्रेष्ठं कर्म क्रमात्स्मृतम् ॥ ४ ॥
अवष्टम्भः पुरीषस्य मूत्रस्य क्लेदवाहनम् ॥
स्वेदस्य क्लेदविधृतिर्वृद्धस्तु कुरुतेऽनिलः ॥ ५ ॥
कार्श्यकार्ष्ण्योष्णकामित्वकम्पानाहसकृद्ग्रहान् ॥
बलनिद्रेन्द्रियभ्रंशप्रलापभ्रमदीनताः ॥ ६ ॥
पीतविण्मूत्रनेत्रत्वक्क्षुत्तृड्दाहाल्पनिद्रता ॥
पित्तं श्लेष्माग्निसदनप्रसेकालस्यगौरवम् ॥ ७ ॥
श्वैत्यशैत्यश्लथाङ्गत्वश्वासकासातिनिद्रताः ॥
रसोऽपि श्लेष्मवद्रक्तं विसर्पप्लीहविद्रधीन् ॥ ८ ॥
कुष्ठवातास्रपित्तास्रगुल्मोपकुशकामलाः ॥
व्यङ्गाग्निनाशसंमोहरक्तत्वङ्नेत्रमूत्रताः ॥ ९ ॥

मांसं गण्डार्बुदग्रन्थिगण्डोरूदरवृद्धिताः ॥
कण्ठादिष्वधिमांसं च तद्वन्मेदस्तथा श्रमम् ॥ १० ॥
अल्पेऽपि चेष्टिते श्वासं स्फिक्स्तनोदरलम्बनम् ॥
अस्थ्यध्यस्थ्यधिदन्तांश्च मज्जा नेत्राङ्गगौरवम् ॥ ११ ॥
पर्वसु स्थूलमूलानि कुर्यात् कृच्छ्राण्यरूंषि च ॥
अतिस्त्रीकामतां वृद्धं शुक्रं शुक्राश्मरीमपि ॥ १२ ॥
कुक्षावाध्मानमाटोपं गौरवं वेदनां शकृत् ॥
मूत्रन्तु बस्तिनिस्तोदं कृतेऽप्यकृतसंज्ञताम् ॥ १३ ॥
स्वेदोऽतिस्वेददौर्गन्ध्यकण्डूरेवं च लक्षयेत् ॥
दूषिकादीनपि मलान् बाहुल्यगुरुतादिभिः ॥ १४ ॥
लिङ्गं क्षीणेऽनिलेऽङ्गस्य सादोऽल्पं भाषिते हितम् ॥
संज्ञामोहस्तथा श्लेष्मवृद्ध्युक्तामयसम्भवः ॥ १५ ॥
पित्ते मन्दोऽनलः शीतं प्रभाहानिः कफे भ्रमः ॥
श्लेष्माशयानां शून्यत्वं हृद्द्रवश्लथसन्धिताः ॥ १६ ॥
रसे रौक्ष्यं श्रमः शोषो ग्लानिः शब्दासहिष्णुता ॥
रक्तेऽम्लशिशिरप्रीतिशिराशैथिल्यरूक्षताः ॥ १७ ॥
मांसेऽक्षग्लानिगण्डस्फिक्शुष्कतासन्धिवेदनाः ॥
मेदसि स्वपनं कट्याः प्लीह्नो वृद्धिः कृशाङ्गता ॥ १८ ॥
अस्थ्न्यस्थितोदः शदनं दन्तकेशनखादिषु ॥
अस्थ्ना मज्जनि सौषिर्यं भ्रमास्तिमिरदर्शनम् ॥ १९ ॥
शुक्रे चिरात्प्रसिच्येत शुक्रं शोणितमेव वा ॥
तोदोऽत्यर्थं वृषणयोर्मेढ्रं धूमायतीव च ॥ २० ॥

पुरीषे वायुरन्त्राणि सशब्दो वेष्टयन्निव ॥
कुक्षौ भ्रमति यात्यूर्ध्वं हृत्पार्श्वे पीडयन् भृशम् ॥ २१ ॥
मूत्रेऽल्प मूत्रयेत् कृच्छ्राद्विवर्णं सास्रमेव वा ॥
स्वेदे रोमच्युति. स्तब्धरोमता स्फुटन त्वचः ॥ २२ ॥
मलानामतिसूक्ष्माणा दुर्लक्ष्यं लक्षयेत्क्षयम् ॥
स्वमलायनसशोषतोदशून्यत्वलाघवैः ॥ २३ ॥
दोषादीना यथास्व च विद्याद्वृद्धिक्षयौ भिषक् ॥
क्षयेण विपरीताना गुणाना वर्द्धनेन च ॥ २४ ॥
वृद्धि मलाना सङ्गाच्च क्षयं चातिविसर्गत' ॥
मलोचितत्वाद्देहस्य क्षयो वृद्धेस्तु पीडन ॥ २५ ॥
तत्रास्थनि स्थितो वायु पित्त तु स्वेदरक्तयो ॥
श्लेष्मा शेषेषु तेनैषामाश्रयाश्रयिणा मिथ. ॥ २६ ॥
यदेकस्य तदन्यस्य वर्द्धनक्षपणौषधम् ॥
अस्थिमारुतयोर्नैव प्रायो वृद्धिर्हि तर्पणात् ॥ २७ ॥
श्लेष्मणानुगता तस्मात् सक्षयस्तद्विपर्ययात् ॥
वायुनानुगतोऽस्माच्च वृद्धिक्षयसमुद्भवान् ॥ २८ ॥
विकारान् साधयेच्छीघ्र क्रमाल्लङ्घनबृंहणै. ॥
वायोरन्यत्र तज्जास्तु तैरेवोत्क्रमयोजितैः ॥ २९ ॥
विशेषाद्रक्तवृद्ध्युत्थान् रक्तस्रुतिविरेचनैः ॥
मासवृद्धिभवान्रोगाञ्शस्त्रक्षाराग्निकर्मभिः ॥ ३० ॥
स्थौल्यकार्श्योपचारेण मेदोजानस्थिसक्षयात् ॥
जातान् क्षीरघृतैस्तिक्तसंयुतैर्बस्तिभिस्तथा ॥ ३१ ॥

विड्वृद्धिजानतीसाराक्रियया विट्क्षयोद्भवान् ॥
मेषाजमध्यकुल्माषयवमाषद्वयादिभिः ॥ ३२ ॥
मूत्रवृद्धिक्षयोत्थांश्च मेहकृच्छ्रचिकित्सया ॥
व्यायामाभ्यञ्जनस्वेदमद्यैः स्वेदक्षयोद्भवान् ॥ ३३ ॥
स्वस्थानस्थस्य कायाग्नेरंशा धातुषु संश्रिताः ॥
तेषां सादातिदीप्तिभ्यां धातुवृद्धिक्षयोद्भवः ॥ ३४ ॥
पूर्वो धातुः परं कुर्याद्वृद्धः क्षीणश्च तद्विधम् ॥
दोषा दुष्टा रसैर्धातून् दूषयन्त्युभये मलान् ॥ ३५ ॥
अधो द्वे सप्त शिरसि खानि स्वेदवहानि च ॥
मला मलायनानि स्युर्यथास्वं तेष्वतो गदाः ॥ ३६ ॥
ओजस्तु तेजो धातूनां शुक्रान्तानां परं स्मृतम् ॥
हृदयस्थमपि व्यापि देहस्थितिनिबन्धनम् ॥ ३७ ॥
स्निग्धं सोमात्मकं शुद्धमीषल्लोहितपीतकम् ॥
यन्नाशे नियतं नाशो यस्मिंस्तिष्ठति तिष्ठति ॥ ३८ ॥
निष्पद्यन्ते यतो भावा विविधा देहसंश्रयाः ॥
ओजः क्षीयेत कोपक्षुद्ध्यानशोकश्रमादिभिः ॥ ३९ ॥
बिभेति दुर्बलोऽभीक्ष्णं ध्यायति व्यथितेन्द्रियः ॥
विच्छायो दुर्मना रूक्षो भवेत् क्षामश्च तत्क्षये ॥ ४० ॥
जीवनीयौषधक्षीररसाद्यास्तत्र भेषजम् ॥
ओजोविवृद्धौ देहस्य तुष्टिपुष्टिबलोदयः ॥ ४१ ॥
यदन्नं द्वेष्टि यदपि प्रार्थयेताविरोधि तु ॥
तत्तत्त्यजन् समश्नंश्च तौ तौ वृद्धिक्षयौ जयेत ॥ ४२ ॥

कुर्वते हि रुचिं दोषा विपरीतसमानयो. ॥
वृद्धाः क्षीणाश्च भूयिष्ठं लक्षयन्त्यबुधास्तु न ॥ ४३ ॥
यथावलं यथास्वं च दोषा वृद्धा वितन्वते ॥
रूपाणि जहति क्षीणा. समा' स्वं कर्म कुर्वते ॥ ४४ ॥
य एव देहस्य समा विवृद्ध्यै त एव दोषा विषमा वधाय ॥
यस्मादतस्ते हितचर्ययैव क्षयाद्विवृद्धेरिव रक्षणीया.॥ ४५॥

इत्यष्टाङ्गहृदयसंहिताया सूत्रस्थाने एकादशोऽध्यायः ॥ ११ ॥

## द्वादशोऽध्यायः ।

अथातो दोषभेदीयाध्याय व्याख्यास्यामः ।
पक्वाशयकटीसक्थिश्रोतास्थिस्पर्शनेन्द्रियम् ॥
स्थानं वातस्य तत्रापि पक्वाधान विशेषतः ॥ १ ॥
नाभिरामाशय. स्वेदो लसीका रुधिरं रस. ॥
दृक्स्पर्शनं च पित्तस्य नाभिरत्र विशेषतः ॥ २ ॥
उरःकण्ठशिर.क्लोमपर्वाण्यामाशयो रसः ॥
मेदो घ्राणं च जिह्वा च कफस्य सुतरामुरः ॥ ३ ॥
प्राणादिभेदात् पञ्चात्मा वायुः प्राणोऽत्र मूर्द्धग. ॥
उरःकण्ठचरो बुद्धिहृदयेन्द्रियचित्तधृक् ॥ ४ ॥
ष्ठीवनक्षवथूद्गारनिःश्वासान्नाप्रवेशकृत् ॥
उर'स्थानमुदानस्य नासानाभिगलाश्चरेत् ॥ ५ ॥

वाक्प्रवृत्तिप्रयत्नोर्जाबलवर्णस्मृतिक्रियः ॥
व्यानो हृदि स्थितः कृत्स्नदेहचारी महाजवः ॥ ६ ॥
गत्यपक्षेपणोत्क्षेपनिमेषोन्मेषणादिकाः ॥
प्रायः सर्वाः क्रियास्तस्मिन् प्रतिबद्धाः शरीरिणाम् ॥७॥
समानोऽग्निसमीपस्थः कोष्ठे चरति सर्वतः ॥
अन्नं गृह्णाति पचति विवेचयति मुञ्चति ॥ ८ ॥
अपानोऽपानगः श्रोणिबस्तिमेढ्रोरुगोचरः ॥
शुक्रार्त्तवशकृन्मूत्रगर्भनिष्क्रमणक्रियः ॥ ९ ॥
पित्तं पञ्चात्मकं तत्र पक्वामाशयमध्यगम् ॥
पञ्चभूतात्मकत्वेऽपि यत्तैजसगुणोदयात् ॥ १० ॥
त्यक्तद्रवत्वं पाकादिकर्मणानलशब्दितम् ॥
पचत्यन्नं विभजते सारकिट्टौ पृथक् तथा ॥ ११ ॥
तत्रस्थमेव पित्तानां शेषाणामप्यनुग्रहम् ॥
करोति बलदानेन पाचकं नाम तत् स्मृतम् ॥ १२ ॥
आमाशयाश्रयं पित्तं रञ्जकं रसरञ्जनात् ॥
बुद्धिमेधाभिमानाद्यैरभिप्रेतार्थसाधनात् ॥ १३ ॥
साधकं हृद्गतं पित्तं रूपालोचनतः स्मृतम् ॥
दृक्स्थमालोचकं त्वक्स्थं भ्राजकं भ्राजनात् त्वचः॥१४॥
श्लेष्मा तु पञ्चधोरस्थः स त्रिकस्य स्ववीर्यतः ॥
हृदयस्यान्नवीर्याच्च तत्स्थ एवाम्बुकर्मणा ॥ १५ ॥
कफधाम्नां च शेषाणां यत्करोत्यवलम्बनम् ॥
अतोऽवलम्बकः श्लेष्मा यस्त्वामाशयसंस्थितः ॥ १६ ॥

क्लेदक. सोऽन्नसङ्घातक्लेदनाद्रसबोधनात् ॥
बोधको रसनास्थायी शिर.सस्थोऽक्षतर्पणात् ॥ १७ ॥
तर्पक सन्धिसश्लेषाच्श्लेपक· सन्धिपु स्थित ॥
इति प्रायेण दोपाणा स्थानान्यविकृतात्मनाम् ॥ १८ ॥
व्यापिनामपि जानीयात् कर्माणि च पृथक्पृथक् ॥
उष्णेन युक्ता रूक्षाद्या वायो· कुर्वन्ति सञ्चयम् ॥ १९ ॥
शीतन कोपमुष्णेन शम स्निग्धादयो गुणा· ॥
शीतेन युक्तास्तीक्ष्णाद्याश्चय पित्तस्य कुर्वते ॥ २० ॥
उष्णेन कोप मन्दाद्या शम शीतोपसहिता ॥
शीतेन युक्ताः स्निग्धाद्याः कुर्वते श्लेष्मणश्चयम् ॥२१॥
उष्णेन कोपं तेनैव गुणा रूक्षादय शमम् ॥
चयो वृद्धि स्वधाम्न्येव प्रद्वेपो वृद्धिहेतुपु ॥ २२ ॥
विपरीतगुणेच्छा च कोपस्तून्मार्गगामिता ॥
लिङ्गाना दर्शन स्वेपामस्वास्थ्यं रोगसम्भव. ॥ २३ ॥
चयप्रकोपप्रशमा वायोर्ग्रीष्मादिपु त्रिपु ॥
वर्षादिषु तु पित्तस्य श्लेष्मण शिशिरादिषु ॥ २४ ॥
चीयते लघुरूक्षाभिरोपधीभि समीरण ॥
तद्विधस्तद्विधे देहे कालस्यौष्ण्यान्न कुप्यति ॥ २५ ॥
अद्भिरम्लविपाकाभिरोपधीभिश्च तादृशम् ॥
पित्त याति चय कोपं न तु कालस्य शैत्यत. ॥ २६ ॥
चीयते स्निग्धशीताभिरुदकौषधिभि. कफ. ॥
तुल्येऽपि काले देहे च स्कन्नत्वान्न प्रकुप्यति ॥ २७ ॥

इति कालस्वभावोऽयमाहारादिवशात्पुनः ॥
चयादीन्यान्ति सद्योऽपि दोषाः कालेऽपि वा न तु ॥२८॥
व्याप्नोति सहसा देहमापादतलमस्तकम् ॥
निवर्तते तु कुपितो मलोऽल्पाल्पं जलौघवत् ॥ २९ ॥
नानारूपैरसंख्येयैर्विकारैः कुपिता मलाः ॥
तापयन्ति तनुं तस्मात्तद्धेत्वाकृतिसाधनम् ॥ ३० ॥
शक्यं नैकैकशो वक्तुमतः सामान्यमुच्यते ॥
दोषा एव हि सर्वेषा रोगाणामेककारणम् ॥ ३१ ॥
यथा पक्षी परिपतन् सर्वतः सर्वमप्यहः ॥
छायामत्येति नात्मीयां यथा वा कृत्स्नमप्यदः ॥ ३२ ॥
विकारजातं विविधं त्रीन् गुणान्नातिवर्त्तते ॥
तथा स्वधातुवैषम्यनिमित्तमपि सर्वदा ॥ ३३ ॥
विकारजातं त्रीन् दोषांस्तेषां कोपे तु कारणम् ॥
अर्थैरसात्म्यैः संयोगः कालः कर्म च दुष्कृतम् ॥ ३४ ॥
हीनातिमिथ्यायोगेन भिद्यते तत्पुनस्त्रिधा ॥
हीनोऽर्थेनेन्द्रियस्याल्पः संयोगः स्वेन नैव वा ॥ ३५ ॥
अतियोगोऽतिसंसर्गः सूक्ष्मभासुरभैरवम् ॥
अत्यासन्नातिदूरस्थं विप्रियं विकृतादि च ॥ ३६ ॥
यदक्ष्णा वीक्ष्यते रूपं मिथ्यायोगः स दारुणः ॥
एवमत्युच्चपूत्यादीनिन्द्रियार्थान् यथायथम् ॥ ३७ ॥
विद्यात् कालस्तु शीतोष्णवर्षभेदात् त्रिधा मतः ॥
स हीनो हीनशीतादिरतियोगोऽतिलक्षणः ॥ ३८ ॥

मिथ्यायोगस्तु निर्दिष्टो विपरीतस्वलक्षण. ॥
कायवाक्चित्तभेदेन कर्मापि विभजेत् त्रिधा ॥ ३९ ॥
कायादिकर्मणा हीना प्रवृत्तिर्हीनसञ्ज्ञिका ॥
अतियोगोऽतिवृत्तिस्तु वेगोदीरणधारणम् ॥ ४० ॥
विषमाङ्गक्रियारम्भः पतनस्खलनादिकम् ॥
भाषण सामिभुक्तस्य रागद्वेषभयादि च ॥ ४१ ॥
कर्म प्राणातिपातादि दशधा यच्च निन्दितम् ॥
मिथ्यायोगः समस्तोऽसाविह चामुत्र वा कृतम् ॥४२ ॥
निदानमेतद्दोषाणा कुपितास्तेन नैकधा ॥
कुर्वन्ति विविधान् व्याधीञ्शाखाकोष्ठास्थिसन्धिषु॥४३॥
शाखा रक्तादयस्त्वक् च बाह्यरोगायन हि तत् ॥
तदाश्रया मषव्यङ्गगण्डालज्यर्बुदादय ॥ ४४ ॥
वहिर्भागाश्च दुर्नामगुल्मशोफादयो गदा. ॥
अन्तः कोष्ठो महास्रोतआमपक्वाशयाश्रय. ॥ ४५ ॥
तत्स्थानाच्छर्द्यतीसारकासश्वासोदरज्वरा ॥
अन्तर्भाग च शोफार्शोगुल्मवीसर्पविद्रधि ॥ ४६ ॥
शिरोहृदयवस्त्यादिमर्माण्यस्थ्ना च सन्धय. ॥
तन्निबद्धा शिरास्नायुकण्डराद्याश्च मध्यमा. ॥ ४७ ॥
रोगमार्ग. स्थितास्तत्र यक्ष्मपक्षवधार्दिता' ॥
मूर्धादिरोगा. सन्ध्यस्थित्रिकशूलग्रहादय. ॥ ४८ ॥
स्रसव्यासव्यधस्वापसादरुक्तोदभेदनम् ॥
सङ्गाङ्गभङ्गसङ्कोचवर्तहर्षणतर्षणम् ॥ ४९ ॥

कम्पपारुष्यसौषिर्यशोषस्पन्दनवेष्टनम् ॥
स्तम्भः कषायरसता वर्णः श्यावोऽरुणोऽपि वा ॥ ५० ॥
कर्माणि वायोः पित्तस्य दाहरागोष्मपाकिताः ॥
स्वेदः क्लेदः स्रुतिः कोथः सदनं मूर्च्छनं मदः ॥ ५१ ॥
कटुकाम्लौ रसौ वर्णः पाण्डुरारुणवर्जितः ॥
श्लेष्मणः स्नेहकाठिन्यकण्डुशीतत्वगौरवम् ॥ ५२ ॥
बन्धोपलेपस्तैमित्यशोफापक्त्यतिनिद्रताः ॥
वर्णः श्वेतो रसौ स्वादुलवणौ चिरकारिता ॥ ५३ ॥
इत्यशेषामयव्यापि यदुक्तं दोषलक्षणम् ॥
दर्शनाद्यैरवहितस्तत्सम्यगुपलक्षयेत् ॥ ५४ ॥
व्याध्यवस्थाविभागज्ञः पश्यन्नार्तान् प्रतिक्षणम् ॥
अभ्यासात् प्राप्यते दृष्टिः कर्मसिद्धिप्रकाशिनी ॥ ५५ ॥
रत्नादिसदसज्ज्ञानं न शास्त्रादेव जायते ॥
दृष्टापचारजः कश्चित्कश्चित्पूर्वापराधजः ॥ ५६ ॥
तत्सङ्कराद्भवत्यन्यो व्याधिरेवं त्रिधा स्मृतः ॥
यथा निदानदोषोत्थः कर्मजो हेतुभिर्विना ॥ ५७ ॥
महारम्भोऽल्पके हेतावान्तको दोषकर्मजः ॥
विपक्षशीलनात्पूर्वः कर्मजः कर्मसंक्षयात् ॥ ५८ ॥
गच्छत्युभयजन्मा तु दोषकर्मक्षयात्क्षयम् ॥
द्विधा स्वपरतन्त्रत्वाद्व्याधयोऽन्त्याः पुनर्द्विधा ॥ ५९ ॥
पूर्वजाः पूर्वरूपाख्या जाताः पश्चादुपद्रवाः ॥
यथा स्वजन्मोपशयाः स्वतन्त्राः स्पष्टलक्षणाः ॥ ६० ॥

विपरीतास्ततोऽन्ये तु विद्यादेव मलानपि ॥
ताँल्लक्षयेदवहितो विकुर्वाणान्प्रतिज्वरम् ॥ ६१ ॥
तेषा प्रधानप्रशमे प्रशमो शाम्यतस्तथा ॥
पश्चाच्चिकित्सेत्तूर्ण वा वलवन्तमुपद्रवम् ॥ ६२ ॥
व्याधिक्लिष्टशरीरस्य पीडाकरतरो हि सः ॥
विकारनामाकुशलो न जिह्रीयात्कदाचन ॥ ६३ ॥
नहि सर्वविकाराणा नामतोऽस्ति ध्रुवा स्थिति ॥
स एव कुपितो दोष समुत्थानविशेषत. ॥ ६४ ॥
स्थानान्तराणि च प्राप्य विकारान्कुरुते वहून् ॥
तस्माद्विकारप्रकृतीरधिष्ठानान्तराणि च ॥ ६५ ॥
बुद्ध्वा हेतुविशेपाश्च शीघ्र कुर्यादुपक्रमम् ॥
दूष्य देश वल कालमनल प्रकृति वयः ॥ ६६ ॥
सत्त्व सात्म्य तथाहारमवस्थाश्च पृथग्विधा. ॥
सूक्ष्मसूक्ष्मा. समीक्ष्यैषा दोषौषधनिरूपणे ॥ ६७ ॥
यो वर्त्तते चिकित्साया न स स्खलति जातुचित् ॥
गुर्वल्पव्याधिसस्थानं सत्त्वदेहवलावलात् ॥ ६८ ॥
दृश्यतेऽप्यन्यथाकार तस्मिन्नवहितो भवेत् ॥
गुरुं लघुमिति व्याधि कल्पयस्तु भिषग्ब्रुव. ॥ ६९ ॥
अल्पदोपाकलनया पथ्ये विप्रतिपद्यते ॥
ततोऽल्पमल्पवीर्य वा गुरुव्याधौ प्रयोजितम् ॥ ७० ॥

उदीरयेत्तरां रोगान्संशोधनमयोगतः ॥
शोधनं त्वतियोगेन विपरीतं विपर्यये ॥ ७१ ॥
क्षिणुयान्न मलानेव केवलं वपुरस्यति ॥
अतोऽभियुक्तः सततं सर्वमालोच्य सर्वथा ॥ ७२ ॥
तथा युञ्जीत भैषज्यमारोग्याय यथा ध्रुवम् ॥
वक्ष्यन्तेऽतः परं दोषा वृद्धिक्षयविभेदतः ॥ ७३ ॥
पृथक् त्रीन्विद्धि संसर्गेस्त्रिधा तत्र तु तान्नव ॥
त्रीनेव समया वृद्ध्या षडेकस्यातिशायने ॥ ७४ ॥
त्रयोदश समस्तेषु षड् द्व्येकातिशयेन तु ॥
एकं तुल्याधिकैः षट् च तारतम्यविकल्पनात् ॥ ७५ ॥
पञ्चविंशतिमित्येवं वृद्धैः क्षीणैश्च तावतः ॥
एकैकवृद्धिसमताक्षयैः षट् ते पुनश्च षट् ॥ ७६ ॥
एकक्षयद्वन्द्ववृद्ध्या सविपर्यययाऽपि ते ॥
भेदा द्विषष्टिर्निर्दिष्टास्त्रिषष्टः स्वास्थ्यकारणम् ॥ ७७ ॥

संसर्गाद्रसरुधिरादिभिस्तथैषां
दोषांस्तु क्षयसमताविवृद्धिभेदैः ॥
आनंत्यं तरतमयोगतश्च याता-
ञ्जानीयादवहितमानसो यथास्वम् ॥ ७८ ॥

इत्यष्टाङ्गहृदयसंहितायां सूत्रस्थाने द्वादशोऽध्यायः ॥ १२ ॥

# त्रयोदशोऽध्यायः।



अथातो दोषोपक्रमणीयमध्यायं व्याख्यास्यामः।
वातस्योपक्रमः स्नेहः स्वेदः संशोधनं मृदु॥
स्वाद्वम्ललवणोष्णानि भोज्यान्यभ्यङ्गमर्दनम्॥ १॥
वेष्टनं त्रासनं सेको मद्यं पैष्टिकगौडिकम्॥
स्निग्धोष्णा वस्तयो वस्तिनियमः सुखशीलता॥ २॥
दीपनैः पाचनैः सिद्धाः स्नेहाश्चानेकयोनयः॥
विशेषान्मेध्यपिशितरसतैलानुवासनम्॥ ३॥
पित्तस्य सर्पिषः पानं स्वादुशीतैर्विरेचनम्॥
स्वादुतिक्तकषायाणि भोजनान्यौषधानि च॥ ४॥
सुगन्धशीतहृद्यानां गन्धानामुपसेवनम्॥
कण्ठे गुणानां हाराणां मणीनामुरसा धृतिः॥ ५॥
कर्पूरचन्दनोशीरैरनुलेपः क्षणेक्षणे॥
प्रदोषश्चन्द्रमाः सौधं हारि गीतं हिमोऽनिलः॥ ६॥
अयन्त्रणसुखं मित्रं पुत्रः सन्दिग्धमुग्धवाक्॥
छन्दानुवर्त्तिनो दाराः प्रियाः शीलविभूषिताः॥ ७॥
शीताम्बुधारागर्भाणि गृहाण्युद्यानदीर्घिकाः॥
सुतीर्थविपुलस्वच्छसलिलाशयसैकते॥ ८॥
साम्भोजजलतीरान्ते कायमाने द्रुमाकुले॥
सौम्या भावाः पयः सर्पिर्विरेकश्च विशेषतः॥ ९॥

श्लेष्मणो विधिना युक्तं तीक्ष्णं वमनरेचनम् ॥
अन्नं रूक्षाल्पतीक्ष्णोष्णं कटुतिक्तकषायकम् ॥ १० ॥
दीर्घकालस्थितं मद्यं रतिप्रीतिप्रजागरः ॥
अनेकरूपो व्यायामश्चिन्ता रूक्षं विमर्दनम् ॥ ११ ॥
विशेषाद्वमनं यूषः क्षौद्रं मेदोघ्नमौषधम् ॥
धूमोपवासगण्डूषा निःसुखत्वं सुखाय च ॥ १२ ॥
उपक्रमः पृथग्दोषान्योऽयमुद्दिश्य कीर्त्तितः ॥
संसर्गसन्निपातेषु तं यथास्वं विकल्पयेत् ॥ १३ ॥
ग्रैष्मः प्रायो मरुत्पित्ते वासन्तः कफमारुते ॥
मरुतो योगवाहित्वात्कफपित्ते तु शारदः ॥ १४ ॥
चय एव जयेद्दोषं कुपितं त्वविरोधयन् ॥
सर्वकोपे बलीयांसं शेषदोषाविरोधतः ॥ १५ ॥
प्रयोगः शमयेद्व्याधिं योऽन्यमन्यमुदीरयेत् ॥
नासौ विशुद्धः शुद्धस्तु शमयेद्यो न कोपयेत् ॥ १६ ॥
व्यायामादूष्मणस्तैक्ष्ण्यादहिताचरणादपि ॥
कोष्ठाच्छाखास्थिमर्म्माणि द्रुतत्वान्मारुतस्य च ॥ १७ ॥
दोषा यान्ति तथा तेभ्यः स्रोतोमुखविशोधनात् ॥
वृद्ध्याभिष्यन्दनात्पाकात्कोष्ठं वायोश्च निग्रहात् ॥ १८ ॥
तत्रस्थाश्च विलम्बेरन् भूयो हेतुप्रतीक्षिणः ॥
ते कालादिबलं लब्ध्वा कुप्यन्त्यन्याश्रयेष्वपि ॥ १९ ॥
तत्रान्यस्थानसंस्थेषु तदीयामबलेषु च ॥
कुर्याच्चिकित्सां स्वामेव बलेनान्याभिभाविषु ॥ २० ॥

आगन्तुं शमयेद्दोष स्थानिनं प्रतिकृत्य वा ॥
प्रायस्तिर्यग्गता दोषाः क्लेशयन्त्यातुराश्चिरम् ॥ २१ ॥
कुर्यान्न तेषु त्वरया देहाग्निबलविक्रियाम् ॥
शमयेत्तान्प्रयोगेण सुखं वा कोष्ठमानयेत् ॥ २२ ॥
ज्ञात्वा कोष्ठप्रपन्नांश्च यथासन्नं विनिर्हरेत् ॥
स्रोतोरोधबलभ्रंशगौरवानिलमूढता ॥ २३ ॥
आलस्यापक्तिनिष्ठीवमलसङ्गारुचिक्लमाः ॥
लिङ्गं मलानां सामानां निरामाणां विपर्ययः ॥ २४ ॥
ऊष्मणोऽल्पबलत्वेन धातुमाद्यमपाचितम् ॥
दुष्टमामाशयगतं रसमामं प्रचक्षते ॥ २५ ॥
अन्ये दोषेभ्य एवातिदुष्टेभ्योऽन्योन्यमूर्च्छनात् ॥
कोद्रवेभ्यो विषस्येव वदन्त्यामस्य सम्भवम् ॥ २६ ॥
आमेन तेन सम्पृक्ता दोषा दूष्याश्च दूषिताः ॥
सामा इत्युपदिश्यन्ते ये च रोगास्तदुद्भवाः ॥ २७ ॥
सर्वदेहप्रविसृतान्सामान्दोषान्न निर्हरेत् ॥
लीनान्धातुष्वनुत्क्लिष्टान्फलादामाद्रसानिव ॥ २८ ॥
आश्रयस्य हि नाशाय ते स्युर्दुर्निर्हरत्वतः ॥
पाचनैर्दीपनैः स्नेहैस्तान्स्वेदैश्च परिष्कृतान् ॥ २९ ॥
शोधयेच्छोधनैः काले यथासन्नं यथाबलम् ॥
हन्त्याशु युक्तं वक्त्रेण द्रव्यमामाशयान्मलान् ॥ ३० ॥
घ्राणेन चोर्ध्वजत्रूत्थान् पक्वाधानाद्गुदेन च ॥
उत्क्लिष्टानध ऊर्ध्वं वा न चामान् वहतः स्वयम् ॥ ३१ ॥

धारयेदौषधैर्दोषान् विधृतास्ते हि रोगदाः ॥
प्रवृत्तान् प्रागतो दोषानुपेक्षेत हिताशिनः ॥ ३२ ॥
विबद्धान् पाचनैस्तैस्तैः पाचयेन्निर्हरेत वा ॥
श्रावणे कार्तिके चैत्रे मासि साधारणे क्रमात् ॥ ३३ ॥
ग्रीष्मवर्षाहिमचितान् वाय्वादीनाशु निर्हरेत् ॥
अत्युष्णवर्षशीता हि ग्रीष्मवर्षाहिमागमाः ॥ ३४ ॥
सन्धौ साधारणे तेषां दुष्टान् दोषान् विशोधयेत् ॥
स्वस्थवृत्तमभिप्रेत्य व्याधौ व्याधिवशेन तु ॥ ३५ ॥
कृत्वा शीतोऽष्णवृष्टीनां प्रतीकारं यथायथम् ॥
प्रयोजयेत् क्रियां प्राप्तां क्रियाकालं न हापयेत् ॥ ३६ ॥
युञ्ज्यादनन्नमन्नादौ मध्येऽन्ते कवलान्तरे ॥
ग्रासेग्रासे मुहुः सान्नं सामुद्गं निशि चौषधम् ॥ ३७ ॥
कफोद्रेके गदो नान्नं बलिनो रोगरोगिणोः ॥
अन्नादौ विगुणेऽपानेसमाने मध्य इष्यते ॥ ३८ ॥
व्यानेऽन्ते प्रातराशस्य सायमाशस्य तत्तरे ॥
ग्रासग्रासान्तयोः प्राणे प्रदुष्टे मातरिश्वनि ॥ ३९ ॥
मुहुर्मुहुर्विषच्छर्दिहिध्मातृट्श्वासकासिषु ॥
योज्यं सभोज्यं भेषज्यं भोज्यैः श्चित्रैररोचके ॥ ४० ॥
कम्पाक्षेपकहिध्मासु सामुद्गं लघुभोजिनाम् ॥
ऊर्ध्वजत्रुविकारेषु स्वप्नकाले प्रशस्यते ॥ ४१ ॥

इत्यष्टाङ्गहृदयसंहितायां सूत्रस्थाने त्रयोदशोऽध्यायः ॥ १३ ॥

# चतुर्दशोऽध्यायः ।



अथातो द्विविधोपक्रमणीयमध्याय व्याख्यास्यामः ।

उपक्रम्यस्य हि द्वित्वाद् द्विधैवोपक्रमो मत. ॥
एकः सन्तर्पणस्तत्र द्वितीयश्चापतर्पण. ॥ १ ॥
बृंहणो लङ्घनश्चेति तत्पर्यायावुदाहृतौ ॥
बृंहण यद्बृहत्त्वाय लङ्घनं लाघवाय यत् ॥ २ ॥
देहस्य भवतः प्रायो भौमापमितरच्च ते ॥
स्नेहनं रूक्षणं कर्म स्वेदन स्तम्भन च यत् ॥ ३ ॥
भूताना तदपि द्वैध्याद् द्वितय नातिवर्त्तते ॥
शोधन शमन चेति द्विधा तत्रापि लङ्घनम् ॥ ४ ॥
यदीरयेद्बहिर्दोषान्पञ्चधा शोधनञ्च तत् ॥
निरूहो वमन कायशिरोरकोऽस्त्रविस्रुति. ॥ ५ ॥
न शोधयति यद्दोषान्समान्नोदीरयत्यपि ॥
समीकरोति विषमाञ्छमन तच्च सप्तधा ॥ ६ ॥
पाचन दीपनं क्षुत्तृड्व्यायामातपमारुता ॥
बृंहण शमन त्वेव वायो. पित्तानिलस्य च ॥ ७ ॥
बृंहयेद्व्याधिभैषज्यमद्यस्त्रीशोककर्शितान् ॥
भाराध्वोर.क्षतक्षीणरूक्षदुर्बलवातलान् ॥ ८ ॥
गर्भिणीसूतिकाबालवृद्धान् ग्रीष्मेऽपरानपि ॥
मासक्षीरसितासर्पिर्मधुरस्निग्धबस्तिभिः ॥ ९ ॥

स्वप्नशय्यासुखाभ्यंगस्नाननिर्वृतिहर्षणैः ॥
मेहामदोषातिस्निग्धज्वरोरुस्तम्भकुष्टिनः ॥ १० ॥
विसर्पविद्रधिप्लीहशिरःकण्ठाक्षिरोगिणः ॥
स्थूलांश्च लङ्घयेन्नित्यं शिशिरे त्वपरानपि ॥ ११ ॥
तत्र संशोधनैः स्थौल्यबलपित्तकफाधिकान् ॥
आमदोषज्वरच्छर्दिरतीसारहृदामयैः ॥ १२ ॥
विबन्धगौरवोद्गारहृल्लासादिभिरातुरान् ॥
मध्यस्थौल्यादिकान्प्रायः पूर्वं पाचनदीपनैः ॥ १३ ॥
एभिरेवामयैरार्तान् हीनस्थौल्यबलादिकान् ॥
क्षुत्तृष्णानिग्रहैर्दोषैस्त्वार्तान्मध्यबलैर्दृढान् ॥ १४ ॥
समीरणातपायासैः किमुताल्पबलैर्नरान् ॥
न बृंहयेल्लङ्घनीयान्बृंह्यांस्तु मृदु लङ्घयेत् ॥ १५ ॥
युक्त्या वा देशकालादिबलतस्तानुपाचरेत् ॥
बृंहिते स्याद्बलं पुष्टिस्तत्साध्यामयसंक्षयः ॥ १६ ॥
विमलेन्द्रियता सर्गो मलानां लाघवं रुचिः ॥
क्षुत्तृट्सहोदयः शुद्धहृदयोद्गारकण्ठता ॥ १७ ॥
व्याधिमार्दवमुत्साहस्तन्द्रानाशश्च लङ्घिते ॥
अनपेक्षितमात्रादिसेविते कुरुतस्तु ते ॥ १८ ॥
अतिस्थौल्यातिकार्श्यादीन्वक्ष्यन्ते ते च सौषधाः ॥
रूपं तैरेव च ज्ञेयमतिबृंहितलङ्घिते ॥ १९ ॥
अतिस्थौल्यापचीमेहज्वरोदरभगन्दरान् ॥
कासंन्यासकृच्छ्रामकुष्ठादीनतिदारुणान् ॥ २० ॥

तत्र मेदोऽनिलश्लेष्मनाशन सर्वमिष्यते ॥
कुलत्थजूर्णश्यामाकयवमुद्गमधूदकम् ॥ २१ ॥
मस्तुदण्डाहतारिष्टचिन्ताशोधनजागरम् ॥
मधुना त्रिफला लिह्याद्गुडूचीमभया घनम् ॥ २२ ॥
रसाञ्जनस्य महत पञ्चमूलस्य गुग्गुलो ॥
शिलाजतुप्रयोगश्च साग्निमन्थरसा हितः ॥ २३ ॥
विडङ्ग नागर क्षारः काललोहरजो मधु ॥
यवामलकचूर्णश्च योगोऽतिस्थौल्यदोषजित् ॥ २४ ॥
व्योषकट्वीवराशिग्रुविड ङ्गातिविपास्थिरा. ॥
हिङ्गुसौवर्चलाजाजीयवानीधान्यचित्रका ॥ २५ ॥
निशे वृहत्यौ हपुपा पाठामूलञ्च केम्बुकात् ॥
एपा चूर्ण मधुघृततैलञ्च सदशाशकम् ॥ २६ ॥
सक्तुभि पोडशगुणैर्युक्त पीत निहन्ति तत् ॥
अतिस्थौल्यादिकान्सर्वान् रोगानन्याश्च तद्विधान्॥२७॥
हृद्रोगकामलाश्वित्रश्वासकासगलग्रहान् ॥
बुद्धिमेधास्मृतिकरं सन्नस्याग्नेश्च दीपनम् ॥ २८ ॥
अतिकार्श्य भ्रम' कासस्तृष्णाधिक्यमरोचकः ॥
स्नेहाग्निनिद्रादृक्श्रोत्रशुक्रौजःक्षुत्स्वरक्षयः ॥ २९ ॥
वस्तिहृन्मूर्द्धजङ्घोरुत्रिकपार्श्वरुजा ज्वरः ॥
प्रलापोर्ध्वानिलग्लानिच्छर्दि पर्वास्थिभेदनम् ॥ ३० ॥
विण्मूत्रादिग्रहाद्याश्च जायन्तेऽतिविलङ्घनात् ॥
कार्श्यमेव वर स्थौल्यान्नहि स्थूलस्य भेषजम् ॥ ३१ ॥

बृंहणं लङ्घनं नालमतिमेदोऽग्निवातजित् ॥
मधुरस्निग्धसौहित्यैर्यत्सौख्येन विनश्यति ॥ ३२ ॥
क्रशिमा स्थविमात्यन्तविपरीतनिषेवणैः ॥
योजयेद्बृंहणं तत्र सर्वं पानान्नभेषजम् ॥ ३३ ॥
अचिन्तया हर्षणेन ध्रुवं सन्तर्पणेन च ॥
स्वप्नप्रसङ्गाच्च कृशो वराह इव पुष्यति ॥ ३४ ॥
न हि मांससमं किञ्चिदन्यद्देहबृहत्त्वकृत् ॥
मांसादमांसं मांसेन सम्भृतत्वाद्विशेषतः ॥ ३५ ॥
गुरु चातर्पणं स्थूले विपरीतं हितं कृशे ॥
यवगोधूममुभयोस्तद्योग्याहितकल्पनम् ॥ ३६ ॥
दोषगत्यातिरिच्यन्ते ग्राहिभेद्यादिभेदतः ॥
उपक्रमा न ते द्वित्वाद्भिन्ना अपि गदा इव ॥ ३७ ॥

इत्यष्टाङ्गहृदयसहितायां सूत्रस्थाने चतुर्दशोऽध्यायः ॥ १४ ॥

## पंचदशोऽध्यायः ।

अथातः शोधनादिगणसंग्रहमध्यायं व्याख्यास्यामः ।
मदनमधुकलम्बानिम्बबिम्बीविशाला-
त्रपुसकुटजमूर्वादेवदालीकृमिघ्नम् ॥
विदुलदहनचित्राः कोशवत्यौ करञ्जः
कणलवणवचैलासर्षपाश्छर्दनानि ॥ १ ॥

निकुम्भकुम्भत्रिफलागवाक्षी-
स्नुक्शङ्खिनीनीलिनितिल्वकानि ॥
शम्याककम्पिल्लकहेमदुग्धा-
दुग्धं च मूत्रं च विरेचनानि ॥ २ ॥
मदनकुटजकुष्ठदेवदाली-
मधुकवचादशमूलदारुरास्नाः ॥
यवमिसिकृतवेधनं कुलत्थो
मधुलवणं त्रिवृतानिरूहणानि ॥ ३ ॥
वेल्लापामार्गव्योषदार्वीसुराला
बीजं शैरीषं बार्हतं शैग्रवं च ॥
सारो माधूकः सैन्धवं तार्क्ष्यशैलं
त्रुटयो पृथ्वीका शोधयन्त्युत्तमाङ्गम् ॥ ४ ॥
भद्रदारु नतं कुष्ठं दशमूलं बलाद्वयम् ॥
वायुं वीरतरादिश्च विदार्यादिश्च नाशयेत् ॥ ५ ॥
दूर्वानन्तानिम्बवासात्मगुप्ता
गुन्द्राऽभीरुः शीतपाकी प्रियङ्गुः ॥
न्यग्रोधादिः पद्मकादिः स्थिरे द्वे
पद्मं वन्यं सारिवादिश्च पित्तम् ॥ ६ ॥
आरग्वधादिरर्कादिर्मुष्ककाद्योसनादिकः ॥
सुरसादिः समुस्तादिर्वत्सकादिर्बलासजित् ॥ ७ ॥
जीवन्ती काकोल्यौ मेदे द्वे मुद्गमाषपर्ण्यौ च ॥
ऋषभकजीवकमधुकं चेतिगणो जीवनीयाख्यः ॥ ८ ॥

विदारिपञ्चाङ्गुलवृश्चिकाली वृश्चीवदेवाह्वयशूर्पपर्ण्यः ॥
कण्डूकरीजीवनह्रस्वसंज्ञे द्वे पञ्चकेगोपसुतात्रिपादी ॥९॥
विदार्यादिरयं हृद्यो बृंहणो वातपित्तहा ॥
शोषगुल्माङ्गमर्दोर्ध्वश्वासकासहरो गणः ॥ १० ॥
सारिवोशीरकाश्मर्यमधूकशिशिरद्वयम् ॥
यष्टीपरूषकं हन्ति दाहपित्तास्रतृड्ज्वरान् ॥ ११ ॥
पद्मकपुण्ड्रौ वृद्धितुगर्द्ध्यः शृंग्यमृतादशजीवनसंज्ञाः ॥
स्तन्यकरा घ्नन्तीरणपित्तं प्रीणनजीवनबृंहणवृष्याः ॥१२॥
परूषकं वरा द्राक्षा कट्फलं कतकाफलम् ॥
राजाह्वं दाडिमं शाकं तृण्मूत्रामयवातजित् ॥ १३ ॥
अञ्जनं फलिनी मासी पद्मोत्पलरसाञ्जनम् ॥
सैलामधुकनागाह्वं विषान्तर्दाहपित्तनुत् ॥ १४ ॥
पटोलकटुरोहिणी चन्दनं मधुस्रवगुडूचिपाठान्वितम् ॥
निहन्तिकफपित्तकुष्ठज्वरान्विषंवमिमरोचकंकामलाम् ॥१५॥
गुडूचीपद्मकारिष्टधानका रक्तचन्दनम् ॥
पित्तश्लेष्मज्वरच्छर्दिदाहतृष्णाघ्नमग्निकृत् ॥ १६ ॥
आरग्वधेन्द्रयवपाटलिकाकतिक्ता-
निम्बामृतामधुरसास्रुववृक्षपाठाः ॥
भूनिम्बसैर्यकपटोलकरञ्जयुग्मं
सप्तच्छदाग्निसुषवीफलबाणघोण्टाः ॥ १७ ॥
आरग्वधादिर्जयतिच्छर्दिंकुष्ठविषज्वरान् ॥
कफं कण्डूं प्रमेहं च दुष्टव्रणविशोधनः ॥ १८ ॥

असनतिनिशभूर्जश्वेतवाहप्रकीर्या-
खदिरकदरभण्डीशिंशपामेषशृङ्ग्य ॥
त्रिहिमतलपलाशा जोंगक. शाकशालौ
क्रमुकधवकुलिगच्छागकर्णाश्वकर्णा. ॥ १९ ॥

असनादिर्विजयते श्वित्रकुष्ठकफक्रिमीन् ॥
पाण्डुरोगं प्रमेह च मेदोदोपनिवर्हण. ॥ २० ॥

वरणसैर्यकयुग्मशतावरीदहनमोरटबिल्वविपाणिका ॥
द्विबृहतीद्विकरञ्जजयाद्वय वहलपल्लवदर्भरुजाकरा ॥ २१ ॥

वरणादि कफं मेदो मन्दाग्नित्वं नियच्छति ॥
अधोवात शिरःशूलं गुल्मं चान्त सविद्रधिम् ॥ २२ ॥

ऊपकस्तुत्थक हिंगु कासीसद्वयसैन्धवम् ॥
सगिलाजतु कृच्छ्राश्मगुल्ममेद.कफापहम् ॥ २३ ॥

वेल्लन्तरारणिकवृकवृपाश्मभेद-
गोकण्ठकोत्कटसहाचरबाणकाशा ॥
कक्षादनीनलकुशद्वयगुण्ठगुन्द्रा-
भल्लूकमोरटकुरण्टकरम्भपार्थाः ॥ २४ ॥

वर्गो वीरतराद्योऽय हन्ति वातकृतान्गदान् ॥
अश्मरीशर्करामूत्रकृच्छ्रघातरुजाहर ॥ २५ ॥

रोध्रशावररोध्रपलाशाजिंगिणीसरलकट्फलयुक्ताः ॥
कुत्सिताम्बकदलीगतशोका'सैलवालुपरिपेलवमोचाः ॥२६॥

एप रोध्रादिको नाम मेद.कफहरो गणः ॥
योनिदोषहर. स्तम्भी वर्ण्यो विषविनाशन. ॥ २७ ॥

अर्कालर्कौ नागदन्ती विशल्या
भार्गी रास्ना वृश्चिकाली प्रकीर्या ॥
प्रत्यक्पुष्पी पीततैलोदकीर्या
श्वेतायुग्मं तापसानां च वृक्षः ॥ २८ ॥
अयमर्कादिको वर्गः कफमेदोविषापहः ॥
कृमिकुष्ठप्रशमनो विशेषाद्व्रणशोधनः ॥ २९ ॥
सुरसयुगफणिज्जं कालमालाविडङ्गं
खरबुसवृषकर्णीकट्फलं कासमर्दः ॥
क्षवकसरसिभार्ङ्गी कार्मुका काकमाची-
कुलहलविषमुष्टी भूस्तृणो भूतकेशी ॥ ३० ॥
सुरसादिगणः श्लेष्ममेदःक्रिमिनिषूदनः ॥
प्रतिश्यायारुचिश्वासकासघ्नो व्रणशोधनः ॥ ३१ ॥
मुष्ककस्नुग्वराद्वीपिपलाशधवशिंशपाः ॥
गुल्ममेहाश्मरीपाण्डुमेदोऽर्शःकफशुक्रजित् ॥ ३२ ॥
वत्सकमूर्वाभार्ङ्गीकटुकामरिचं घुणप्रिया च गण्डीरम् ॥
एलापाठाजाजीकट्वङ्गफलाजमोदसिद्धार्थवचाः ॥ ३३ ॥
जीरकहिङ्गुविडङ्गं पशुगन्धा पञ्चकोलकं हन्ति ॥
चलकफमेदःपीनसगुल्मज्वरशूलदुर्नाम्नः ॥ ३४ ॥
वचाजलददेवाह्वनागरातिविषाभयाः ॥
हरिद्राद्वययष्ट्याह्वकलशीकुटजोद्भवाः ॥ ३५ ॥
वचाहरिद्रादिगणावामातीसारनाशनौ ॥
मेदःकफाढ्यपवनस्तन्यदोषनिबर्हणौ ॥ ३६ ॥

प्रियङ्गुपुष्पाञ्जनयुग्मपद्मापद्माद्रजो योजनवल्ल्यनन्ता ॥
मानद्रुमो मोचरसः समङ्गा पुन्नागशीतं मदनीयहेतुः ॥३७॥
अम्बष्ठा मधुकं नमस्करीनन्दीवृक्षपलाशकच्छुराः ॥
रोध्रं धातकिबिल्वपेशिके कट्वङ्गः कमलोद्भवं रजः ॥ ३८ ॥
गणौ प्रियङ्ग्वम्बष्ठादी पक्वातीसारनाशनौ ॥
सन्धानीयौ हितौ पित्ते व्रणानामपि रोपणौ ॥ ३९ ॥
मुस्तावचाग्निद्विनिशाद्वितिक्ताभल्लातपाठात्रिफलाविशाख्याः
कुष्ठं त्रुटी हैमवती च योनिस्तन्यामयघ्ना मलपाचनाश्च ४०
न्यग्रोधपिप्पलसदाफलरोध्रयुग्म
जम्बूद्वयार्जुनकपीतनसोमवल्काः ॥
प्लक्षाम्रवञ्जुलपियालपलाशनन्दी
कोलीकदम्बविरलामधुकंमधूकम् ॥ ४१ ॥
न्यग्रोधादिर्गणो व्रण्यः संग्राही भग्नसाधनः ॥
मेदःपित्तास्रतृड्दाहयोनिरोगनिबर्हणः ॥ ४२ ॥
एलायुग्मतुरुष्ककुष्ठफलिनीमांसीजलध्यामकं
स्पृक्काचोरकचोचपत्रतगरस्थौणेयजातीरसाः ॥
शुक्तिर्व्याघ्रनखो महाह्वमगुरु श्रीवासकः कुङ्कुमम्
चण्डागुग्गुलुदेवधूपखपुरा पुन्नागनागाह्वयम् ॥ ४३ ॥
एलादिको वातकफौ विषश्च विनियच्छति ॥
वर्णप्रसादनः कण्डूपिटिकाकोठनाशनः ॥ ४४ ॥
श्यामा दन्ती द्रवन्ती क्रमुककुटरणी शङ्खिनी चर्मसाह्वा
स्वर्णक्षीरी गवाक्षी शिखरिरजनकच्छिन्नरोहाकरञ्जाः ॥

त्रस्तान्त्री व्याधिघातो बहलबहुरसस्तीक्ष्णवृक्षात्फलानि
श्यामाद्यो हन्ति गुल्मं विषमरुचिकफौ हृद्रुजं मूत्रकृच्छ्रम्॥४५
त्रयस्त्रिंशदिति प्रोक्ता वर्गास्तेषु त्वलाभतः ॥
युञ्ज्यात्तद्विधमन्यच्च द्रव्यं जह्यादयौगिकम् ॥ ४६ ॥
एते वर्गा दोषदूष्याद्यपेक्ष्य
कल्कक्वाथस्नेहलेहादियुक्ताः ॥
पानेनस्येऽन्वासनेऽन्तर्बहिर्वा
लेपाभ्यंगैर्घ्नन्ति रोगान्सुकृच्छ्रान् ॥ ४७ ॥

इत्यष्टाङ्गहृदयसंहितायां सूत्रस्थाने पंचदशोऽध्यायः ॥ १५ ॥

## षोडशोऽध्यायः ।

अथातः स्नेहविधिमध्यायं व्याख्यास्यामः ।
गुरुशीतसरास्निग्धमन्दसूक्ष्ममृदुद्रवम् ॥
औषधं स्नेहनं प्रायो विपरीतं विरूक्षणम्॥ १ ॥
सर्पिर्मज्जा वसा तैलं स्नेहेषु प्रवरं मतम् ॥
तत्रापि चोत्तमं सर्पिः संस्कारस्यानुवर्त्तनात् ॥ २ ॥
पित्तघ्नास्ते यथापूर्वमितरघ्ना यथोत्तरम् ॥
घृतात्तैलं गुरु वसा तैलान्मज्जा ततोऽपि च ॥ ३ ॥
द्वाभ्यां त्रिभिश्चतुर्भिस्तैर्यमकस्त्रिवृतो महान् ॥
स्वेद्यसंशोध्यमद्यस्त्रीव्यायामासक्तचिन्तकाः ॥ ४ ॥
वृद्धबालाबलकृशा रूक्षाः क्षीणास्त्ररेतसः ॥
वातार्त्तस्यन्दतिमिरदारुणप्रतिबोधिनः ॥ ५ ॥

स्नेह्या नत्वतिमन्दाग्नितीक्ष्णाग्निस्थूलदुर्बलाः ॥
ऊरुस्तम्भातिसारामगलरोगगरोदरैः ॥ ६ ॥
मूर्च्छाछर्द्यरुचिश्लेष्मतृष्णामद्यैश्च पीडिता ॥
अपप्रसूता युक्ते च नस्ये वस्तौ विरेचने ॥ ७ ॥
तत्र धीस्मृतिमेधाग्निकाङ्क्षिणां शस्यते घृतम् ॥
ग्रन्थिनाडीकृमिश्लेष्ममेदोमारुतरोगिषु ॥ ८ ॥
तैलं लाघवदार्ढ्यार्थिक्रूरकोष्ठेषु देहिषु ॥
वातातपाध्वभारस्त्रीव्यायामक्षीणधातुषु ॥ ९ ॥
रूक्षक्लेशक्षमात्यग्निवातावृतपथेषु च ॥
शेषौ वसा तु सन्ध्यस्थिमर्मकोष्ठरुजासु च ॥ १० ॥
तथा दग्धाहतभ्रष्टयोनिकर्णशिरोरुजि ॥
तैलं प्रावृषि वर्षान्ते सर्पिरन्यौ तु माधवे ॥ ११ ॥
ऋतौ साधारणे स्नेहः शस्तोऽह्नि विमले रवौ ॥
तैलं त्वरायां शीतेऽपि घर्मेऽपि च घृतं निशि ॥ १२ ॥
निश्येव पित्ते पवने संसर्गे पित्तवत्यपि ॥
निश्यन्यथा वातकफाद्रोगाः स्युः पित्ततो दिवा ॥ १३ ॥
युक्त्यावचारयेत्स्नेहं भक्ष्याद्यन्नेन वस्तिभिः ॥
नस्याभ्यञ्जनगण्डूषमूर्द्धकर्णाक्षितर्पणैः ॥ १४ ॥
रसभेदैककत्वाभ्यां चतुःषष्टिर्विचारणाः ॥
स्नेहस्यान्याभिभूतत्वादल्पत्वाच्च क्रमात्स्मृताः ॥ १५ ॥
यथोक्तहेत्वभावाच्च नाच्छपेयो विचारणा ॥
स्नेहस्य कल्पः सश्रेष्ठः स्नेहकर्माशुसाधनात् ॥ १६ ॥

द्वाभ्यां चतुर्भिरष्टाभिर्यामैर्जीर्यन्ति याः क्रमात् ॥
ह्रस्वमध्योत्तमा मात्रास्तास्ताभ्यश्च ह्रसीयसीम् ॥१७॥
कल्पयेदीक्ष्य दोषादीन् प्रागेव तु ह्रसीयसीम् ॥
ह्यस्तने जीर्ण एवान्ने स्नेहोऽच्छः शुद्धये बहुः ॥ १८ ॥
शमनः क्षुद्वतोऽनन्नो मध्यमात्रश्च शस्यते ॥
बृंहणो रसमद्याद्यैः सभक्तोऽल्पो हितः स च ॥ १९ ॥
बालवृद्धपिपासार्त्तस्नेहद्विण्मद्यशीलिषु ॥
स्त्रीस्नेहनित्यमन्दाग्निसुखितक्लेशभीरुषु ॥ २० ॥
मृदुकोष्ठाल्पदोषेषु काले चोष्णे कृशेषु च ॥
प्राङ्मध्योत्तरभक्तोऽसावधोमध्योर्ध्वदेहजान् ॥ २१ ॥
व्याधीञ्जयेद्बलं कुर्यादङ्गानां च यथाक्रमम् ॥
वार्युष्णमच्छेऽनुपिबेत्स्नेहे तत्सुखपक्तये ॥ २२ ॥
आस्योपलेपशुद्ध्यै च तौवरारुष्करे न तु ॥
जीर्णाजीर्णविशङ्कायां पुनरुष्णोदकं पिबेत् ॥ २३ ॥
[illegible]ोद्गारविशुद्धिः स्यात्ततश्च लघुता रुचिः ॥
भोज्योऽन्नं मात्रया पास्यन् श्वः पिबन्पीतवानपि ॥२४॥
द्रवोष्णमनभिष्यन्दि नातिस्निग्धमसङ्करम् ॥
उष्णोदकोपचारी स्याद् ब्रह्मचारी क्षपाशयः ॥ २५ ॥
न वेगरोधी व्यायामक्रोधशोकहिमातपान् ॥
प्रवातयानयानाध्वभाष्याभ्यासनसंस्थितिः ॥ २६ ॥
नीचात्युच्चोपधानाहःस्वप्नधूमरजांसि च ॥
यान्यहानि पिबेत्तानि तावन्त्यन्यान्यपि त्यजेत् ॥२७॥

सर्वकर्मस्त्वय प्रायो व्याधिक्षीणेषु च क्रमः ॥
उपचारस्तु शमने कार्ये स्नेहे विरिक्तवत् ॥ २८ ॥
त्र्यहमच्छ मृदौ कोष्ठे क्रूरे सप्तदिन पिबेत् ॥
सम्यक् स्निग्धोऽथवा यावदत' सात्मी भवेत्परम् ॥२९॥
वातानुलोम्यं दीप्तोऽग्निर्वर्च. स्निग्धमसहतम् ॥
स्नेहोद्वेग क्लमः सम्यक् स्निग्धे रूक्षे विपर्यय' ॥३०॥
अतिस्निग्धे तु पाण्डुत्व घ्राणवक्त्रगुदस्रवाः ॥
अमात्रयाऽहितोऽकाले मिथ्याहारविहारत. ॥ ३१ ॥
स्नेह करोति शोफार्शस्तन्द्रास्तम्भाविसज्ञता ॥
कण्डूकुष्ठज्वरोत्क्लेशशूलानाहभ्रमादिकान् ॥ ३२ ॥
क्षुत्तृष्णोल्लेखनस्वेदरूक्षपानान्नभेषजम् ॥
तक्रारिष्ट खलोद्दालयवश्यामाककोद्रवा. ॥ ३३ ॥
पिप्पलीत्रिफलाक्षौद्रपथ्यागोमूत्रगुग्गुलु ॥
यथास्व प्रतिरोग च स्नेहव्यापदि साधनम् ॥ ३४ ॥
विरूक्षणे लङ्घनवत् कृतातिकृतलक्षणम् ॥
स्निग्धद्रवोष्णधन्वोत्थरसभुक् स्वेदमाचरेत् ॥ ३५ ॥
स्निग्धत्र्यहं स्थित कुर्याद्विरेक वमन पुन. ॥
एकाह दिनमन्यच्च कफमुत्क्लेश्य तत्करै ॥ ३६ ॥
मासला मेदुरा भूरिश्लेष्माणो विषमाग्नय. ॥
स्नेहोचिताश्च ये स्नेह्यास्तान् पूर्व रूक्षयेत्तत' ॥ ३७ ॥
संस्नेह्य शोधयेदेव स्नेहव्यापन्न जायते ॥
अल मलानीरयितुं स्नेहश्चासात्म्यता गत ॥ ३८ ॥

बालवृद्धादिषु स्नेहपरिहारासहिष्णुषु ॥
योगानिमाननुद्वेगान् सद्यः स्नेहान् प्रयोजयेत् ॥ ३९ ॥
प्राज्यमांसरसास्तेषु पेया वा स्नेहभर्जिता ॥
तिलचूर्णश्च सस्नेहफाणितः कृशरा तथा ॥ ४० ॥
क्षीरपेया घृताढ्योष्णा दध्नो वा सगुडः सरः ॥
पेया च पञ्चप्रसृता स्नेहैस्तण्डुलपञ्चमैः ॥ ४१ ॥
सप्तैते स्नेहनाः सद्यः स्नेहाश्च लवणोल्बणाः ॥
तद्ध्यभिस्यन्द्यरूक्षं च सूक्ष्ममुष्णं व्यवायि च ॥ ४२ ॥
गुडानूपामिषक्षीरतिलमाषसुरादधि ॥
कुष्ठशोफप्रमेहेषु स्नेहार्थं न प्रकल्पयेत् ॥ ४३ ॥
त्रिफलापिप्पलीपथ्यागुग्गुल्वादिविपाचितान् ॥
स्नेहान् यथास्वमेतेषां योजयेदविकारिणः ॥
क्षीणानां त्वामयैरग्निदेहसन्धुक्षणक्षमान् ॥ ४४ ॥
दीप्तान्तराग्निः परिशुद्धकोष्ठः प्रत्यग्रधातुर्बलवर्णयुक्तः ॥
दृढेन्द्रियो मन्दजरः शतायुः स्नेहोपसेवी पुरुषः प्रदिष्टः॥४५॥

इत्यष्टाङ्गहृदयसंहितायां सूत्रस्थाने षोडशोऽध्यायः ॥ १६ ॥

---

## सप्तदशोऽध्यायः ।

अथातः स्वेदविधिमध्यायं व्याख्यास्यामः ।
स्वेदस्तापोपनाहोष्मद्रवभेदाच्चतुर्विधः ॥
तापोऽग्नितप्तवसनफालहस्ततलादिभिः ॥ १ ॥

उपनाहोवचाकिण्वशताह्वादेवदारुभि ॥
धान्यै. समस्तैर्गन्धैश्च रास्नैरण्डजटामिषैः ॥ २ ॥
उद्रिक्तलवणै. स्नेहचुक्रतक्रपय.प्लुतै. ॥
केवले पवने श्लेष्मससृष्टे सुरसादिभिः ॥ ३ ॥
पित्तेन पद्मकाद्यैस्तु साल्वणाख्यै. पुन पुन ॥
स्निग्धोष्णवीर्यैर्मृदुभिश्चर्मपट्टैरपूतिभि. ॥ ४ ॥
अलाभे वातजित्पत्रकौशेयाविकशाटकै ॥
रात्रौ वद्ध दिवा मुञ्चेन्मुञ्चेद्रात्रौ दिवाकृतम् ॥ ५ ॥
ऊष्मा तूत्कारिकालोष्टकपालोपलपांसुभि ॥
पत्रभंगेन धान्येन करीषसिकतातुषै. ॥ ६ ॥
अनेकोपायसन्तप्तै. प्रयोज्यो देशकालत ॥
शिग्रुवीरणकैरण्डकारञ्जसुरसार्जकात् ॥ ७ ॥
शिरीषवासावशार्कमालतीदीर्घवृन्तत ॥
पत्रभगैर्वचाद्यैश्च मांसैश्चानूपवारिजै. ॥ ८ ॥
दशमूलेन च पृथक् सहितैर्वा यथामलम् ॥
स्नेहवद्भि सुराशुक्तवारिक्षीरादिसाधितै. ॥ ९ ॥
कुम्भीर्गलन्तीर्नाडीर्वा पूरयित्वा रुजार्दितम् ॥
वाससाच्छादित गात्र स्निग्ध सिञ्चेद्यथासुखम् ॥ १० ॥
तैरेव वा द्रवै. पूर्ण कुण्डं सर्वाङ्गगेऽनिले ॥ ११ ॥
अवगाह्यातुरस्तिष्ठेदर्शं.कृच्छ्रादिरुक्षु च ॥
निवातेऽन्तर्बहि. स्निग्धो जीर्णान्न. स्वेदमाचरेत् ॥१२॥

व्याधिव्याधितदेशर्तुवशान्मध्यवरावरम् ॥
कफार्तो रूक्षणं रूक्षो रूक्षस्निग्धं कफानिले ॥ १३ ॥
आमाशयगते वायौ कफे पक्काशयाश्रिते ॥
रूक्षपूर्वं तथा स्नेहपूर्वं स्थानानुरोधतः ॥ १४ ॥
अल्पं वंक्षणयोः स्वल्पं दृग्मुष्कहृदये न वा ॥
शीतशूलक्षये स्विन्नो जातेऽङ्गानां च मार्दवे ॥ १५ ॥
स्याच्छनैर्मृदितः स्नातस्ततः स्नेहविधिं भजेत् ॥
पित्तास्रकोपतृण्मूर्च्छास्वराङ्गसदनभ्रमाः ॥ १६ ॥
सन्धिपीडाज्वरश्यावरक्तमंडलदर्शनम् ॥
स्वेदातियोगाच्छर्दिश्च तत्र स्तम्भनमौषधम् ॥ १७ ॥
विषक्षाराग्न्यतीसारच्छर्दिमोहातुरेषु च ॥
स्वेदनं गुरुतीक्ष्णोष्णं प्रायः स्तम्भनमन्यथा ॥ १८ ॥
द्रवस्थिरसरस्निग्धरूक्षसूक्ष्मं च भेषजम् ॥
स्वेदनं स्तम्भनं श्लक्ष्णं रूक्षसूक्ष्मसरद्रवम् ॥ १९ ॥
प्रायस्तिक्तं कषायं च मधुरं च समासतः ॥
स्तम्भितः स्याद्बले लब्धे यथोक्तामयसङ्क्षयात् ॥ २० ॥
स्तम्भत्वक्स्नायुसङ्कोचकम्पहृद्वाग्घनुग्रहैः ॥
पादोष्ठत्वक्करैः श्यावैरतिस्तम्भितमादिशेत् ॥ २१ ॥
न स्वेदयेदतिस्थूलरूक्षदुर्बलमूर्च्छितान् ॥
स्तम्भनीयक्षतक्षीणक्षाममद्यविकारिणः ॥ २२ ॥
तिमिरोदरवीसर्पकुष्ठशोषाढ्यरोगिणः ॥
पीतदुग्धदधिस्नेहमधून्कृतविरेचनान् ॥ २३ ॥

अष्टदग्धगुदग्लानिक्रोधशोकभयान्वितान् ॥
क्षुत्तृष्णाकामलापाण्डुमेहिन. पित्तपीडितान् ॥ २४ ॥
गर्भिणी पुष्पिता सूता मृदु चात्ययिके गदे ॥
श्वासकासप्रतिश्यायहिध्माध्मानविबन्धिषु ॥ २५ ॥
स्वरभेदानिलव्याधिश्लेष्मामस्तम्भगौरवे ॥
अङ्गमर्दकटीपार्श्वपृष्ठकुक्षिहनुग्रहे ॥ २६ ॥
महत्त्वे मुष्कयो. खल्यामायामे वातकण्टके ॥
मूत्रकृच्छ्रार्बुदग्रन्थिशुक्राघाताढ्यमारुते ॥ २७ ॥
स्वेद यथायथ कुर्यात्तदौपधविभागतः ॥
स्वेदो हितस्त्वनाग्नेयो वाते मेदः कफावृते ॥ २८ ॥
निवातं गृहमायासो गुरुप्रावरण भयम् ॥
उपनाहाहवक्रोधभूरिपान क्षुवातप ॥ २९ ॥

स्नेहक्लिन्ना कोष्ठगा धातुगा वा
स्रोतोलीना ये च शाखास्थि सस्था ॥
दोषा स्वेदैस्ते द्रवीकृत्य कोष्ठ
नीता. सम्यक्शुद्धि भिर्निर्हियन्ते ॥ ३० ॥

इत्यष्टाङ्गहृदयसहिताया सूत्रस्थाने सप्तदशोऽ याय ॥ १७ ॥

## अष्टादशोऽध्यायः ।

अथातो वमनविरेचनविधिमध्याय व्याख्यास्यामः ।
कफे विदध्याद्वमन सयोगे वा कफोल्बणे ॥
तद्वद्विरेचन पित्ते विशेषेण तु वामयेत् ॥ १ ॥

नवज्वरातिसाराधःपित्तासृग्राजयक्ष्मिणः ॥
कुष्ठमेहापचीग्रन्थिश्लीपदोन्मादकासिनः ॥ २ ॥
श्वासहृल्लासवीसर्पस्तन्यदोषोर्ध्वरोगिणः ॥
अवम्या गर्भिणी रूक्षः क्षुधितो नित्यदुःखितः ॥ ३ ॥
बालवृद्धकृशस्थूलहृद्रोगिक्षतदुर्बलाः ॥
प्रसक्तवमथुप्लीहतिमिरक्रिमिकोष्ठिनः ॥ ४ ॥
ऊर्ध्वप्रवृत्तवाय्वस्रदत्तवस्तिहतस्वराः ॥
मूत्राघात्युदरी गुल्मी दुर्वमोऽत्यग्निरर्शसः ॥ ५ ॥
उदावर्त्तभ्रमाष्ठीलापार्श्वरुग्वातरोगिणः ॥
ऋते विषगराजीर्णविरुद्धाभ्यवहारतः ॥ ६ ॥
प्रसक्तवमथोः पूर्वे प्रायेणामज्वरोऽपि च ॥
धूमान्तैः कर्म्मभिर्वर्ज्याः सर्वैरेव त्वजीर्णिनः ॥ ७ ॥
विरेकसाध्या गुल्मार्शोविस्फोटव्यंगकामलाः ॥
जीर्णज्वरोदरगरच्छर्दिप्लीहहलीमकाः ॥ ८ ॥
विद्रधिस्तिमिरं काचः स्यन्दः पक्काशयव्यथा ॥
योनिशुक्राशया रोगाः कोष्ठगाः कृमयो व्रणाः ॥ ९ ॥
वातास्रमूर्ध्वगं रक्तं मूत्राघातः शकृद्ग्रहः ॥
वम्याश्च कुष्ठमेहाद्या न तु रेच्यो नवज्वरी ॥ १० ॥
अल्पाग्न्यधोगपित्तास्रक्षतपाय्वतिसारिणः ॥
सशल्यास्थापितक्रूरकोष्ठातिस्निग्धशोषिणः ॥ ११ ॥
अथ साधारणे काले स्निग्धस्विन्नं यथाविधि ॥
श्वोवम्यमुत्क्लिष्टकफं मत्स्यमाषतिलादिभिः ॥ १२ ॥

निशां सुप्तं सुजीर्णान्नं पूर्वाह्णे कृतमङ्गलम् ॥
निरन्नमीषत्स्निग्धं वा पेयया पीतसर्पिषम् ॥ १३ ॥
वृद्धबालाबलक्लीबभीरून्रोगानुरोधतः ॥
आकण्ठं पायितान्मद्यं क्षीरमिक्षुरसं रसम् ॥ १४ ॥
यथाविकारविहितां मधुसैन्धवसंयुताम् ॥
कोष्ठं विभज्य भैषज्यमात्रां मन्त्राभिमन्त्रिताम् ॥ १५ ॥
ब्रह्मदक्षाश्विरुद्रेन्द्रभूचन्द्रार्कानिलानलाः ॥
ऋषयः सौषधिग्रामा भूतसङ्घाश्च पान्तु वः ॥ १६ ॥
रसायनमिवर्षीणाममराणामिवामृतम् ॥
सुधेवोत्तमनागानां भैषज्यमिदमस्तु ते ॥ १७ ॥
ॐ नमो भगवते भैषज्यगुरवे वैदूर्यप्रभराजाय ॥
तथागतायार्हते सम्यक् सम्बुद्धाय । तद्यथा ॥
ॐ भैषज्ये भैषज्ये महाभैषज्ये समुद्गते स्वाहा ॥
प्राङ्मुखं पाययेत् पीतं मुहूर्त्तमनुपालयेत् ॥
तन्मना जातहृल्लासप्रसेकश्छर्दयेत्ततः ॥ १८ ॥
अङ्गुलिभ्यामनायस्तो नालेन मृदुनाथ वा ॥
गलताल्वरुजन्वेगानप्रवृत्तान्प्रवर्त्तयन् ॥ १९ ॥
प्रवर्त्तयन् प्रवृत्तांश्च जानुतुल्यासने स्थितः ॥
उभे पार्श्वे ललाटञ्च वमतश्चास्य धारयेत् ॥ २० ॥
प्रपीडयेत्तथा नाभिं पृष्ठञ्च प्रतिलोमतः ॥
कफे तीक्ष्णोष्णकटुकैः पित्ते स्वादुहिमैरिति ॥ २१ ॥

वमेत्स्निग्धाम्ललवणैः संसृष्टे मरुता कफे ॥
पित्तस्य दर्शनं यावच्छेदो वा श्लेष्मणो भवेत् ॥ २२ ॥
हीनवेगः कणाधात्रीसिद्धार्थलवणोदकैः ॥
वमेत्पुनः पुनस्तत्र वेगानामप्रवर्त्तनम् ॥ २३ ॥
प्रवृत्तिः सविबन्धा वा केवलस्यौषधस्य वा ॥
अयोगस्तेन निष्ठीवकण्डूकोठज्वरादयः ॥ २४ ॥
निर्विबन्धं प्रवर्त्तन्ते कफपित्तानिलाः क्रमात् ॥
सम्यग् योगेऽतियोगे तु फेनचन्द्रकरक्तवत् ॥ २५ ॥
वमितं क्षामता दाहः कण्ठशोषस्तमो भ्रमः ॥
घोरा वाय्वामया मृत्युर्जीवशोणितनिर्गमात् ॥ २६ ॥
सम्यग्योगेन वमितं क्षणमाश्वास्य पाययेत् ॥
धूमत्रयस्यान्यतमं स्नेहाचारमथादिशेत् ॥ २७ ॥
ततः सायं प्रभाते वा क्षुद्वान् स्नातः सुखाम्बुना ॥
भुञ्जानो रक्तशाल्यन्नं भजेत्पेयादिकं क्रमात् ॥ २८ ॥
पेयां विलेपीमकृतं कृतञ्च यूषं रसं त्रीनुभयं तथैकम् ॥
क्रमेण सेवेत नरोऽन्नकालान् प्रधानमध्यावरशुद्धिशुद्धः ।२९।
यथाणुरग्निस्तृणगोमयाद्यैः सन्धुक्षमाणो भवति क्रमेण ॥
महान् स्थिरः सर्वपचस्तथैव शुद्धस्य पेयादिभिरन्तराग्निः ३०
जघन्यमध्यप्रवरे तु वेगाश्चत्वार इष्टा वमने षडष्टौ ॥
दशैव ते द्वित्रिगुणा विरेके प्रस्थस्तथा स्याद्द्विचतुर्गुणश्च॥३१॥
पित्तावसानं वमनं विरेकादर्द्धं कफान्तञ्च विरेकमाहुः ॥
द्वित्रान्सविट्कानपनीय वेगान्मेयं विरेके वमने तु पीतम् ३२

अथैनं वामित भूय स्नेहस्वेदोपपादितम् ॥
श्लेष्मकाले गते ज्ञात्वा कोष्ट सम्यग्विरेचयेत् ॥ ३३ ॥
वहुपित्तो मृदु' कोष्ट क्षीरेणापि विरेच्यते ॥
प्रभूतमारुत' क्रूर कृच्छ्रायामादिकैरपि ॥ ३४ ॥
कषायमधुरै पित्ते विरेक' कटुकै' कफे ॥
स्निग्धोष्णलवणैर्वायौ अप्रवृत्तौ तु पाययेत् ॥ ३५ ॥
उष्णाम्बु स्वेदयेदस्य पाणितापेन चोदरम् ॥
उत्थानेऽल्पे दिने तस्मिन् भुक्त्वान्येद्युः पुन पिवेत् ॥ ३६ ॥
अदृढस्नेहकोष्टस्तु पिवेदूर्ध्वं दशाहत' ॥
भूयोऽप्युपस्कृततनु स्वेदस्नेहैर्विरेचनम् ॥ ३७ ॥
योगिक सम्यगालोच्य स्मरन्पूर्वमनुक्रमम् ॥
हृत्कुक्ष्यशुद्धिररुचिरुत्क्लेश श्लेष्मपित्तयो ॥ ३८ ॥
कण्डूर्विदाह पिटिका पीनसो वातविड्ग्रहः ॥
अयोगलक्षण योगो वैपरीत्ये यथोदितात् ॥ ३९ ॥
विट्पित्तकफवातेषु नि सृतेषु क्रमात् स्रवेत् ॥
नि'श्लेष्मपित्तमुदक श्वेत कृष्ण सलोहितम् ॥ ४० ॥
मासधावनतुल्य वा मेद.खडाभमेव वा ॥
गुदनि सरणं तृष्णा भ्रमो नेत्रप्रवेशनम् ॥ ४१ ॥
भवन्त्यातिविरिक्तस्य तथातिवमनामया. ॥
सम्यग्विरिक्तमेन च वमनोक्तेन योजयेत् ॥ ४२ ॥
धूमवर्ज्येन विधिना ततो वमितवानिव ॥
क्रमेणान्नानि भुञ्जानो भजेत्प्रकृतिभोजनम् ॥ ४३ ॥

मन्दवह्निमसंशुद्धमक्षामं दोषदुर्बलम् ॥
अदृष्टजीर्णलिङ्गं च लंघयेत्पीतभेषजम् ॥ ४४ ॥
स्नेहस्वेदौषधोत्क्लेशसंगैरिति न बाध्यते ॥
संशोधनास्रविस्रावस्नेहयोजनलङ्घनैः ॥ ४५ ॥
यात्यग्निर्मन्दतां तस्मात्क्रमं पेयादिमाचरेत् ॥
स्रुताल्पपित्तश्लेष्माणं मद्यपं वातपैत्तिकम् ॥ ४६ ॥
पेयां न पाययेत्तेषां तर्पणादिक्रमो हितः ॥
अपक्वं वमनं दोषान्पच्यमानं विरेचनम् ॥ ४७ ॥
निर्हरेद्वमनस्यातः पाकं न प्रतिपालयेत् ॥
दुर्बलो बहुदोषश्च दोषपाकेन यः स्वयम् ॥ ४८ ॥
विरिच्यते भेदनीयैर्भोज्यैस्तमुपपादयेत् ॥
दुर्बलः शोधितः पूर्वमल्पदोषः कृशो नरः ॥ ४९ ॥
अपरिज्ञातकोष्ठश्च पिबेन्मृद्वल्पमौषधम् ॥
वरं तदसकृत्पीतमन्यथा संशयावहम् ॥ ५० ॥
हरेद्बहूंश्चलान् दोषानल्पानल्पान्पुनःपुनः ॥
दुर्बलस्य मृदुद्रव्यैरल्पान्संशमयेत्तु तान् ॥ ५१ ॥
क्लेशयन्ति चिरं ते हि हन्युर्वैनमनिर्हृताः ॥
मन्दाग्निं क्रूरकोष्ठं च सक्षारलवणैर्घृतैः ॥ ५२ ॥
सन्धुक्षिताग्निं विजितकफवातं च शोधयेत् ॥
रूक्षबह्वनिलक्रूरकोष्ठव्यायामशीलिनाम् ॥ ५३ ॥
दीप्ताग्नीना चं भैषज्यमविरेच्यैव जीर्यति ॥
तेभ्यो बस्तिं पुरा दद्यात्ततः स्निग्धं विरेचनम् ॥ ५४ ॥

शकृन्निर्हृत्य वा किञ्चित्तीक्ष्णाभि फलवर्तिभि. ॥
प्रवृत्त हि मल स्निग्धो विरेको निर्हरेत्सुखम् ॥ ५५ ॥
विषाभिघातपिटिकाकुष्ठशाकविसर्पिण ॥
कामलापाण्डुमेहार्त्तान्नातिस्निग्धान्विरेचयेत् ॥ ५६ ॥
सर्वान्स्नेहविरेकैश्च रूक्षैस्तु स्नेहभावितान् ॥
कर्मणा वमनादीना पुनरप्यन्तरेऽन्तरे ॥ ५७ ॥
स्नेहस्वेदौ प्रयुञ्जीत स्नेहमन्ते वलाय च ॥
मलो हि देहादुत्क्लेश्य ह्रियते वाससो यथा ॥ ५८ ॥
स्नेहस्वेदैस्तथोत्क्लेश्य ह्रियते शोधनैर्मल ॥
स्नेहस्वेदावनभ्यस्य कुर्यात्सशोधन तु य. ॥
दारु शुष्कमिवानामे शरीर तस्य दीर्यते ॥ ५९ ॥

बुद्धिप्रसाद वलमिन्द्रियाणा
धातुस्थिरत्व ज्वलनस्य दीप्तिम् ॥
चिराच्च पाक वयसः करोति
सशोधन सम्यगुपास्यमानम् ॥ ६० ॥

इत्यष्टाङ्गहृदयसहिताया सूत्रस्थानेऽष्टादशोऽध्याय ॥ १८ ॥

# एकोनविंशोऽध्यायः



अथातो वस्तिविधिमध्याय व्याख्यास्याम ।
वातोल्वणेषु दोषेषु वाते वा वस्तिरिष्यते ॥
उपक्रमाणा सर्वेषा सोऽग्रणीस्त्रिविधश्च सः ॥ १ ॥

निरूहोऽन्वासनो वस्तिरुत्तरस्तेन साधयेत् ॥
गुल्मानाहखुडप्लीहशुद्धातीसारशूलिनः ॥ २ ॥
जीर्णज्वरप्रतिश्यायशुक्रानिलमलग्रहान् ॥
वध्मांश्मरीरजोनाशान् दारुणांश्चानिलामयान् ॥ ३ ॥
अनास्थाप्यास्त्वतिस्निग्धः क्षतोरस्को भृशं कृशः ॥
आमातिसारी वमिमान्संशुद्धो दत्तनावनः ॥ ४ ॥
कासश्वासप्रमेहार्शोहिध्माध्मानाल्पवर्चसः ॥
शूनपायुः कृताहारो बद्धच्छिद्रोदकोदरी ॥ ५ ॥
कुष्ठी च मधुमेही च मासान् सप्त च गर्भिणी ॥
आस्थाप्या एव चान्वास्या विशेषादतिवह्नयः ॥ ६ ॥
रूक्षाः केवलवातार्त्ता नानुवास्यास्त एव च ॥
अनास्थाप्यास्तथा पाण्डुकामलामेहपीनसाः ॥ ७ ॥
निरन्नप्लीहविड्भेदिगुरुकोष्ठकफोदराः ॥
अभिष्यन्दिकृशस्थूलकृमिकोष्ठाढ्यमारुताः ॥ ८ ॥
पीते विषे गरेऽपच्यां श्लीपदीगलगण्डवान् ॥
तयोऽस्तु नेत्रं हेमादिधातुदार्वस्थिवेणुजम् ॥ ९ ॥
गोपुच्छाकारमच्छिद्रं श्लक्ष्णर्जु गुलिकामुखम् ॥
ऊनेऽब्दे पञ्च पूर्णेऽस्मिन्नासप्तभ्योऽङ्गुलानि षट् ॥१०॥
सप्तमे सप्त तान्यष्टौ द्वादशे षोडशे नव ॥
द्वादशैव परं विंशात् वीक्ष्य वर्षान्तरेषु च ॥ ११ ॥
वयोबलशरीराणि प्रमाणमभिवर्द्धयेत् ॥
स्वाङ्गुष्ठेन समं मूले स्थौल्येनाग्रे कनिष्ठया ॥ १२ ॥

पूर्णेऽब्देऽङ्गुलमादाय तदर्द्धार्द्धप्रवर्धितम् ॥
त्र्यङ्गुल परम छिद्र मूलेऽग्रे वहते तु यत् ॥ १३ ॥
मुद्ग माष कलायश्च क्लिन्न कर्कन्धुक क्रमात् ॥
मूलच्छिद्रप्रमाणेन प्रान्ते घटितकर्णिकम् ॥ १४ ॥
वर्त्याग्रे पिहित मूले यथास्व द्व्यङ्गुलान्तरम् ॥
कर्णिकाद्वितय नेत्र कुर्यात् तत्र च योजयेत् ॥ १५ ॥
अजाविमहिषादीना वस्ति सुमृदित दृटम् ॥
कषायरक्तं निश्छिद्रग्रन्थिगन्धशिर तनुम् ॥ १६ ॥
ग्रन्थित साधुसूत्रेण सुखसस्थाप्यभेषजम् ॥
वस्त्यभावेऽङ्कपाद वा न्यसेद्वा सोऽथवा घनम् ॥ १७ ॥
निरूहमात्रा प्रथमे प्रकुश्चो वत्सरात्परम् ॥
प्रकुश्चवृद्धि प्रत्यब्द यावत्पट्प्रसृतास्ततः ॥ १८ ॥
प्रसृत वर्द्धयेदूर्ध्व द्वादशाष्टादशस्य च ॥
आसप्ततेरिद मान दशैव प्रसृता परम् ॥ १९ ॥
यथायथ निरूहस्य पादो मात्रानुवासने ॥
आस्थाप्य स्नेहित्र स्विन्न शुद्ध लब्धबल पुन. ॥ २० ॥
अन्वासनार्ह विज्ञाय पूर्वमेवानुवासयेत् ॥
शीते वसन्ते च दिवा रात्रौ केचित्ततोऽन्यदा ॥ २१ ॥
अभ्यक्तस्नातमुचितात्पादहीन हित लघु ॥
अस्निग्धरूक्षमशित सानुपान द्रवादि च ॥ २२ ॥
कृतचंक्रमण मुक्तविण्मूत्रं शयने सुखे ॥
नात्युच्छ्रिते नचोच्छीर्षे सविष्टं वामपार्श्वत ॥ २३ ॥

सङ्कोच्य दक्षिणं सक्थि प्रसार्य च ततोऽपरम् ॥
अथास्य नेत्रं प्रणयेत्स्निग्धे स्निग्धमुखं गुदे ॥ २४ ॥
उच्छ्वास्य वस्तेर्वदने वद्धे हस्तमकम्पयत् ॥
पृष्ठवंशं प्रति ततो नातिद्रुताविलम्बितम् ॥ २५ ॥
नातिवेगं न वा मन्दं सकृदेव प्रपीडयेत् ॥
सावशेषं च कुर्वीत वायुः शेषे हि तिष्ठति ॥ २६ ॥
दत्तेतूत्तानदेहस्य पाणिना ताडयेत्स्फिचौ ॥
तत्पार्ष्णिभ्यां तथा शय्यां पादतश्च त्रिरुत्क्षिपेत् ॥ २७ ॥
ततः प्रसारिताङ्गस्य सोपधानस्य पार्ष्णिके ॥
आहन्यान्मुष्टिनाङ्गञ्च स्नेहेनाभ्यज्य मर्दयेत् ॥ २८ ॥
वेदनार्त्तमिति स्नेहो नहि शीघ्रं निवर्त्तते ॥
योज्यः शीघ्रं निवृत्तेऽन्यः स्नेहोऽतिष्ठन्नकार्यकृत् ॥ २९ ॥
दीप्ताग्निं त्वगतस्नेहं सायाह्ने भोजयेल्लघु ॥
निवृत्तिकालः परमस्त्रयो यामास्ततः परम् ॥ ३० ॥
अहोरात्रमुपेक्षेत परतः फलवर्त्तिभिः ॥
तीक्ष्णैर्वा बस्तिभिः कुर्याद्यत्नं स्नेहनिवृत्तये ॥ ३१ ॥
अतिरौक्ष्यादनागच्छन्न चेज्जाड्यादिदोषकृत् ॥
उपेक्षेतैव हि ततोऽध्युषितश्च निशां पिबेत् ॥ ३२ ॥
प्रातर्नागरधान्याम्भः कोष्णं केवलमेव वा
अन्वासयेत्तृतीयेऽह्नि पञ्चमे वा पुनश्च तम् ॥ ३३ ॥
यथा वा स्नेहपक्तिः स्यादतोऽत्युल्बणमारुतान् ॥
व्यायामनित्यान्दीप्ताग्नीन्रूक्षांश्च प्रतिवासरम् ॥ ३४ ॥

इति स्नेहैस्त्रिचतुरैः स्निग्धे स्रोतोविशुद्धये ॥
निरूहं शोधनं युञ्ज्यादस्निग्धे स्नेहनं तनोः ॥ ३५ ॥
पञ्चमेऽथ तृतीये वा दिवसे साधके शुभे ॥
मध्याह्ने किञ्चिदावृत्ते प्रयुक्ते बलिमङ्गले ॥ ३६ ॥
अभ्यक्तस्वेदितोत्सृष्टमलं नातिबुभुक्षितम् ॥
अवेक्ष्य पुरुषं दोषभेषजादीनि चादरात् ॥ ३७ ॥
बस्तिं प्रकल्पयेद्वैद्यस्तद्विद्यैर्बहुभिः सह ॥
क्वाथयेद्विंशतिपलं द्रव्यस्याष्टौ पलानि च ॥ ३८ ॥
ततः क्वाथाच्चतुर्थांशं स्नेहं वाते प्रकल्पयेत् ॥
पित्ते स्वस्थे च षष्ठांशमष्टमांशं कफाधिके ॥ ३९ ॥
सर्वत्र चाष्टमं भागं कल्काद्भवति वा यथा ॥
नात्यच्छसान्द्रता बस्तेः पलमात्रं गुडस्य च ॥ ४० ॥
मधुपट्वादिशेषश्च युक्त्या सर्वं तदेकतः ॥
उष्णाम्बु कुम्भीबाष्पेण तप्तं खजसमाहतम् ॥ ४१ ॥
प्रक्षिप्य बस्तौ प्रणयेत्पायौ नात्युष्णशीतलम् ॥
नातिस्निग्धं न वा रूक्षं नाति तीक्ष्णं न वा मृदु ॥ ४२ ॥
नात्यच्छसान्द्रं नो नातिमात्रं नापटु नाति च ॥
लवणं तद्वदम्लं च पठन्त्यन्ये तु तद्विदः ॥ ४३ ॥
मात्रा त्रिपलिका कुर्यात्स्नेहमाक्षिकयोः पृथक् ॥
कर्षार्धं माणिमन्थस्य स्वस्थे कल्कपलद्वयम् ॥ ४४ ॥
सर्वद्रवाणां शेषाणां पलानि दश कल्पयेत् ॥
माक्षिकं लवणं स्नेहं कल्कं क्वाथमिति क्रमात् ॥ ४५ ॥

आवपेत निरूहाणामेष संयोजने विधिः ॥
उत्ताने दत्तमात्रे तु निरूहे तन्मना भवेत् ॥ ४६ ॥
कृतोपधानः सञ्जातवेगश्चोत्कटकः सृजेत् ॥
आगतौ परमः कालो मुहूर्तो मृत्यवे परम् ॥ ४७ ॥
तत्रानुलोमिकं स्नेहक्षारमूत्राम्लकल्पितम् ॥
त्वरितं स्निग्धतीक्ष्णोष्णं वस्तिमन्यं प्रपीडयेत् ॥ ४८ ॥
विदध्यात्फलवर्तिं वा स्वेदनत्रासनादि च ॥
स्वयमेव निवृत्ते तु द्वितीयो वस्तिरिष्यते ॥ ४९ ॥
तृतीयोऽपि चतुर्थोऽपि यावद्वा सुनिरूढता ॥
विरिक्तवच्च योगादीन्विद्याद्योगे तु भोजयेत् ॥ ५० ॥
कोष्णेन वारिणा स्नानं तनु धन्वरसौदनम् ॥
विकारा ये निरूहस्य भवंति प्रचलैर्मलैः ॥ ५१ ॥
ते सुखोष्णाम्बुसिक्तस्य यान्ति भुक्तवतः शमम् ॥
अथ वातार्दितं भूयः सद्य एवानुवासयेत् ॥ ५२ ॥
सम्यग्घीनातियोगाश्च तस्य स्युः स्नेहपीतवत् ॥
किञ्चित्कालं स्थितो यश्च सपुरीषो निवर्तते ॥ ५३ ॥
सानुलोमानिलः स्नेहस्तत्सिद्धमनुवासनम् ॥
एकं त्रीन् वा बलासे तु स्नेहवस्तीन् प्रकल्पयेत् ॥५४॥
पञ्च वा सप्त वा पित्ते नवैकादश वानिले ॥
पुनस्ततोऽप्ययुग्मांस्तु पुनरास्थापनं ततः ॥ ५५ ॥
कफपित्तानिलेष्वन्नं यूषक्षीररसैः क्रमात् ॥
वातघ्नौषधनिःक्वाथस्त्रिवृतान्सैन्धवैर्युतः ॥ ५६ ॥

वस्तिरेकोऽनिले स्निग्ध. स्वाद्वम्लोष्णरसान्वित ॥
न्यग्रोधादिगणक्काथौ पत्रकादिसितायुतौ ॥ ५७ ॥
पित्ते स्वादुहिमौ साज्यक्षीरेक्षुरसमाक्षिकौ ॥
आरग्वधादिनिःक्काथवत्सकादियुतास्त्रय' ॥ ५८ ॥
रूक्षा सक्षौद्रगोमूत्रास्तीक्ष्णोष्णकटुका कफे ॥
त्रयश्च सन्निपातेऽपि दोपान् घ्नन्ति यत. क्रमात् ॥ ५९ ॥
त्रिभ्य. पर वस्तिमतो नेच्छन्त्यन्ये चिकित्सका' ॥
न हि दोपश्चतुर्थोऽस्ति पुनर्दीयेत य प्रति ॥ ६० ॥
उत्क्लेशन शुद्धिकर दोपाणा शमन क्रमात् ॥
त्रिधैव कल्पयेद्वस्तिमित्यन्येऽपि प्रचक्षते ॥ ६१ ॥
दोषौपधादिवलत सर्वमेतत्प्रमाणयेत् ॥
सम्यङ्निरूढलिङ्गं तु नासम्भाव्य निवर्त्तयेत् ॥ ६२ ॥
प्राक् स्नेह एकः पञ्चान्ते द्वादशास्थापनानि च ॥
सान्वासनानि कर्मैवं वस्तयस्त्रिंशदीरिता ॥ ६३ ॥
काल पञ्चदशैकोऽत्र प्राक् स्नेहान्ते त्रयस्तथा ॥
षट्पञ्चवस्त्यन्तरिता योगोऽष्टौ वस्तयोऽत्र तु ॥ ६४ ॥
त्रयो निरूहा' स्नेहाश्च स्नेहावाद्यन्तयोरुभौ ॥
स्नेहवस्ति निरूहं वा नैकमेवातिशीलयेत् ॥ ६५ ॥
उत्क्लेशाग्निवधौ स्नेहान्निरूहान्मरुतो भयम् ॥
तस्मान्निरूढ स्नेह्य' स्यान्निरूह्यश्चानुवासित ॥ ६६ ॥
स्नेहशोधनयुक्त्यैव वस्तिकर्म त्रिदोषजित् ॥
ह्रस्वया स्नेहपानस्य मात्रया योजितः सम. ॥ ६७ ॥

मात्राबस्तिः स्मृतः स्नेहः शीलनीयः सदा च सः ॥
बालवृद्धाध्वभारस्त्रीव्यायामासक्तचिन्तकैः ॥ ६८ ॥
वातभग्नबलाल्पाग्निनृपेश्वरसुखात्मभिः ॥
दोषघ्नो निष्परीहारो बल्यः सृष्टमलः सुखः ॥ ६९ ॥
बस्तौ रोगेषु नारीणां योनिगर्भाशयेषु च ॥
द्वित्रास्थापनशुद्धेभ्यो विदध्याद्वस्तिमुत्तमम् ॥ ७० ॥
आतुराङ्गुलमानेन तन्नेत्रं द्वादशाङ्गुलम् ॥
वृत्तं गोपुच्छवन्मूलमध्ययोः कृतकर्णिकम् ॥ ७१ ॥
सिद्धार्थकप्रवेशाग्रं श्लक्ष्णं हेमादिसम्भवम् ॥
कुन्दाश्वमारसुमनःपुष्पवृन्तोपमं दृढम् ॥ ७२ ॥
तस्य बस्तिर्मृदुलघुर्मात्रा शुक्तिर्विकल्प्य वा ॥
अथ स्नाताशितस्यास्य स्नेहबस्तिविधानतः ॥ ७३ ॥
ऋजोः सुखोपविष्टस्य पीठे जानुसमे मृदौ ॥
हृष्टे मेढ्रे स्थिते चर्जौ शनैः स्रोतोविशुद्धये ॥ ७४ ॥
सूक्ष्मां शलाकां प्रणयेत्तया शुद्धेऽनुसेवनीम् ॥
आमेहनान्तं नेत्रं च निष्कम्पं गुदवत्ततः ॥ ७५ ॥
पीडितेऽन्तर्गते स्नेह स्नेहबस्तिक्रमो हितः ॥
बस्तीननेन विधिना दद्यात् त्रींश्चतुरोऽपि वा ॥ ७६ ॥
अनुवासनवच्छेषं सर्वमेवास्य चिन्तयेत् ॥
स्त्रीणामार्तवकाले तु योनिर्गृह्णात्यपावृतेः ॥ ७७ ॥
विदधीत तदा तस्मादनृतावपि चात्यये ॥
योनिविभ्रंशशूलेषु योनिव्यापदसृग्दरे ॥ ७८ ॥

नेत्रं दशाङ्गुलं सुद्रप्रवेशं चतुरंगुलम् ॥
अपत्यमार्गे योज्यं स्याद् द्व्यंगुलं मूत्रवर्त्मनि ॥ ७९ ॥
मूत्रकृच्छ्रविकारेषु बालानां त्वेकमंगुलम् ॥
प्रकुञ्चो मध्यमा मात्रा बालानां शुक्तिरेव तु ॥ ८० ॥
उत्तानायाः शयानायाः सम्यक् संकोच्य सक्थिनी ॥
ऊर्ध्वजान्वास्त्रिचतुरानहोरात्रेण योजयेत् ॥ ८१ ॥
वस्तीस्त्रिरात्रमेवञ्च स्नेहमात्रां विवर्धयेत् ॥
त्र्यहमेव च विश्रम्य प्रणिदध्यात्पुनस्त्र्यहम् ॥ ८२ ॥
पक्षाद्विरेको वमिते ततः पक्षान्निरूहणम् ॥
सद्यो निरूढश्चान्वास्यः सप्तरात्राद्विरेचितः ॥ ८३ ॥
यथा कुसुम्भादियुतात्तोयाद्रागं हरेत्पटः ॥
तथा द्रवीकृतादेहाद्वस्तिर्निर्हरते मलान् ॥ ८४ ॥
शाखागताः कोष्ठगताश्च रोगा मर्मोर्ध्वसर्वावयवाङ्गजाश्च ॥
ये सन्ति तेषां नतु कश्चिदन्यो वायोः परं जन्मनि हेतुरस्ति८५
विट्श्लेष्मपित्तादिमलाचयानां
विक्षेपसंहारकरः स यस्मात् ॥
तस्यातिवृद्धस्य शमाय नान्यद्वस्ते-
र्विना भेषजमस्ति किञ्चित् ॥ ८६ ॥
तस्माच्चिकित्सार्द्ध इति प्रदिष्टः कृत्स्ना
चिकित्सापि च वस्तिरेकैः ॥
तथा निजागन्तुविकारकारी
रक्तौपधत्वेन शिराव्यधोऽपि ॥ ८७ ॥

इत्यष्टाङ्गहृदयसंहितायां सूत्रस्थाने एकोनविंशोऽध्यायः ॥ १९ ॥

# विंशोऽध्यायः ।



अथातो नस्यविधिमध्यायं व्याख्यास्यामः ।

ऊर्ध्वजत्रुविकारेषु विशेषान्नस्यमिष्यते ॥
नासा हि शिरसो द्वारं तेन तद्व्याप्य हन्ति तान् ॥ १ ॥
विरेचनं बृंहणं च शमनं च त्रिधापि तत् ॥
विरेचनं शिरःशूलजाड्यस्यन्दगलामये ॥ २ ॥
शोफगण्डकृमिग्रन्थिकुष्ठापस्मारपीनसे ॥
बृंहणं वातजे शूले सूर्यावर्त्ते स्वरक्षये ॥ ३ ॥
नासास्यशोषे वाक्सङ्गे कृच्छ्रबोधेऽवबाहुके ॥
शमनं नीलिकाव्यङ्गकेशदोषाक्षिराजिषु ॥ ४ ॥
यथास्वं योगिकैः स्नेहैर्यथास्वं च प्रसाधितैः ॥
कल्कक्वाथादिभिश्चाद्यं मधुपद्वासवैरपि ॥ ५ ॥
बृंहणं धन्वमांसोत्थरसासृक्खपुरैरपि ॥
शमनं योजयेत्पूर्वैः क्षीरेण च जलेन च ॥ ६ ॥
मर्शश्च प्रतिमर्शश्च द्विधा स्नेहोऽत्र मात्रया ॥
कल्काद्यैरवपीडस्तु तीक्ष्णैर्मूर्द्धविरेचनः ॥ ७ ॥
ध्मानं विरेचनश्चूर्णो युञ्ज्यात्तं मुखवायुना ॥
षडङ्गुलद्विमुखया नाड्या भेषजगर्भया ॥ ८ ॥
स हि भूरितरं दोषं चूर्णत्वादपकर्षति ॥
प्रदेशिन्यङ्गुलीपर्वद्वयान्मग्नसमुद्धृतात् ॥ ९ ॥

यावत्पतत्यसौ बिन्दुर्दशाष्टौ षट् क्रमेण ते ॥
मर्शस्योत्कृष्टमध्योना मात्रास्ता एव च क्रमात् ॥ १० ॥
बिन्दुद्वयोना॰ कल्कादेर्योजयेन्न तु नावनम् ॥
तोयमद्यगरस्नेहपीताना पातुमिच्छताम् ॥ ११ ॥
भुक्तभक्तशिर॰स्नातस्नातुकामस्रुतासृजाम् ॥
नवपीनसवेगार्त्तसूतिकाश्वासकासिनाम् ॥ १२ ॥
शुद्धाना प्रत्तवस्तीना तथानार्त्तवदुर्दिने ॥
अन्यत्रात्ययिकाद् व्याधेरथ नस्य प्रयोजयेत् ॥ १३ ॥
प्रात॰ श्लेष्माणि मध्याह्ने पित्ते साय निशोश्वले ॥
स्वस्थवृत्ते तु पूर्वाह्णे शरत्कालवसन्तयो ॥ १४ ॥
शीते मध्यदिने ग्रीष्मे साय वर्षासु सातपे ॥
वाताभिभूते शिरसि हिध्मायामपतानके ॥ १५ ॥
मन्यास्तम्भे स्वरभ्रंशे साय प्रातर्दिनेदिने ॥
एकाहान्तरमन्यत्र सप्ताहे च तदाचरेत् ॥ १६ ॥
स्निग्धस्विन्नोत्तमाङ्गस्य प्राक्कृतावश्यकस्य च ॥
निवातशयनस्थस्य जत्रूर्ध्व स्वेदयेत्पुन ॥ १७ ॥
अथोत्तानर्जुदेहस्य पाणिपादे प्रसारिते ॥
किञ्चिदुन्नतपादस्य किञ्चिन्मूर्द्धनि नामिते ॥ १८ ॥
नासापुट पिधायैक पर्यायेण निषेचयेत् ॥
उष्णाम्बुतप्तं भैषज्य प्रनाड्या पिचुनाथ वा ॥ १९ ॥
दत्ते पादतलस्कन्धहस्तकर्णादि मर्दयेत् ॥
शनैरुच्छिंघ्य निष्ठीवेत्पार्श्वयोरुभयोस्तत ॥ २० ॥

आभेषजक्षयादेवं द्विस्त्रिर्वा नस्यमाचरेत् ॥
मूर्च्छायां शीततोयेन सिञ्चेत्परिहरञ्छिरः ॥ २१ ॥
स्नेहं विरेचनस्यान्ते दद्याद्दोषाद्यपेक्षया ॥
नस्यान्ते वाक्शतं तिष्ठदुत्तानो धारयेत्ततः ॥ २२ ॥
धूमं पीत्वा कवोष्णाम्बुकवलान्कण्ठशुद्धये ॥
सम्यक्स्निग्धे सुखोच्छ्वासस्वप्नबोधाक्षपाटवम् ॥ २३ ॥
रूक्षेऽक्षिस्तब्धता शोषो नासास्ये मूर्धशून्यता ॥
स्निग्धेऽतिकण्डूर्गुरुताप्रसेकारुचिपीनसाः ॥ २४ ॥
सुविरिक्तेऽक्षिलघुतास्वरवक्त्रविशुद्धयः ॥
दुर्विरिक्ते गदोद्रेकः क्षामतातिविरेचिते ॥ २५ ॥
प्रतिमर्शः क्षतक्षामबालवृद्धसुखात्मसु ॥
प्रयोज्योऽकालवर्षेऽपि न त्विष्टो दुष्टपीनसे ॥ २६ ॥
मद्यपीतेऽबलश्रोत्रे कृमिदूषितमूर्द्धनि ॥
उत्कृष्टोत्क्लिष्टदोषे च हीनमात्रतया हि सः ॥ २७ ॥
निशाहर्भुक्तवान्ताहःस्वप्नाध्वश्रमरेतसाम् ॥
शिरोऽभ्यञ्जनगण्डूषप्रस्रावाञ्जनवर्चसाम् ॥ २८ ॥
दन्तकाष्ठस्य हासस्य योज्योऽन्तेऽसौ द्विबिन्दुकः ॥
पञ्चसु स्रोतसां शुद्धिः क्लमनाशस्त्रिषु क्रमात् ॥ २९ ॥
दृग्बलं पञ्चसु ततो दन्तदार्ढ्यं मरुच्छमः ॥
न नस्यमूनसप्ताब्दे नातीताशीतिवत्सरे ॥ ३० ॥
न चोनाष्टादशे धूमः कवलो नोनपञ्चमे ॥
न शुद्धिरूनदशमे न चातिक्रान्तसप्ततौ ॥ ३१ ॥

आजन्ममरण शस्त प्रतिमर्शस्तु वास्तिवत् ॥
मर्शवच्च गुणान्कुर्यात्स हि नित्योपसेवनात् ॥ ३२ ॥
न चात्र यन्त्रणा नापि व्यापद्भ्यो मर्शवद्भयम् ॥
तैलमेव च नस्यार्थे नित्याभ्यासेन शस्यते ॥ ३३ ॥
शिरस. श्लेष्मधामत्वात्स्नेहा. स्वस्थस्य नेतरे ॥
आशुकृच्चिरकारित्वं गुणोत्कर्षापकृष्टता ॥ ३४ ॥
मर्शे च प्रतिमर्शे च विशेषो न भवेद्यदि ॥
को मर्श सपरीहार सापद च भजेत्तत. ॥ ३५ ॥
अच्छपानविकाराख्यौ कुटीवातातपस्थिती ॥
अन्वासमात्रावस्ती च तद्वदेव च निर्दिशेत् ॥ ३६ ॥
जीवतीजलदेवदारुजलदत्वक्सेव्यगोपीहिम
दार्वीत्वङ्मधुकप्लवागुरुवरापुण्ड्राह्वबिल्वोत्पलम् ॥
धावन्यौ सरभिः स्थिरे कृमिहर पत्र त्रुटि रेणुक
किञ्जल्कं कमलाह्वय शतगुणे दिव्येऽम्भसि क्वाथयेत् ॥३७॥
तैलाद्रस दशगुण परिशोष्य तेन
तैल पचेच्च सलिलेन दशैव वारान् ॥
पाके क्षिपेच्च दशमे सममाजदुग्ध
नस्य महागुणमुशन्त्यणुतैलमेतत् ॥ ३८ ॥
घनोन्नतप्रसन्नत्वक्स्कंधग्रीवास्यवक्षसः ॥
दृढेन्द्रियास्त्वपलिता भवेयुर्नस्यशीलिनः ॥ ३९ ॥

इत्यष्टाङ्गहृदयसहितायां सूत्रस्थाने विशोऽध्याय ॥ २० ॥

# एकविंशतितमोऽध्यायः ।

अथातो धूमपानविधिमध्यायं व्याख्यास्यामः ।

जत्रूर्ध्वं कफवातोत्थविकाराणामजन्मने ॥
उच्छेदाय च जातानां पिबेद्धूमं सदात्मवान् ॥ १ ॥
स्निग्धो मध्यः स तीक्ष्णश्च वाते वातकफे कफे ॥
योज्यो न रक्तपित्तार्तिविरिक्तोदरमेहिषु ॥ २ ॥
तिमिरोर्ध्वानिलाध्मानरोहिणीदत्तवस्तिषु ॥
मत्स्यमद्यदधिक्षीरक्षौद्रस्नेहविषाशिषु ॥ ३ ॥
शिरस्यभिहते पाण्डुरोगे जागरिते निशि ॥
रक्तपित्तान्ध्यबाधिर्यतृण्मूर्च्छामदमोहकृत् ॥ ४ ॥
धूमोऽकालेऽतिपीतो वा तत्र शीतो विधिर्हितः ॥
क्षुतजृम्भितविण्मूत्रस्त्रीसेवाशस्त्रकर्मणाम् ॥ ५ ॥
हासस्य दन्तकाष्ठस्य धूममन्ते पिबेन्मृदुम् ॥
कालेष्वेषु निशाहारनावनान्ते च मध्यमम् ॥ ६ ॥
निद्रानस्याञ्जनस्नानच्छर्दितान्ते विरेचनम् ॥
वस्तिनेत्रसमद्रव्यं त्रिकोशं कारयेदृजु ॥ ७ ॥
मूलाग्रेऽङ्गुष्ठकोलास्थिप्रवेशं धूमनेत्रकम् ॥
तीक्ष्णस्नेहनमध्येषु त्रीणि चत्वारि पञ्च च ॥ ८ ॥
अङ्गुलानां क्रमात्पातुः प्रमाणेनाष्टकानि तत् ॥
ऋजूपविष्टस्तच्चेता विवृतास्यस्त्रिपर्ययम् ॥ ९ ॥

पिधाय च्छिद्रमेकैकं धूमं नासिकया पिबेत् ॥
प्राक् पिबेन्नासयोत्क्लिष्टे दोषे घ्राणशिरोगते ॥ १० ॥
उत्क्लेशनार्थं वक्त्रेण विपरीतं तु कण्ठगे ॥
मुखेनैव वमेद्धूमं नासया दृग्विघातकृत् ॥ ११ ॥
आक्षेपमोक्षैः पातव्यो धूमस्तु त्रिस्त्रिभिस्त्रिभिः ॥
अह्नः पिबेत्सकृत्स्निग्धं द्विर्मध्यं शोधनं परम् ॥ १२ ॥
त्रिश्चतुर्वा मृदौ तत्र द्रव्याण्यगुरुगुग्गुलुः ॥
मुस्तस्थौणेयशैलेयनलदोशीरवालकम् ॥ १३ ॥
वराङ्गकौन्ती मधुकबिल्वमज्जैलवालुकम् ॥
श्रीवेष्टकं सर्जरसो ध्यामकं मदनं प्लवम् ॥ १४ ॥
शल्लकी कुङ्कुमं माषा यवाः कुन्दुरुकस्तिलाः ॥
स्नेहः फलानां साराणां मेदोमज्जावसाघृतम् ॥ १५ ॥
शमने शल्लकी लाक्षा पृथ्वीका कमलोत्पलम् ॥
न्यग्रोधोदुम्बराश्वत्थप्लक्षरोध्रत्वचः सिता ॥ १६ ॥
यष्टी मधु सुवर्णत्वक् पद्मकं रक्तयष्टिका ॥
गन्धाश्चाकुष्ठतगरास्तीक्ष्णे ज्योतिष्मती निशा ॥ १७ ॥
दशमूलमनोह्वालं लाक्षा श्वेता फलत्रयम् ॥
गन्धद्रव्याणि तीक्ष्णानि गणो मूर्धविरेचनः ॥ १८ ॥
जले स्थितामहोरात्रमिषीकां द्वादशाङ्गुलाम् ॥
पिष्टैर्धूमौषधैरेवं पञ्चकृत्वः प्रलेपयेत् ॥ १९ ॥
वर्तिरङ्गुष्ठवत्स्थूला यवमध्या यथा भवेत् ॥
छायाशुष्का विगर्भां तां स्नेहाभ्यक्तां यथायथम् ॥२०॥

धूमनेत्रार्पितां पातुमग्निप्लुष्टां प्रयोजयेत् ॥
शरावसम्पुटच्छिद्रे नाडीं न्यस्य दशाङ्गुलाम् ॥
अष्टाङ्गुलां वा वक्त्रेण कासवान्धूममापिवेत् ॥ २१ ॥

कासः श्वासः पीनसो विस्वरत्वं
पूतिर्गन्धः पाण्डुता केशदोषः ॥
कर्णास्याक्षिस्रावकण्डूर्तिजाड्यं
तन्द्रा हिध्मा धूमपं न स्पृशन्ति ॥ २२ ॥

इत्यष्टाङ्गहृदयसंहितायां सूत्रस्थाने एकविंशतितमोऽध्यायः ॥ २१ ॥

## द्वाविंशतितमोऽध्यायः ।



अथातो गण्डूषादिविधिमध्यायं व्याख्यास्यामः ।
चतुष्प्रकारो गण्डूषः स्निग्धः शमनशोधनौ ॥
रोपणश्च त्रयस्तत्र त्रिषु योज्याश्चलादिषु ॥ १ ॥
अन्त्यो व्रणघ्नः स्निग्धोऽत्र स्वाद्वम्लपटुसाधितैः ॥
स्नेहैः संशमनस्तिक्तकषायमधुरौषधैः ॥ २ ॥
शोधनस्तिक्तकट्वम्लपटूष्णै रोपणः पुनः ॥
कषायतिक्तकैस्तत्र स्नेहः क्षीरं मधूदकम् ॥ ३ ॥
शुक्तं मद्यं रसो मूत्रं धान्याम्लं च यथायथम् ॥
कल्कैर्युक्तं विपक्कं वा यथास्पर्शं प्रयोजयेत् ॥ ४ ॥
दन्तहर्षे दन्तचाले मुखरोगे च वातिके ॥
सुखोष्णमथ वा शीतं तिलकल्कोदकं हितम् ॥ ५ ॥

गण्डूषधारणे नित्यं तैलं मांसरसोऽथ वा ॥
ऊषादाहान्विते पाके क्षते वागन्तुसम्भवे ॥ ६ ॥
विषक्षाराग्निदग्धे च सर्पिर्धार्यं पयोऽथ वा ॥
वैशद्यं जनयत्यास्ये सन्दधाति मुखव्रणान् ॥ ७ ॥
दाहतृष्णाप्रशमनं मधुगंडूषधारणम् ॥
धान्याम्लमास्यवैरस्यमलदौर्गन्ध्यनाशनम् ॥ ८ ॥
तदेवालवणं शीतं मुखशोषहरं परम् ।
आशु क्षीराम्बुगण्डूषो भिनत्ति श्लेष्मणश्चयम् ॥ ९ ॥
सुखोष्णोदकगण्डूषैर्जायते वक्त्रलाघवम् ॥
निवाते सातपे स्विन्नमृदितस्कन्धकन्धरः ॥ १० ॥
गण्डूषमपिबन् किञ्चिदुन्नतास्यो विधारयेत् ॥
कफपूर्णास्यता यावत्स्रवद्घ्राणाक्षताथ वा ॥
असञ्चार्यो मुखे पूर्णे गण्डूषः कवलोऽन्यथा ॥ ११ ॥
मन्याशिरःकर्णमुखाक्षिरोगाः प्रसेककण्ठामयवक्त्रशोषाः ॥
हृल्लासतन्द्रारुचिपीनसाश्च साध्या विशेषात्कवलग्रहेण ।१२।
कल्को रसक्रिया चूर्णस्त्रिविधं प्रतिसारणम् ॥
युञ्ज्यात्तत्कफरोगेषु गण्डूषविहितौषधैः ॥ १३ ॥
मुखालेपस्त्रिधा दोषविषहा वर्णकृच्च सः ॥
उष्णो वातकफे शस्तः शेषेष्वत्यर्थशीतलः ॥ १४ ॥
त्रिप्रमाणश्चतुर्भागत्रिभागार्धाङ्गुलोन्नतिः ॥
अशुष्कस्य स्थितिस्तस्य शुष्को दूषयतिच्छविम् ॥ १५ ॥

तमार्द्रयित्वापनयेत्तदन्तेऽभ्यङ्गमाचरेत् ॥
विवर्जयेद्दिवास्वप्नभाष्याग्न्यातपशुक्क्रुधः ॥ १६ ॥
न योज्यः पीनसेऽजीर्णे दत्तनस्ये हनुग्रहे ॥
अरोचके जागरिते स च हन्ति सुयोजितः ॥ १७ ॥
अकालपलितव्यङ्गवलीतिमिरनीलिकाः ॥
कोलमज्जावृषान्मूलं शावरं गौरसर्षपाः ॥ १८ ॥
सिंहीमूलं तिलाः कृष्णा दार्वीत्वङ् निस्तुषा यवाः ॥
दर्भमूलहिमोशीरशिरीषमिशितण्डुलाः ॥ १९ ॥
कुमुदोत्पलकह्लारदूर्वामधुकचन्दनम् ॥
कालीयकतिलोशीरमांसीतगरपद्मकम् ॥ २० ॥
तालीसगुन्द्रापुण्ड्राह्वयष्टीकाशनतागुरु ॥
इत्यर्धार्धोदिता लेपा हेमन्तादिषु षट् स्मृताः ॥ २१ ॥
मुखालेपनशीलानां दृढं भवति दर्शनम् ॥
वदनं चापरिम्लानं श्लक्ष्णं तामरसोपमम् ॥ २२ ॥
अभ्यङ्गसेकपिचवो बस्तिश्चेति चतुर्विधम् ॥
मूर्धतैलं बहुगुणं तद्विद्यादुत्तरोत्तरम् ॥ २३ ॥
तत्राभ्यङ्गः प्रयोक्तव्यो रौक्ष्यकंडूमलादिषु ॥
अरूंषिकाशिरस्तोददाहपाकव्रणेषु तु ॥ २४ ॥
परिषेकः पिचुः केशशातस्फुटनधूपने ॥
नेत्रस्तम्भे च बस्तिस्तु प्रसुप्त्यर्दितजागरे ॥ २५ ॥
नासास्यशोषे तिमिरे शिरोरोगे च दारुणे ॥
विधिस्तस्य निषण्णस्य पीठे जानुसमे मृदौ ॥ २६ ॥

शुद्धाक्तस्विन्नदेहस्य दिनान्ते गव्यमाहिषम् ॥
द्वादशाङ्गुलविस्तीर्णं चर्मपट्टं शिरःसमम् ॥ २७ ॥
आकर्णबन्धनस्थानं ललाटे वस्त्रवेष्टिते ॥
चैलवेणिकया बद्ध्वा माषकल्केन लेपयेत् ॥ २८ ॥
ततो यथाव्याधि शृतं स्नेहं कोष्णं निषेचयेत् ॥
ऊर्ध्वं केशभुवो यावद् द्व्यङ्गुलं धारयेच्च तम् ॥ २९ ॥
आवक्त्रनासिकोत्क्लेदाद्दशाष्टौ षट् चलादिषु ॥
मात्रासहस्राण्यरुजे त्वेकं स्कन्धादि मर्दयेत् ॥ ३० ॥
मुक्तस्नेहस्य परमं सप्ताहं तस्य सेवनम् ॥
धारयेत्पूरणं कर्णे कर्णमूलं विमर्दयन् ॥ ३१ ॥
रुजः स्यान्मार्दवं यावन्मात्राशतमवेदने ॥
यावत्पर्येति हस्ताग्रं दक्षिणं जानुमण्डलम् ॥
निमेषोन्मेषकालेन समं मात्रा तु सा स्मृता ॥ ३२॥

कचसदनसितत्वपिञ्जरत्व
परिस्फुटनं शिरसः समीररोगान् ॥
जयति जनयतीन्द्रियप्रसादं
स्वरहनुमूर्द्धबलं च मूर्द्धतैलम् ॥ ३३ ॥

इत्यष्टाङ्गहृदयसंहितायां सूत्रस्थाने द्वाविंशतितमोऽध्यायः ॥ २२ ॥

## त्रयोविंशोऽध्यायः ।



अथात आश्चोतनाञ्जनविधिमध्यायं व्याख्यास्यामः ।
सर्वेषामक्षिरोगाणामादावाश्चोतनं हितम् ॥
रुक्तोदकण्डूघर्षाश्रुदाहरोगनिबर्हणम् ॥ १ ॥
उष्णं वाते कफे कोष्णं तच्छीतं रक्तपित्तयोः ॥
निवातस्थस्य वामेन पाणिनोन्मील्य लोचनम् ॥ २ ॥
शुक्त्या प्रलम्बयान्येन पिचुवर्त्या कनीनिके ॥
दश द्वादश वा विन्दून् द्व्यङ्गुलादवसेचयेत् ॥ ३ ॥
ततः प्रमृज्य मृदुना चैलेन कफवातयोः ॥
अन्येन कोष्णपानीयप्लुतेन स्वेदयेन्मृदु ॥ ४ ॥
अत्युष्णतीक्ष्णं रुग्रागदृङ्नाशायाक्षिसेचनम् ॥
अतिशीतं तु कुरुते निस्तोदस्तम्भवेदनाः ॥ ५ ॥
कषायवर्त्मतां घर्षं कृच्छ्रादुन्मेषणं बहु ॥
विकारवृद्धिमत्यल्पं संरम्भमपरिस्रुतम् ॥ ६ ॥
गत्वा सन्धिशिरोघ्राणमुखस्रोतांसि भेषजम् ॥
ऊर्ध्वगान्नयने न्यस्तमपवर्त्तयते मलान् ॥ ७ ॥
अथाञ्जनं शुद्धतनोर्नेत्रमात्राश्रये मले ॥
पक्वलिङ्गेऽल्पशोफार्त्तिकण्डूपैच्छिल्यलक्षिते ॥ ८ ॥
मन्दघर्षाश्रुरागेऽक्ष्णि प्रयोज्यं घनदूषिके ॥
आर्ते पित्तकफासृग्भिर्मारुतेन विशेषतः ॥ ९ ॥

लेखन रोपण दृष्टिप्रसादनमिति त्रिधा ॥
अञ्जन लेखन तत्र कषायाम्लपटूषणैः ॥ १० ॥
रोपण तिक्तकैर्द्रव्यै. स्वादुशीतैः प्रसादनम् ॥
दशाङ्गुला तनुर्मध्ये शलाका मुकुलानना ॥ ११ ॥
प्रशस्ता लेखने ताम्री रोपणे काललोहजा ॥
अङ्गुली च सुवर्णोत्था रूप्यजा च प्रसादने ॥ १२ ॥
पिण्डो रसक्रिया चूर्णस्त्रिधैवाञ्जनकल्पना ॥
गुरौ मध्ये लघौ दोषे ता क्रमेण प्रयोजयेत् ॥ १३ ॥
हरेणुमात्रं पिण्डस्य वेल्लमात्रा रसक्रिया ॥
तीक्ष्णस्य द्विगुण तस्य मृदुनश्चूर्णितस्य च ॥ १४ ॥
द्वे शलाके तु तीक्ष्णस्य तिस्र· स्युरितरस्य च ॥
निशि स्वप्ने न मध्याह्ने पानान्नोष्णगभस्तिभिः ॥ १५ ॥
अक्षिरोगाय दोषाः स्युर्वर्द्धितोत्पीडितद्रुताः ॥
प्रात. साय च तच्छान्त्यै व्यभ्रेऽर्केऽतोऽञ्जयेत्सदा ॥ १६ ॥
वदन्त्यन्ये तु न दिवा प्रयोज्य तीक्ष्णमञ्जनम् ॥
विरेकदुर्वलं चक्षुरादित्य प्राप्य सीदति ॥ १७ ॥
स्वप्नेन रात्रौ कालस्य सौम्यत्वेन च तर्पिता ॥
शीतसात्म्या दृगाग्नेयी स्थिरता लभते पुनः ॥ १८ ॥
अत्युद्रिक्ते वलासे तु लेखनीयेऽथ वा गदे ॥
काममह्न्यपि नात्युष्णे तीक्ष्णमक्षिण प्रयोजयेत् ॥ १९ ॥
अश्मनो जन्म लोहस्य तत एव च तीक्ष्णता ॥
उपघातोऽपि तेनैव तथा नेत्रस्य तेजसः ॥ २० ॥

न रात्रावपि शीतेऽति नेत्रे तीक्ष्णाञ्जनं हितम् ॥
दोषमस्रावयत्स्तम्भकण्डूजाड्यादिकारि तत् ॥ २१ ॥
नाञ्जयेद्भीतवमितविरिक्ताशितवेगिते ॥
क्रुद्धज्वरिततान्ताक्षिशिरोरुक्शोकजागरे ॥ २२ ॥
अदृष्टेऽर्के शिरःस्नाते पीतयोर्धूममद्ययोः ॥
अजीर्णेऽग्न्यर्कसन्तप्ते दिवा सुप्ते पिपासिते ॥ २३ ॥
अतितीक्ष्णमृदुस्तोकबह्वच्छघनकर्कशम् ॥
अत्यर्थशीतलं तप्तमञ्जनं नावचारयेत् ॥ २४ ॥
अथानुन्मीलयन्दृष्टिमन्तःसञ्चारयेच्छनैः ॥
अञ्जिते वर्त्मनी किञ्चिच्चालयेच्चैवमञ्जनम् ॥ २५ ॥
तीक्ष्णं व्याप्नोति सहसा न चोन्मेषनिमेषणम् ॥
निष्पीडनं च वर्त्मभ्यां क्षालनं वा समाचरेत् ॥ २६ ॥
अपेतौषधसंरम्भं निर्वृतं नयनं यदा ॥
व्याधिदोषर्तुयोग्याभिरद्भिः प्रक्षालयेत्तदा ॥ २७ ॥
दक्षिणाङ्गुष्ठकेनाक्षि ततो वामं सवाससा ॥
ऊर्ध्ववर्त्मनि संगृह्य शोध्यं वामेन चेतरत् ॥ २८ ॥
वर्त्मप्राप्ताञ्जनाद्दोषो रोगान्कुर्यादतोऽन्यथा ॥
कण्डूजाड्येऽञ्जनं तीक्ष्णं धूमं वा योजयेत्पुनः ॥
तीक्ष्णाञ्जनाभितप्ते तु पूर्णं प्रत्यञ्जनं हितम् ॥ २९ ॥

इत्यष्टाङ्गहृदयसंहितायां सूत्रस्थाने त्रयोविंशोऽध्यायः ॥ २३ ॥

# चतुर्विंशतितमोऽध्यायः ।



अथातस्तर्पणपुटपाकविधिमध्याय व्याख्यास्याम. ॥
नयने ताम्यति स्तब्धे शुष्के रूक्षेऽभिघातिते ॥
वातपित्तातुरे जिह्मे शीर्णप्रक्ष्माविलेक्षणे ॥ १ ॥
कृच्छ्रोन्मीलशिराहर्षशिरोत्पाततमोऽर्जुनै ॥
स्यन्दमन्थान्यतोवातवातपर्यायशुक्रकैः ॥ २ ॥
आतुरे शान्तरागाश्रुशूलसंरम्भदूषिके ॥
निवाते तर्पणं योज्य शुद्धयोर्मूर्द्धकाययो ॥ ३ ॥
काले साधारणे प्रातः साय चोत्तानशायिन ॥
यवमाषमयी पाली नेत्रकोशाद्बहि समाम् ॥ ४ ॥
द्व्यङ्गुलोच्चा दृटा कृत्वा यथास्वं सिद्धमावपेत् ॥
सर्पिर्निमीलिते नेत्रे तप्ताम्बुप्रविलापितम् ॥ ५ ॥
नक्तान्ध्यवाततिमिरकृच्छ्रबोधादिके वसाम् ॥
आपक्ष्माग्रादथोन्मेष शनकैस्तस्य कुर्वत ॥ ६ ॥
मात्रा विगणयेत्तत्र वर्त्म सन्धिसितासिते ॥
दृष्टौ च क्रमशो व्याधौ शत त्रीणि च पञ्च च ॥ ७ ॥
शतानि सप्त चाष्टौ च दश मन्थे दशानिले ॥
पित्ते षट् स्वस्थवृत्ते च बलासे पञ्च धारयेत् ॥ ८ ॥
कृत्वापाङ्गे ततो द्वारं स्नेह पात्रे तु गालयेत् ॥
पिबेच्च धूम नेक्षेत व्योमरूप च भास्वरम् ॥ ९ ॥

इत्थं प्रतिदिनं वायौ पित्ते त्वेकान्तरं कफे ॥
स्वस्थे च द्व्यन्तरं दद्यादातृप्तेरिति योजयेत् ॥ १० ॥
प्रकाशक्षमता स्वास्थ्यं विशदं लघु लोचनम् ॥
तृप्ते विपर्ययोऽतृप्तेऽतितृप्ते श्लेष्मजा रुजः ॥ ११ ॥
स्नेहपीता तनुरिव क्लान्ता दृष्टिर्हि सीदति ॥
तर्पणानन्तरं तस्माद्दृग्बलाधानकारिणम् ॥ १२ ॥
पुटपाकं प्रयुञ्जीत पूर्वोक्तेष्वेव यक्ष्मसु ॥
स वाते स्नेहनः श्लेष्मसहिते लेखनो हितः ॥ १३ ॥
दृग्दौर्बल्येऽनिले पित्ते रक्ते स्वस्थे प्रसादनः ॥
भूशयप्रसहानूपमेदोमज्जावसामिषैः ॥ १४ ॥
स्नेहन पयसा पिष्टैर्जीवनीयैश्च कल्पयेत् ॥
मृगपक्षियकृन्मांसमुक्तायस्ताम्रसैन्धवैः ॥ १५ ॥
स्रोतोजशङ्खफेनालैर्लेखनं मस्तुकल्पितैः ॥
मृगपक्षियकृन्मज्जावसान्त्रहृदयामिषैः ॥ १६ ॥
मधुरैः सघृतैस्स्तन्यक्षीरपिष्टैः प्रसादनम् ॥
बिल्वमात्रं पृथक् पिण्डं मांसभेषजकल्कयोः ॥ १७ ॥
उरुबूकवटाम्भोजपत्रैः स्नेहादिषु क्रमात् ॥
वेष्टयित्वा मृदा लिप्तं धवधन्वनगोमयैः ॥ १८ ॥
पचेत्प्रदीप्तैरग्न्याभं पक्वं निष्पीड्य तद्रसम् ॥
नेत्रे तर्पणवद्युञ्ज्याच्छतं द्वे त्रीणि धारयेत् ॥ १९ ॥
लेखनस्नेहनान्त्येषु पूर्वौ कोष्णौ हिमोऽपरः ॥
धूमपोऽन्ते तयोरेव योगास्तत्र च तृप्तिवत् ॥ २० ॥

तर्पण पुटपाकश्च नस्यानर्हे न योजयेत् ॥
यावन्त्यहानि युञ्जीत द्विस्ततो हितभाग्भवेत् ॥
मालतीमल्लिकापुष्पैर्बद्धाक्षो निवसेन्निशि ॥ २१ ॥
सर्वात्मना नेत्रबलाय यत्न कुर्वीत नस्याञ्जनतर्पणाद्यैः ॥
दृष्टिश्च नष्टा विविधं जगच्च तमोमय जायत एकरूपम् २२

इत्यष्टाङ्गहृदयसंहिताया सूत्रस्थाने चतुर्विंशोऽध्याय ॥ २४ ॥

## पञ्चविंशतितमोऽध्यायः ।



अथातो यन्त्रविधिमध्याय व्याख्यास्याम ।
नानाविधाना शल्याना नानादेशप्रवेशिनाम् ॥
आहर्तुमभ्युपायो यस्तद्यन्त्रं यच्च दर्शने ॥ १ ॥
अर्शोभगन्दरादीना शस्त्रक्षाराग्नियोजने ॥
शेषाङ्गपरिरक्षाया तथा वस्त्यादिकर्मणि ॥ २ ॥
घटिकालाबुशृङ्गञ्च जाम्बवोष्ठादिकानि च ॥
अनेकरूपकार्याणि यन्त्राणि विविधान्यत ॥ ३ ॥
विकल्प्य कल्पयेद् बुद्धया यथा स्थूलं तु वक्ष्यते ॥
तुल्यानि कङ्कसिंहर्क्षकाकादिमृगपक्षिणाम् ॥ ४ ॥
मुखैर्मुखानि यन्त्राणा कुर्यात्तत्सञ्ज्ञकानि च ॥
अष्टादशाङ्गुलायामान्यायसानि च भूरिशः ॥ ५ ॥
मसूराकारपर्यन्तै. कण्ठे बद्धानि कीलकै. ॥
विद्यात्स्वस्तिकयन्त्राणि मूलेऽङ्कुशनतानि च ॥ ६ ॥

तैर्दृढैरस्थिसंलग्नशल्याहरणमिष्यते ॥
कीलबद्धविमुक्ताग्रौ सन्देशौ षोडशाङ्गुलौ ॥ ७ ॥
त्वक्शिरास्नायुपिशितलग्नशल्यापकर्षणौ ॥
षडङ्गुलोऽन्यो हरणे सूक्ष्मशल्योपपक्ष्मगाम् ॥ ८ ॥
मुचुण्डी सूक्ष्मदन्तर्जुमूले रुचकभूषणा ॥
गम्भीरव्रणमांसानामर्मणः शेषितस्य च ॥ ९ ॥
द्वे द्वादशाङ्गुले मत्स्यतालवद्ध्येकतालके ॥
तालयन्त्रे स्मृते कर्णनाडी शल्यापहारिणी ॥ १० ॥
नाडीयन्त्राणि शुषिराण्येकानेकमुखानि च ॥
स्रोतोगतानां शल्यानामामयानाञ्च दर्शने ॥ ११ ॥
क्रियाणां सुकरत्वाय कुर्यादाचूषणाय च ॥
तद्विस्तारपरीणाहदैर्घ्यं स्रोतोऽनुरोधतः ॥ १२ ॥
दशाङ्गुलार्धनाहान्तः कण्ठशल्यावलोकने ॥
नाडी पञ्चमुखच्छिद्रा चतुष्कर्णस्य संग्रहे ॥ १३ ॥
वारङ्गस्य द्विकर्णस्य त्रिच्छिद्रा तत्प्रमाणतः ॥
वारङ्गकर्णसंस्थानानाहदैर्घ्यानुरोधतः ॥ १४ ॥
नाडीरेवंविधाश्चान्या द्रष्टुं शल्यानि कारयेत् ॥
पद्मकर्णिकया मूर्ध्नि सदृशी द्वादशांगुला ॥ १५ ॥
चतुर्थसुषिरा नाडी शल्यनिर्घातिनी मता ॥
अर्शसां गोस्तनाकारं यन्त्रकं चतुरङ्गुलम् ॥ १६ ॥
नाहे पञ्चांगुलं पुंसां प्रमदानां षडंगुलम् ॥
द्विच्छिद्रं दर्शने व्याधेरेकच्छिद्रं तु कर्मणि ॥ १७ ॥

मध्येऽस्य त्र्यंगुलं छिद्रमंगुष्ठोदरविस्तृतम् ॥
अर्द्धांगुलोच्छ्रितोद्वृत्तकर्णिकन्तु तदूर्ध्वत ॥ १८ ॥
शम्याख्यं तादृगच्छिद्रं यन्त्रमर्शःप्रपीडनम् ॥
सर्वथापनयेदोष्ठं छिद्रादूर्ध्वं भगन्दरे ॥ १९ ॥
घ्राणार्बुदार्शसामेकच्छिद्रा नाड्यंगुलद्वया ॥
प्रदेशिनीपरीणाहा स्याद्भगन्दरयन्त्रवत् ॥ २० ॥
अंगुलित्राणकं दान्तं वार्क्षं वा चतुरंगुलम् ॥
द्विच्छिद्रं गोस्तनाकारं तद्वक्त्रविवृतौ सुखम् ॥ २१ ॥
योनिव्रणेक्षणं मध्ये सुषिरं षोडशांगुलम् ॥
मुद्राबद्धं चतुर्भित्तमम्भोजमुकुलाननम् ॥ २२ ॥
चतुःशलाकमाक्रान्तं मूले तद्विकसेन्मुखे ॥
यन्त्रे नाडीव्रणाभ्यंगक्षालनाय षडंगुले ॥ २३ ॥
वस्तियन्त्राकृती मूले मुखेंगुष्ठकलायखे ॥
अग्रतोऽकर्णिके मूले निबद्धमृदुचर्मणी ॥ २४ ॥
द्विद्वारा नलिका पिच्छनलिका वोदकोदरे ॥
धूमवस्त्यादियन्त्राणि निर्दिष्टानि यथायथम् ॥ २५ ॥
त्र्यंगुलास्यं भवेच्छृंगं चूषणेऽष्टादशांगुलम् ॥
अग्रे सिद्धार्थकच्छिद्रं सुनद्धं चूचुकाकृति ॥ २६ ॥
स्याद्द्वादशांगुलोऽलाबुर्नाहे त्वष्टादशांगुलः ॥
चतुस्त्र्यङ्गुलवृत्तास्यो दीप्तोऽन्तः श्लेष्मरक्तहृत ॥२७॥
तद्वद्धटी हिता गुल्मविलयोन्नमने च सा ॥
शलाकाख्यानि यन्त्राणि नानाकर्माकृतीनि च ॥ २८ ॥

यथायोगप्रमाणानि तेषामेषणकर्मणी ॥
उभे गण्डूपदमुखे स्रोतोभ्यः शल्यहारिणी ॥ २९ ॥
मसूरदलवक्त्रे द्वे स्यातामष्टनवांगुले ॥
शङ्कवः षडुभौ तेषां षोडशद्वादशांगुलौ ॥ ३० ॥
व्यूहनेऽहिफणावक्त्रौ द्वौ दशद्वादशांगुलौ ॥
चालने शरपुंखास्यौ आहार्ये वडिशाकृती ॥ ३१ ॥
नतोऽग्रे शंकुना तुल्यो गर्भशंकुरिति स्मृतः ॥
अष्टांगुलायतस्तेन मूढगर्भं हरेत्स्त्रियाः ॥ ३२ ॥
अश्मर्याहरणे सर्पफणावद्वक्रमग्रतः ॥
शरपुंखमुखं दन्तपातनं चतुरंगुलम् ॥ ३३ ॥
कार्पासविहितोष्णीषाः शलाकाः षट् प्रमार्जने ॥
पायावासन्नदूरार्थे द्वे दशद्वादशांगुले ॥ ३४ ॥
द्वे षट् सप्तांगुले घ्राणे द्वे कर्णेऽष्टनवांगुले ॥
कर्णशोधनमश्वत्थपत्रप्रान्तस्रुवाननम् ॥ ३५ ॥
शलाकाजाम्बवोष्ठानां क्षारेऽग्नौ च पृथक् त्रयम् ॥
युञ्ज्यात् स्थूलाणुदीर्घाणां शलाकामन्त्रवर्त्मनि ॥ ३६ ॥
मध्योर्ध्ववृत्तदण्डां च मूले चार्द्धेन्दुसन्निभाम् ॥
कोलास्थिदलतुल्यास्या नासार्शोऽर्बुददाहकृत् ॥ ३७ ॥
अष्टांगुला निम्नमुखास्तिस्त्रः क्षारौषधक्रमे ॥
कनीनीमध्यमानामिनखमानसमैर्मुखैः ॥ ३८ ॥
स्वंस्वमुक्तानि यन्त्राणि मेढ्रशुद्ध्यञ्जनादिषु ॥
अनुयन्त्राण्ययस्कान्तरज्जुवस्त्राश्ममुद्गराः ॥ ३९ ॥

अभ्रान्त्रजिह्वावालाश्च शाखानखमुखद्विजा. ॥
काल. पाक. कर पादो भय हर्पश्च तत्क्रिया ॥
उपायवित्प्रविभजेदालोच्य निपुण धिया ॥ ४० ॥
निर्घातनोन्मथनपूरणमार्गशुद्धि-
संव्यूहनाहरणवन्धनपीडनानि ॥
आचूपणोन्नमननामनचालभङ्ग
व्यावर्तनर्जुकरणानि च यन्त्रकर्म ॥ ४१ ॥
निवर्तते साध्ववगाहते च ग्राह्य गृहीत्वोद्धरते च यस्मात् ॥
यन्त्रेष्वत कङ्कमुखं प्रधान स्थानेपु सर्वेष्वधिकारि यच्च॥४२॥

इत्यष्टाङ्गहृदयसहिताया सूत्रस्थाने पञ्चविंशोऽध्याय ॥ २५ ॥



# षड्विंशतितमोऽध्यायः ।

अथात. शस्त्रविधिमध्याय व्याख्यास्याम ।
पड्विंशतिः सुकर्मारैर्घटितानि यथाविधि ॥
शस्त्राणि रोमवाहीनि वाहुल्येनागुलानि पट् ॥ १ ॥
सुरूपाणि सुधाराणि सुग्रहाणि च कारयेत् ॥
अकरालानि सुध्मातसुतीक्ष्णावर्तितेऽयासि ॥ २ ॥
समाहितमुखाग्राणि नीलाम्भोजच्छवीनि च ॥
नामानुगतरूपाणि सदा सन्निहितानि च ॥ ३ ॥
स्वोन्मानार्धचतुर्थांशफलान्येकैकशोऽपि च ॥
प्रायो द्वित्राणि युञ्जीत तानि स्थानविशेपत ॥ ४ ॥

मण्डलाग्रं फले तेषां तर्जन्यंतर्नखाकृति ॥
लेखने छेदने योज्यं पोथकीशुण्डिकादिषु ॥ ५ ॥
वृद्धिपत्रं क्षुराकारं छेदभेदनपाटने ॥
ऋज्वग्रमुन्नते शोफे गम्भीरे च तदन्यथा ॥ ६ ॥
नताग्रं पृष्ठतो दीर्घह्रस्ववक्त्रं यथाशयम् ॥
उत्पलाध्यर्धधाराख्ये छेदने भेदने तथा ॥ ७ ॥
सर्पास्यं घ्राणकर्णार्शश्छेदनेऽर्द्धांगुलं फले ॥
गतेरन्वेषणे श्लक्ष्णा गण्डूपदमुखैषिणी ॥ ८ ॥
भेदनार्थेऽपरा सूचीमुखा मूलनिविष्टखा ॥
वेतसं व्यधने स्राव्ये शरार्यास्यं त्रिकूर्चके ॥ ९ ॥
कुशाटा वदने स्राव्ये द्व्यंगुलं स्यात्तयोः फलम् ॥
तद्वदन्तर्मुखं तस्य फलमध्यर्धमंगुलम् ॥ १० ॥
अर्द्धचन्द्राननं चैतत्तथाऽध्यर्द्धांगुलं फले ॥
व्रीहिवक्त्रं प्रयोज्यञ्च तच्छिरोदरयोर्व्यधे ॥ ११ ॥
पृथुः कुठारी गोदन्तसदृशार्द्धांगुलानना ॥
तयोर्ध्वदण्डया विद्ध्येदुपर्यस्थ्नां स्थितां शिराम् ॥१२॥
ताम्री शलाका द्विमुखी मुखे कुरुबकाकृतिः॥
लिङ्गनाशं तया विद्ध्येत्कुर्यादंगुलिशस्त्रकम् ॥ १३ ॥
मुद्रिकानिर्गतमुखं फलेत्यर्द्धांगुलायतम् ॥
योगतो वृद्धिपत्रेण मण्डलाग्रेण वा समम् ॥ १४ ॥
तत्प्रदेशिन्यग्रपर्वप्रमाणार्पणमुद्रिकम् ॥
सूत्रबद्धं गलस्रोतोरोगच्छेदनभेदने ॥ १५ ॥

ग्रहणे शुण्डिकाभौदेर्वडिशं सुनताननम् ॥
छेदेऽश्मना करपत्रं तु खरधारं दशांगुलम् ॥ १६ ॥
विस्तारे द्व्यंगुलं सूक्ष्मदन्तं सुत्सरुबन्धनम् ॥
स्नायुसूत्रकचच्छेदे कर्त्तरी कर्त्तरीनिभा ॥ १७ ॥
वक्रर्जुधारं द्विमुखं नखशस्त्रं नवांगुलम् ॥
सूक्ष्मशल्योद्धृतिच्छेदभेदप्रच्छन्नलेखने ॥ १८ ॥
एकधारं चतुष्कोणं प्रबद्धाकृति चैकतः ॥
दन्तलेखनकं तेन शोधयेद्दन्तशर्कराम् ॥ १९ ॥
वृत्ता गूढदृढाः पाशे तिस्रः सूच्योऽत्र सीवने ॥
मांसलानां प्रदेशानां त्र्यस्रा त्र्यंगुलमायता ॥ २० ॥
अल्पमांसास्थिसन्धिस्थव्रणानां द्व्यंगुलायता ॥
व्रीहिवक्त्रा धनुर्वक्रा पक्वामाशयमर्मसु ॥ २१ ॥
सा सार्द्धद्व्यंगुला सर्वावृत्तास्ताश्चतुरंगुलाः ॥
कूर्चो वृत्तैकपीठस्था सप्ताष्टौ वा सुबन्धनाः ॥ २२ ॥
सयोज्यो नीलिकाव्यङ्गकेशशातनकुट्टने ॥
अर्द्धांगुलैर्मुखैर्वृत्तैरष्टाभिः कण्टकैः खजः ॥ २३ ॥
पाणिभ्यां मथ्यमानेन घ्राणात्तेन हरेदसृक् ॥
व्यधने कर्णपालीनां यूथिका मुकुलानना ॥ २४ ॥
आरार्द्धांगुलवृत्तास्या तत्प्रवेशा तथोर्ध्वतः ॥
चतुरस्रा तया विध्येच्छोफं पक्वामसंशये ॥ २५ ॥
कर्णपालीश्च बहुला बहुलायाश्च शस्यते ॥
सूची त्रिभागसुषिरा त्र्यंगुला कर्णवेधनी ॥ २६ ॥

जलौकःक्षारदहनकाचोपलनखादयः ॥
अलौहान्यनुशस्त्राणि तान्येवं च विकल्पयेत् ॥ २७ ॥
अपराण्यपि यन्त्रादीन्युपयोगश्च यौगिकम् ॥
उत्पाट्यपाट्यसीव्यैपलेख्यप्रच्छन्नकुट्टनम् ॥ २८ ॥
छेद्यं भेद्यं व्यधो मन्थो ग्रहो दाहश्च तत्क्रियाः ॥
कुण्ठखण्डतनुस्थूलह्रस्वदीर्घत्ववक्रताः ॥ २९ ॥
शस्त्राणां खरधारत्वमष्टौ दोषाः प्रकीर्तिताः ॥
छेदभेदनलेख्यार्थं शस्त्रं वृन्तफलान्तरे ॥ ३० ॥
तर्जनीमध्यमांगुष्ठैर्गृह्णीयात्सुसमाहितः ॥
विस्रावणानि वृन्ताग्रे तर्जन्यंगुष्ठकेन च ॥ ३१ ॥
तलप्रच्छन्नवृत्ताग्रं ग्राह्यं व्रीहिमुखं मुखे ॥
मूलेष्वाहरणार्थं तु क्रियासौकर्यतोऽपरम् ॥ ३२ ॥
स्यान्नवांगुलविस्तारः सुघनो द्वादशांगुलः ॥
क्षौमपत्रोर्णकौशेयदुकूलमृदुचर्मजः ॥ ३३ ॥
विन्यस्तपाशः सुस्यूतः सान्तरोर्णास्थशस्त्रकः ॥
शलाकापिहितास्यश्च शस्त्रकोशः सुसंचयः ॥ ३४ ॥
जलौकसस्तु सुखिना रक्तस्रावाय योजयेत् ॥ ३५ ॥
दुष्टाम्बुमत्स्यभेकाहिशवकोऽथ मलोद्भवाः ॥
रक्ता श्वेता भृशं कृष्णाश्चपलाः स्थूलपिच्छिलाः ॥ ३६ ॥
इन्द्रायुधविचित्रोर्ध्वराजयो रोमशाश्च ताः ॥
सविषा वर्जयेत्ताभिः कण्डूपाकज्वरभ्रमाः ॥ ३७ ॥

विषपित्तास्त्रनुत्कार्य तत्र शुद्धाम्बुजा पुन. ॥
निर्विषाः शैवलश्यावा वृत्ता नीलोर्ध्वराजय' ॥ ३८॥
कषायपृष्ठास्तन्वग्य. किञ्चित्पीतोदराश्च या. ॥
ता अप्यसम्यग्वमनात्प्रतत च निपातनात् ॥ ३९ ॥
सीदन्ती. सलिलं प्राप्य रक्तमत्ता इति त्यजेत् ॥
अथेतरा निशाकल्कयुक्तेऽम्भसि परिप्लुता' ॥ ४० ॥
अवन्तिसोमे तक्रे वा पुनश्चाश्वासिता जले ॥
लागयेद्धृतमृत्स्नाङ्गशस्त्ररक्तनिपातने ॥ ४१ ॥
पिबन्तीरुन्नतस्कधाञ्छादयेन्मृदुवाससा ॥
सम्पृक्ताद्दुष्टशुद्धास्त्राज्जलौका दुष्टशोणितम् ॥ ४२ ॥
आदत्ते प्रथम हस क्षीर क्षीरोदकादिव ॥
दंशस्य तोदे कण्डूा वा मोक्षयेद्वामयेच्च ताम् ॥४३॥
पटुतैलाक्तवदना श्लक्ष्णकण्डनरूक्षिताम् ॥
रक्षन्नक्तमदाद्भूय सप्ताह ता न पातयेत् ॥ ४४ ॥
पूर्ववत्पटुता दार्ढ्यं सम्यग्वान्ते जलौकसाम् ॥
क्लमोऽतियोगान्मृत्युर्वा दुर्वान्ते स्तब्धता मद ॥ ४५ ॥
अन्यत्रान्यत्र ता. स्थाप्या घटे मृत्स्नाम्बुगर्भिणी ॥
लालादिकोथनाशार्थं सविषा स्युस्तदन्वयात् ॥ ४६ ॥
अशुद्धौ स्रावयेद्दशान्हरिद्रागुडमाक्षिकै. ॥
शतधौताज्यपिचवस्ततो लेपाश्च शीतलाः ॥ ४७ ॥
दुष्टरक्तापगमनात्सद्योरोगरुजां शम. ॥
अशुद्धं चलित स्थानात्स्थित रक्त व्रणाशये ॥ ४८ ॥

अम्लीभवेत्पर्युषितं तस्मात्तत्स्रावयेत्पुनः ॥
युञ्ज्यान्नालाबुघटिका रक्ते पित्तेन दूषिते ॥ ४९ ॥
तासामनलसंयोगाद्युञ्ज्याच्च कफवायुना ॥
कफेन दुष्टं रुधिरं न शृङ्गेण विनिर्हरेत् ॥ ५० ॥
स्कन्नत्वाद्वातपित्ताभ्यां दुष्टं शृङ्गेण निर्हरेत् ॥
गात्रं बद्ध्वोपरि दृढं रज्ज्वा पट्टेन वा समम् ॥ ५१ ॥
स्नायुसन्ध्यस्थिमर्माणि त्यजन्प्रच्छानमाचरेत् ॥
अधोदेशप्रविसृतैः पदैरुपरिगामिभिः ॥ ५२ ॥
न गाढघनतिर्यग्भिर्न पदे पदमाचरेत् ॥
प्रच्छानेनैकदेशस्थं ग्रथितं जलजन्मभिः ॥ ५३ ॥
हरेच्छृङ्गादिभिः सुप्तमसृग्व्यापि शिराव्यधैः ॥
प्रच्छानं पिण्डिते वा स्यादवगाढे जलौकसः ॥५४॥
त्वक्स्थेऽलाबुघटीशृङ्गं शिरैव व्यापकेऽसृजि ॥
वातादिधाम वा शृङ्गजलौकोलाबुभिः क्रमात्॥५५॥
स्रुतासृजः प्रदेहाद्यैः शीतैः स्याद्वायुकोपतः ॥
सतोदकण्डूशोफस्तं सर्पिषोष्णेन सेचयेत् ॥ ५६ ॥

इत्यष्टाङ्गहृदयसंहितायां सूत्रस्थाने षड्विंशोऽध्यायः ॥ २६ ॥

## सप्तविंशोऽध्यायः ।

अथातः शिराव्यधविधिमध्यायं व्याख्यास्यामः ।
मधुरं लवणं किंचिदशीतोष्णमसंहतम् ॥
पद्मेन्द्रगोपहेमाविशशलोहितलोहितम् ॥ १ ॥

लोहितं प्रवदेच्छुद्धं तनोस्तेनैव च स्थितिः ॥
तत्पित्तश्लेष्मलै' प्रायो दूष्यते कुरुते तत ॥ २ ॥
विसर्पविद्रधिप्लीहगुल्माग्निसदनज्वरान् ॥
मुखनेत्रशिरोरोगमदतृड्लवणास्यता. ॥ ३ ॥
कुष्ठवातास्रपित्तास्रकट्वम्लोद्गीरणभ्रमान् ॥
शीतोष्णस्निग्धरूक्षाद्यैरुपक्रान्ताश्च ये गदा' ॥ ४ ॥
सम्यक् साध्या न सिध्यन्ति ते च रक्तप्रकोपजा' ॥
तेषु स्रावयितुं रक्तमुद्रिक्त व्यधयेच्छिराम् ॥ ५ ॥
न नूनषोडशातीतसप्तत्यब्दस्रुतासृजाम् ॥
अस्निग्धास्वेदितात्यर्थस्वेदितानिलरोगिणाम् ॥ ६ ॥
गर्भिणीसूतिकाजीर्णपित्तास्रश्वासकासिनाम् ॥
अतीसारोदरच्छर्दिपाण्डुसर्वाङ्गशोफिनाम् ॥ ७ ॥
स्नेहपीते प्रयुक्तेषु तथा पञ्चसु कर्मसु ॥
नायन्त्रितां शिरा विध्येन्नतिर्यङ्नाप्यनुत्थिताम् ॥ ८ ॥
नातिशीतोष्णवाताभ्रेष्वन्यत्रात्ययिकाद्गदात् ॥
शिरोनेत्रविकारेषु ललाट्या मोक्षयेच्छिराम् ॥ ९ ॥
अपांग्यामुपनास्या वा कर्णरोगेषु कर्णजाम् ॥
नासारोगेषु नासाग्रे स्थिता नासाललाटयो ॥ १० ॥
पीनसे मुखरोगेषु जिह्वौष्ठहनुतालुगाः ॥
जत्रूर्ध्व ग्रन्थिषु ग्रीवाकर्णशङ्खशिर श्रिता ॥ ११ ॥
उरोऽपागललाटस्था उन्मादेऽपस्मृतौ पुन ॥
हनुसन्धौ समस्ते वा शिरा भ्रूमध्यगामिनीम् ॥ १२ ॥

विद्रधौ पार्श्वशूले च पार्श्वकक्षास्तनान्तरे ॥
तृतीयकेंऽसयोर्मध्ये स्कन्धस्याधश्चतुर्थके ॥ १३ ॥
प्रवाहिकायां शूलिन्यां श्रोणितो द्व्यंगुले स्थिताम् ॥
शुक्रमेढ्रामये मेढ्रे ऊरुगां गलगण्डयोः ॥ १४ ॥
गृध्रस्यां जानुनोऽधस्तादूर्ध्वं वा चतुरंगुले ॥
इन्द्रबस्तेरधोऽपच्यां द्व्यंगुले चतुरंगुले ॥ १५ ॥
ऊर्ध्वंगुल्फस्य सक्थ्यर्त्तौ तथा क्रोष्टुकशीर्षके ॥
पाददाहे खुडे हर्षे विपाद्यां वातकण्टके ॥ १६ ॥
चिप्ये च द्व्यंगुले विध्येदुपरि क्षिप्रमर्मणः
गृध्रस्यामिव विश्वाच्यां यथोक्तानामदर्शने ॥ १७ ॥
मर्महीने यथासन्ने देशेऽन्यां व्यधयेच्छिराम् ॥
अथ स्निग्धतनुः सज्जसर्वोपकरणो बली ॥ १८ ॥
कृतस्वस्त्ययनः स्निग्धरसान्नप्रतिभोजितः ॥
अग्नितापातपस्विन्नो जानूच्चासनसंस्थितः ॥ १९ ॥
मृदुपट्टात्तकेशान्तो जानुस्थापितकूर्परः ॥
मुष्टिभ्यां वस्त्रगर्भाभ्यां मन्ये गाढं निपीडयेत् ॥ २० ॥
दन्तप्रपीडनोत्कासगण्डाध्मानानि चाचरेत् ॥
पृष्ठतो यन्त्रयेच्चैनं वस्त्रमावेष्टयन्नरः ॥ २१ ॥
कन्धरायां परिक्षिप्य न्यस्यान्तर्वामतर्जनीम् ॥
एषोऽन्तर्मुखवर्ज्यानां शिराणां यन्त्रणे विधिः ॥ २२ ॥
तथा मध्यमयांगुल्या वैद्योऽङ्गुष्ठविमुक्तया ॥
ताडयेदुत्थितां ज्ञात्वा स्पर्शाङ्गुष्ठप्रपीडनैः ॥ २३ ॥

कुठार्या लक्षयेन्मध्ये वामहस्तगृहीतया ॥
फलोद्देशे सुनिष्कम्प शिरा तद्वच्च मोक्षयेत् ॥ २४ ॥
ताडयन्पीडयेच्चैना विध्येद्व्रीहिमुखेन तु ॥
अंगुष्ठेनोन्नमय्याग्रे नासिकामुपनासिकाम् ॥ २५ ॥
अभ्युन्नतविदष्टाग्रजिह्वास्याधस्तदाश्रयाम् ॥
यन्त्रयेत्स्तनयोरूर्ध्वं ग्रीवाश्रितशिराव्यधे ॥ २६ ॥
पाषाणगर्भहस्तस्य जानुस्थे प्रसृते भुजे ॥
कुक्षेरारभ्य मृदिते विध्येद्वद्धोर्ध्वपट्टके ॥ २७ ॥
विध्येद्धस्तशिरा वाहावनाकुञ्चितकूर्परे ॥
वद्ध्वा सुखोपविष्टस्य मुष्टिमगुष्ठगर्भिणीम् ॥ २८ ॥
ऊर्ध्वं वेध्यप्रदेशाच्च पट्टिकां चतुरङ्गुले ॥
विध्येदालम्बमानस्य वाहुभ्या पार्श्वयो॰ शिराम् ॥२९॥
प्रहृष्टे मेहने जघाशिरां जानुन्यकुञ्चिते ॥
पादे तु सुस्थितेऽधस्ताज्जानुसन्धेर्निपीडिते ॥ ३० ॥
गाढ कराभ्यामागुल्फ चरणे तस्य चोपरि ॥
द्वितीये कुञ्चिते किञ्चिदारूढे हस्तवत्ततः ॥ ३१ ॥
वद्ध्वा विध्येच्छिरामित्थमनुक्तेष्वपि कल्पयेत् ॥
तेषु तेषु प्रदेशेषु तत्तद्यन्त्रमुपायवित् ॥ ३२ ॥
मासले निक्षिपेद्देशे व्रीह्यास्य व्रीहिमात्रकम् ॥
यवार्द्धमस्थ्नामुपरि शिरा विध्यन्कुठारिकाम् ॥ ३३ ॥
सम्यग्विद्धेस्त्रवेद्धारा यन्त्रे मुक्ते तु न स्त्रवेत् ॥
अल्पकालं वहत्यल्पं दुर्विद्धा तैलचूर्णनै॰ ॥ ३४ ॥

सशब्दमतिविद्धा तु स्रवेद्दुःखेन धार्यते ॥
भीमूर्च्छायन्त्रशैथिल्यकुण्ठशस्त्रातितृप्तयः ॥ ३५ ॥
क्षामत्ववेगिता स्वेदा रक्तस्याऽस्रुतिहेतवः ॥
असम्यगस्रे स्रवति वेलव्योषनिशानतैः ॥ ३६ ॥
सागारधूमलवणतैलैर्दिह्याच्छिरामुखम् ॥
सम्यक्प्रवृत्ते कोष्णेन तैलेन लवणेन च ॥ ३७ ॥
अग्रे स्रवति दुष्टास्रं कुसुम्भादिव पीतिका ॥
सम्यक्स्रुत्य स्वयं तिष्ठेच्छुद्धं तदिति नाहरेत् ॥ ३८ ॥
यन्त्रं विमुच्य मूर्च्छाया वीजिते व्यजनैः पुनः ॥
स्रावयेन्मूर्च्छति पुनस्त्वपरेद्युस्त्र्यहेऽपि वा ॥ ३९ ॥
वाताच्छ्यावारुणं रूक्षं वेगस्राव्यच्छफेनिलम् ॥
पित्तात्पीतासितं विस्रमस्कंद्यौष्ण्यात्सचन्द्रकम् ॥ ४० ॥
कफात्स्निग्धमसृक्पाण्डु तन्तुमत्पिच्छिलं घनम् ॥
संसृष्टलिङ्गं संसर्गात्त्रिदोषं मलिनाविलम् ॥ ४१ ॥
अशुद्धौ बलिनोऽप्यस्रं न प्रस्थात्स्रावयेत्परम् ॥
अतिस्रुतौ हि मृत्युः स्याद्दारुणा वा चलामयाः ॥ ४२ ॥
तत्राभ्यङ्गरसक्षीररक्तपानानि भेषजम् ॥
स्रुते रक्ते शनैर्यन्त्रमपनीय हिमाम्बुना ॥ ४३ ॥
प्रक्षाल्य तैलप्लोताक्तं बन्धनीयं शिरामुखम् ॥
अशुद्धं स्रावयेद्भूयः सायमह्न्यपरेऽपि वा ॥ ४४ ॥
स्नेहोपस्कृतदेहस्य पक्षाद्वा भृशदूषितम् ॥
किञ्चिद्विशेषे दुष्टास्रे नैव रोगोऽतिवर्त्तते ॥ ४५ ॥

सशेषमप्यतो धार्यं न चातिस्रुतिमाचरेत् ॥
हरेच्छृङ्गादिभिः शेषं प्रसादमथवा नयेत् ॥ ४६ ॥
शीतोपचारपित्तास्रक्रियाशुद्धिविशोषणैः ॥
दुष्टं रक्तमनुद्रिक्तमेवमेव प्रसादयेत् ॥ ४७ ॥
रक्ते त्वतिष्ठति क्षिप्रं स्तम्भनीमाचरेत्क्रियाम् ॥
लोध्रप्रियङ्गुपत्तङ्गमाषयष्ट्याह्वगैरिकैः ॥ ४८ ॥
मृत्कपालाञ्जनक्षौममषीक्षीरीत्वगङ्कुरैः ॥
विचूर्णयेद्व्रणमुखं पद्मकादिहिमं पिबेत् ॥ ४९ ॥
तामेव वा शिरां विध्येद्व्यधात्तस्मादनन्तरम् ॥
शिरामुखं च त्वरितं दहेत्तप्तशलाकया ॥ ५० ॥

उन्मार्गगा यन्त्रनिपीडनेन
स्वस्थानमायान्ति पुनर्न यावत् ॥
दोषाः प्रदुष्टा रुधिरं प्रपन्ना-
स्तावद्धिताहारविहारभाक् स्यात् ॥ ५१ ॥
नात्युष्णशीतं लघु दीपनीयं
रक्तेऽपनीते हितमन्नपानम् ॥
तदा शरीरं ह्यनवस्थितास्र-
मग्निर्विशेषादिति रक्षणीयः ॥ ५२ ॥

प्रसन्नवर्णेन्द्रियमिन्द्रियार्थानिच्छन्तमव्याहतपक्तृवेगम् ॥
सुखान्वितं पुष्टिबलोपपन्नं विशुद्धरक्तं पुरुषं वदन्ति ॥५३॥

इत्यष्टाङ्गहृदयसंहितायां सूत्रस्थाने सप्तविंशोऽध्यायः ॥ २७ ॥

# अष्टाविंशोऽध्यायः ।



अथातः शल्याहरणविधिमध्यायं व्याख्यास्यामः ।

वक्रर्जुतिर्यगूर्ध्वाधः शल्यानां पञ्चधा गतिः ॥
ध्यामं शोफं रुजावन्तं स्रवन्तं शोणितं मुहुः ॥ १ ॥
अभ्युद्गतं बुद्बुदवत्पिटिकोपचितं व्रणम् ॥
मृदुमांसं विजानीयादन्तःशल्यं समासतः ॥ २ ॥
विशेषात्त्वग्गते शल्ये विवर्णः कठिनायतः ॥
शोफो भवति मांसस्थे चोषः शोफो विवर्द्धते ॥ ३ ॥
पीडनाक्षमता पाकः शल्यमार्गो न रोहति ॥
पेश्यन्तरगते मांसप्राप्तवत् श्वयथुं विना ॥ ४ ॥
आक्षेपः स्नायुजालस्य संरम्भस्तम्भवेदनाः ॥
स्नायुगे दुर्हरं चैतच्छिराध्मानं शिराश्रिते ॥ ५ ॥
स्वकर्मगुणहानिः स्यात्स्रोतसां स्रोतसि स्थिते ॥
धमनिस्थेऽनिलो रक्तं फेनयुक्तमुदीरयेत् ॥ ६ ॥
निर्याति शब्दवान्स्याच्च हृल्लासः साङ्गवेदनः ॥
संघर्षो बलवानस्थिसन्धिप्राप्तेऽस्थिपूर्णता ॥ ७ ॥
नैकरूपा रुजोऽस्थिस्थे शोफस्तद्वच्च सन्धिगे ॥
चेष्टानिवृत्तिश्च भवेदाटोपः कोष्ठसंश्रिते ॥ ८ ॥
आनाहोऽन्नशकृन्मूत्रदर्शनं च व्रणानने ॥
विद्यान्मर्मगतं शल्यं मर्मविद्धोपलक्षणैः ॥ ९ ॥

यथास्व च परिस्रावैस्त्वगादिषु विभावयेत् ॥
रुह्यते शुद्धदेहानामनुलोमस्थित तु तत् ॥
दोषकोपाभिघातादिक्षोभाद्भूयोऽपि बाधते ॥ १० ॥
त्वङ्नष्टे यत्र तत्र स्युरभ्यंगस्वेदमर्दनैः ॥
रागरुग्दाहसंरम्भा यत्र चाज्य विलीयते ॥ ११ ॥
आशु शुष्यति लेपो वा तत्स्थानं शल्यवद्वदेत् ॥
मासप्रनष्ट संशुद्ध्या कर्शनाच्छ्लथता गतम् ॥ १२ ॥
क्षोभाद्रागादिभि. शल्य लक्षयेत्तद्वदेव च ॥
पेश्यस्थिसन्धिकोष्ठेषु नष्टमस्थिषु लक्षयेत् ॥ १३ ॥
अस्थ्नामभ्यञ्जनस्वेदबंधपीडनमर्दनै
प्रसारणाकुञ्चनत सधिनष्टं तथास्थिवत् ॥ १४ ॥
नष्टे स्नायुशिरास्रोतोधमनिष्वसमे पथि ॥
अश्वयुक्त रथ खण्डचक्रमारोप्य रोगिणम् ॥ १५ ॥
शीघ्र नयेत्ततस्तस्य संरम्भाच्छल्यमादिशेत् ॥
मर्मनष्टं पृथङ् नोक्त तेषा मासादिसश्रयात् ॥ १६ ॥
सामान्येन सशल्य तु क्षोभिण्या क्रियया सरुक् ॥
वृत्त पृथु चतुष्कोण त्रिपुटं स समासत ॥ १७ ॥
अदृश्यशल्यसस्थान व्रणाकृत्या विभावयेत् ॥
तेषामाहरणोपायौ प्रतिलोमानुलोमकौ ॥ १८ ॥
अर्वाचीनपराचीने निर्हरेत्तद्विपर्ययात् ॥
सुखाहार्य यतश्छित्त्वा ततस्तिर्यग्गत हरेत् ॥ १९ ॥

शल्यं न निर्घात्यमुरःकक्षावङ्क्षणपार्श्वगम् ॥
प्रतिलोममनुत्तुण्डं छेद्यं पृथुमुखं च यत् ॥ २० ॥
नैवाहरेद्विशल्यघ्नं नष्टं वा निरुपद्रवम् ॥
अथाहरेत्करप्राप्यं करेणैवेतरत्पुनः ॥ २१ ॥
दृश्यं सिंहाहिमकरवर्म्मिकर्कटकाननैः ॥
अदृश्यं व्रणसंस्थानाद्ग्रहीतुं शक्यते यतः ॥ २२ ॥
कङ्कभृङ्गाह्वकुररशरारीवायसाननैः ॥
संदंशाभ्यां त्वगादिस्थं तालाभ्यां सुषिरं हरेत् ॥ २३ ॥
सुषिरस्थं तु नलकैः शेषं शेषैर्यथायथम् ॥
शस्त्रेण वा विशस्यादौ ततो निर्लोहितं व्रणम् ॥ २४ ॥
कृत्वा घृतेन संस्वेद्य बद्ध्वाऽऽचारिकमादिशेत् ॥
शिरास्नायुविलग्नं तु चालयित्वा शलाकया ॥ २५ ॥
हृदये संस्थितं शल्यं त्रासितस्य हिमाम्बुना ॥
ततः स्थानान्तरं प्राप्तमाहरेत्तद्यथायथम् ॥ २६ ॥
यथामार्गं दुराकर्षमन्यतोऽप्येवमाहरेत् ॥
अस्थिदष्टे नरं पद्भ्यां पीडयित्वा विनिर्हरेत् ॥ २७ ।
इत्यशक्ये सुबलिभिः सुगृहीतस्य किङ्करैः ॥
तथाप्यशक्ये वारङ्गं वक्रीकृत्य धनुर्ज्यया ॥ २८ ।
सुबद्धं वक्रकटके बध्नीयात्सुसमाहितः ॥
सुसंयतस्य पञ्चाङ्ग्या वाजिनः कशयाथ तम् ॥ २९ ॥
ताडयेदिति मूर्द्धानं वेगेनोन्नमयन्यथा ॥
उद्धरेच्छल्यमेवं वा शाखायां कल्पयेत्तरोः ॥ ३० ॥

वद्ध्वा दुर्बलवारङ्गं कुशाभिः शल्यमाहरेत् ॥
श्वयथुग्रस्तवारङ्गं शोफमुत्पीड्य युक्तित ॥ ३१ ॥
मुद्गराहतया नाड्या निर्घात्योत्तुडित हरेत् ॥
तैरेव चानयेन्मार्गममार्गोत्तुडित तु यत् ॥ ३२ ॥
मृदित्वा कर्णिना कर्ण नाड्यास्येन निगृह्य वा ॥
अयस्कांतेन निष्कर्ण विवृतास्यमृजुस्थितम् ॥ ३३ ॥
पक्काशयगत शल्यं विरेकेण विनिर्हरेत् ॥
दुष्टवातविषस्तन्यरक्ततोयादि चूषणै. ॥ ३४ ॥
कण्ठस्रोतोगते शल्ये सूत्रं कण्ठे प्रवेशयेत् ॥
विसेनाक्ते तत शल्ये विस सूत्र सम हरेत् ॥ ३५ ॥
नाड्याग्नितापिता क्षिप्त्वा शलाकामप्स्थिरीकृताम् ॥
आनयेज्जातुष कठाजतुदिग्धामजातुषम् ॥ ३६ ॥
केशोन्दुकेन पीतेन द्रवै कटकमाक्षिपेत् ॥
सहसा सूत्रवद्धेन वमतस्तेन चेतरत् ॥ ३७ ॥
अशक्य मुखनासाभ्यामाहर्तुं परतो नुदेत् ॥
अप्पानस्कन्धघाताभ्यां ग्रासशल्यं प्रवेशयेत् ॥ ३८ ॥
सूक्ष्माक्षिव्रणशल्यानि क्षौमवालजलैर्हरेत् ॥
अपा पूर्णं विधुनुयादर्वाक्शिरसमायतम् ॥ ३९ ॥
वामयेद्वाऽऽमुख भस्मराशौ वा निखनेन्नरम् ॥
कर्णेऽम्बुपूर्णे हस्तेन मथित्वा तैलवारिणी ॥ ४० ॥
क्षिपेदधोमुख कर्णं हन्याद्वा चूषयेत वा ॥
कीटे स्रोतोगते कर्णं पूरयेल्लवणाम्बुना ॥ ४१ ॥

शुक्तेन वा सुखोष्णेन सृते क्लेदहरो विधिः ॥
जातुषं हेमरूप्यादिधातुजं च चिरास्थितम् ॥ ४२ ॥
ऊष्मणा प्रायशः शल्यं देहजेन विलीयते ॥
मृद्वेणुदारुशृङ्गास्थिदन्तवालोपलानि च ॥ ४३ ॥
शल्यानि न विशीर्यन्ते शरीरे मृन्मयानि वा ॥
विषाणवेणवयस्तालदारुशल्यं चिरादपि ४४ ॥
प्रायो निर्भुज्यते तद्धि पचत्याशु पलासृजी ॥
शल्ये मांसावगाढे च स देशो न विदह्यते ॥ ४५ ॥
ततस्तं मर्दनस्वेदशुद्धिकर्षणबृंहणैः ॥
तीक्ष्णोपनाहपानान्नघनशस्त्रपदाङ्कनैः ॥ ४६ ॥
पाचयित्वा हरेच्छल्यं पाटनैषणभेदनैः ॥
शल्यप्रदेशयन्त्राणामवेक्ष्य बहुरूपताम् ॥
तैस्तैरुपायैर्मतिमान् शल्यं विद्यात्तथा हरेत् ॥ ४७ ॥

इत्यष्टाङ्गहृदयसंहितायां सूत्रस्थानेऽष्टाविंशोऽध्यायः ॥ २८ ॥

## एकोनत्रिंशोऽध्यायः ।

अथातः शस्त्रकर्मविधिमध्यायं व्याख्यास्यामः ।
व्रणः सञ्जायते प्रायः पाकात् श्वयथुपूर्वकात् ॥
तमेवोपचरेत्तस्माद्रक्षन् पाकं प्रयत्नतः ॥ १ ॥
सुशीतलेपसेकास्रमोक्षसंशोधनादिभिः ॥
शोफोल्पोल्पोष्णरुक्सामः सवर्णः कठिनः स्थिरः ॥ २ ॥

पच्यमानो विवर्णस्तु रागी वस्तिरिवाततः ॥
स्फुटतीव सनिस्तोदः साङ्गमर्दविजृम्भिकः ॥ ३ ॥
संरम्भारुचिदाहोषातृड्ज्वरानिद्रतान्वित ॥
स्त्यान विष्यन्दयत्याज्यं व्रणवत्स्पर्शनासह ॥ ४ ॥
पक्केऽल्पवेगता ग्लानिः पाण्डुता वलिसम्भवः ॥
नामोऽतेषून्नतिर्मध्ये कण्डूशोफादिमार्दवम् ॥ ५ ॥
स्पृष्टे पूयस्य सञ्चारो भवेद्वस्ताविवाम्भसः ॥
शूल नर्तेऽनिलाद्दाह पित्ताच्छोफ कफोदयात् ॥ ६ ॥
रागो रक्ताच्च पाक स्यादतो दोषै सशोणितै ॥
पाकेऽतिवृत्ते सुषिरस्तनुत्वग्दोषभक्षित ॥ ७ ॥
वलीभिराचित श्यावः शीर्यमाणतनूरुह ॥
कफजेषु तु शोफेषु गम्भीर पाकमेत्यसृक् ॥ ८ ॥
पक्वलिङ्ग ततोऽस्पष्ट यत्र स्याच्छीतशोफता ॥
त्वक्सावर्ण्यं रुजोऽल्पत्व घनस्पर्शत्वमश्मवत् ॥ ९ ॥
रक्तपाकमिति ब्रूयात्त प्राज्ञो मुक्तसशय ॥
अल्पसत्त्वेऽबले बाले पाके चात्यर्थमुद्धते ॥ १० ॥
दारण मर्मसन्ध्यादिस्थिते चान्यत्र पाटनम् ॥
आमच्छेदे शिरास्नायुव्यापदोऽसृगतिस्रुति ॥ ११ ॥
रुजोऽतिवृद्धिर्दरण विसर्पो वा क्षतोद्भव ॥
तिष्ठन्नन्त पुन पूय शिरास्नाय्वसृगामिषम् ॥ १२ ॥
विवृद्धो दहति क्षिप्र तृणोलपामिवानल ॥
यश्छिनत्त्याममज्ञानाद्यश्च पक्वमुपेक्षते ॥ १३ ॥

श्वपचाविव विज्ञेयौ तावनिश्चितकारिणौ ॥
प्राक्शस्त्रकर्मणश्चेष्टं भोजयेदन्नमातुरम् ॥ १४ ॥
पानपं पाययेन्मद्यं तीक्ष्णं यो वेदनाक्षमः ॥
न मूर्च्छत्यन्नसंयोगान्मत्तः शस्त्रं न बुध्यते ॥ १५ ॥
अन्यत्र मूढगर्भाश्ममुखरोगोदरातुरात् ॥
अथाहृतोपकरणं वैद्यः प्राङ्मुखमातुरम् ॥ १६ ॥
सम्मुखो यन्त्रयित्वाशु न्यस्येन्मर्मादि वर्जयन् ॥
अनुलोमं सुनिशितं शस्त्रमापूयदर्शनात् ॥ १७ ॥
सकृदेवाहरेत्तच्च, पाके तु सुमहत्यपि ॥
पाटयेद् द्व्यंगुलं सम्यग्द्व्यंगुलत्र्यंगुलांतरम् ॥ १८ ॥
एषित्वा सम्यगेषिण्या परितः सुनिरूपितम् ॥
अंगुलीनालवालैर्वा यथादेशं यथाशयम् ॥ १९ ॥
यतो गतां गतिं विद्यादुत्सङ्गो यत्र यत्र च ॥
तत्र तत्र व्रणं कुर्यात्सुविभक्तं निराशयम् ॥ २० ॥
आयतं च विशालं च यथा दोषो न तिष्ठति ॥
शौर्यमाशुक्रिया तीक्ष्णं शस्त्रमस्वेदवेपथुः ॥ २१ ॥
असंमोहश्च वैद्यस्य शस्त्रकर्मणि शस्यते ॥
तिर्यक्छिन्द्याल्ललाटभ्रूदन्तवेष्टकजत्रुणि ॥ २२ ॥
कुक्षिकक्षाक्षिकूटौष्ठकपोलगलवङ्क्षणे ॥
अन्यत्रच्छेदनात्तिर्यक् शिरास्नायुविपाटनम् ॥ २३ ॥
शस्त्रेऽवचारिते वाग्भिः शीताम्भोभिश्च रोगिणम् ॥
आश्वास्य परितोऽङ्गुल्या परिपीड्य व्रणं ततः ॥ २४ ॥

क्षालयित्वा कषायेण प्लोतेनाम्भोऽपनीय च ॥
गुग्गुल्वगुरुसिद्धार्थहिंगुसर्जरसान्वितै. ॥ २५ ॥
धूपयेत्पटुषड्ग्रन्थानिम्बपत्रैर्घृतप्लुतैः ॥
तिलकल्काज्यमधुभिर्यथास्वं भेषजेन च ॥ २६ ॥
दिग्धा वर्तिं ततो दद्यात्तैरेवाच्छादयेच्च तम् ॥
घृताक्तैः सक्तुभिश्चोर्द्धं घना कवलिकां तत. ॥ २७ ॥
निधाय युक्त्या बध्नीयात् पट्टेन सुसमाहितम् ॥
पार्श्वे सव्येऽपसव्ये वा नाधस्तान्नैव चोपरि ॥ २८ ॥
शुचिसूक्ष्मदृढाः पट्टा कवल्य. सविकेशिका. ॥
धूपिता मृदव श्लक्ष्णा निर्वलीका व्रणे हिताः ॥ २९ ॥
कुर्वीतानन्तरं तस्य रक्षां रक्षोनिषिद्धये ॥
वलिं चोपहरेत्तेभ्य सदा मूर्ध्नावधारयेत् ॥ ३० ॥
लक्ष्मीं गुहामतिगुहां जटिलां ब्रह्मचारिणीम् ॥
वचां छत्रामतिच्छत्रां दूर्वां सिद्धार्थकानपि ॥ ३१ ॥
ततः स्नेहदिनेहोक्त तस्याचार समादिशेत् ॥
दिवास्वप्नो व्रणे कण्डूरागरुक्शोफपूयकृत् ॥ ३२ ॥
स्त्रीणान्तु स्मृतिसंस्पर्शदर्शनैश्चलितस्रुते ॥
शुक्रे व्यवायजान्दोषानसंसर्गेऽप्यवाप्नुयात् ॥ ३३ ॥
भोजनं तु यथासात्म्य यवगोधूमषाष्टिकाः ॥
मसूरमुद्गतुवरीजीवन्तीसुनिषण्णका ॥ ३४ ॥
बालमूलकवार्त्ताकतण्डूलीयकवास्तुकम् ॥
कारवेल्लककर्कोटपटोलकटुकाफलम् ॥ ३५ ॥

सैन्धवं दाडिमं धात्री घृतं तप्तहिमं जलम् ॥
जीर्णशाल्योदनं स्निग्धमल्पमुष्णं द्रवोत्तरम् ॥ ३६ ॥
भुञ्जानो जाङ्गलैर्मांसैः शीघ्रं व्रणमपोहति ॥
अशितं मात्रया काले पथ्यं याति जरां सुखम् ॥ ३७ ॥
अजीर्णे त्वनिलादीनां विभ्रमो बलवान्भवेत् ॥
ततः शोफरुजापाकदाहानाहानवाप्नुयात् ॥ ३८ ॥
नवधान्यं तिलान्माषान् मद्यं मांसं त्वजाङ्गलम् ॥
क्षीरेक्षुविकृतीरम्लं लवणं कटुकं त्यजेत् ॥ ३९ ॥
यच्चान्यदपि विष्टम्भि विदाहि गुरु शीतलम् ॥
वर्गोऽयं नवधान्यादिर्व्रणिनः सर्वदोषकृत् ॥ ४० ॥
मद्यं तीक्ष्णोष्णरूक्षाम्लमाशु व्यापादयेद्व्रणम् ॥
वालोशीरैश्च वीज्येत न चैनं परिघट्टयेत् ॥ ४१ ॥
न तुदेन्न च कंडूयेच्चेष्टमानश्च पालयेत् ॥
स्निग्धवृद्धद्विजातीनां कथाः शृण्वन् मनःप्रियाः॥ ४२ ॥
आशावान्व्याधिमोक्षाय क्षिप्रं व्रणमपोहति ॥
तृतीयेऽह्नि पुनः कुर्याद्व्रणकर्म च पूर्ववत् ॥ ४३ ॥
प्रक्षालनादि दिवसे द्वितीये नाचरेत्तथा ॥
तीव्रव्यथो विग्रथितश्चिरात्संरोहति व्रणः ॥ ४४ ॥
स्निग्धा रूक्षां श्लथां गाढां दुर्न्यस्तांश्च विकेशिकाम् ॥
व्रणे न दद्यात्कल्कञ्च, स्नेहात्क्लेदो विवर्द्धते ॥ ४५ ॥
मांसच्छेदोऽतिरुग्रौक्ष्याद्दरणं शोणितागमः ॥
श्लथातिगाढदुर्न्यासैर्व्रणवर्त्मावघर्षणम् ॥ ४६ ॥

सपूतिमांसं सोत्सगं सगतिं पूयगर्भिणम् ॥
व्रणं विशोधयेच्छीघ्रं स्थिता ह्यन्तर्विकेशिका ॥ ४७ ॥
व्यम्लन्तु पाटितं शोफं पाचनैः समुपाचरेत् ॥
भोजनैरुपनाहैश्च नातिव्रणविरोधिभिः ॥ ४८ ॥
सद्यः सद्योव्रणान् सीव्येद्विवृत्तानभिघातजान् ॥
मेदोजान् लिखितान् ग्रन्थीन् ह्रस्वाः पालीश्च कर्णयोः॥४९॥
शिरोऽक्षिकूटनासौष्ठगण्डकर्णोरुबाहुषु ॥
ग्रीवाललाटमुष्कस्फिङ्मेढ्रपायूदरादिषु ॥ ५० ॥
गम्भीरेषु प्रदेशेषु मांसलेष्वचलेषु च ॥
न तु वङ्क्षणकक्षादावल्पमांसचले व्रणान् ॥ ५१ ॥
वायुनिर्वाहिणः शल्यगर्भान् क्षारविषाग्निजान् ॥
सीव्येच्चलास्थिशुष्कास्रतृणरोमापनीय तु ॥ ५२ ॥
प्रलम्बि मांसं विच्छिन्नं निवेश्य स्वनिवेशने ॥
सन्ध्यस्थ्यवस्थिते रक्ते स्नाय्वा सूत्रेण वल्कलैः ॥ ५३ ॥
सीव्येन्न दूरे नासन्ने गृह्णन्नाल्पं न वा बहु ॥
सान्त्वयित्वा ततश्चार्त्तं व्रणे मधुघृतद्रुतैः ॥ ५४ ॥
अञ्जनक्षौमजमषीफलिनीशल्लकीफलैः ॥
सलोध्रमधुकैर्दिग्धे युञ्ज्याद्बन्धादि पूर्ववत् ॥ ५५ ॥
व्रणो निःशोणितौष्ठो यः किञ्चिदेवावलिख्यतम् ॥
सञ्जातरुधिरं सीव्येत्सन्धानं ह्यस्य शोणितम् ॥ ५६ ॥
बन्धनानि तु देशादीन् वीक्ष्य युञ्जीत तेषु च ॥
आविकाजिनकौशेयमुष्णं क्षौमं तु शीतलम् ॥ ५७ ॥

शीतोष्णं तूलसन्तानकार्पासस्नायुवल्कजम् ॥
ताम्रायस्त्रपुसीसानि व्रणे मेदःकफाधिके ॥ ५८ ॥
भङ्गे च युञ्ज्यात्फलकं चर्मवल्ककुशादि च ॥
स्वनामानुगताकारा बन्धास्तु दश पञ्च च ॥ ५९ ॥
कोशस्वतिकमुत्तोलीचीनदामानुवेल्लितम् ॥
खट्वाविबन्धस्थविकावितानोत्सङ्गगोफणाः ॥ ६० ॥
यमकं मण्डलाख्यं च पंचाङ्गी चेति योजयेत् ॥
यो यत्र सुनिविष्टः स्यात्तं तेषां तत्र बुद्धिमान् ॥
बध्नीयाद्गाढमूरुस्फिक्कक्षावङ्क्षणमूर्द्धसु ॥
शाखावदनकर्णोरःपृष्ठपार्श्वगलोदरे ॥ ६२ ॥
समं मेहनमुष्के च नेत्रे सन्धिषु च श्लथम् ॥
बध्नीयाच्छिथिलस्थाने वातश्लेष्मोद्भवे समम् ॥ ६३ ॥
गाढमेव समस्थाने भृशं गाढं तदाश्रये ॥
शीते वसन्ते च तथा मोक्षणीयौ त्र्यहात्त्र्यहात् ॥ ६४ ॥
पित्तरक्तोत्थयोर्बन्धो गाढस्थाने समो मतः ॥
समस्थाने श्लथो नैव शिथिलस्याशये तथा ॥ ६५ ॥
सायं प्रातस्तयोर्मोक्षो ग्रीष्मे शरदि चेष्यते ॥
अबद्धो दंशमशकशीतवातादिपीडितः ॥ ६६ ॥
दुष्टीभवेच्चिरं चात्र न तिष्ठेत्स्नेहभेषजम् ॥
कृच्छ्रेण शुद्धिं रूढिं वा याति रूढो विवर्णताम् ॥ ६७ ॥
बद्धस्तु चूर्णितो भग्नो विश्लिष्टः पाटितोऽपि वा ॥
छिन्नस्नायुशिरोऽप्याशु सुखं संरोहति व्रणः ॥ ६८ ॥

उत्थानशयनाद्यासु सर्वेहासु न पीडयेत् ॥
उद्धृतौष्ठ समुत्पन्नोविषमः कठिनोऽतिरुक् ॥ ६९ ॥
समोमृदुररुक् शीघ्र व्रणः शुद्ध्यति रोहति ॥
स्थिराणामल्पमासाना रौक्ष्यादनुपरोहताम् ॥ ७० ॥
प्रच्छाद्यमौषध पत्रैर्यथादोष यथर्तु च ॥
अजीर्णतरुणाच्छिद्रैः समन्तात्सुनिवेशितै. ॥ ७१ ॥
धौतैरकर्कशैः क्षीरीभूर्जार्जुनकदम्बजैः ॥
कुष्ठिनामग्निदग्धाना पिटिका मधुमेहिनाम् ॥ ७२ ॥
कर्णिकाश्चोन्दुरुविपे क्षारदग्धा विषान्विता ॥
न मासपाके च बध्नीयाद्गुदपाके च दारुणे ॥ ७३ ॥
शीर्यमाणा. सरुग्दाहा शोफावस्थाविसर्पिण ॥
अरक्षया व्रणे यस्मिन् मक्षिका निक्षिपेत् कृमीन् ॥७४॥
ते भक्षयन्त कुर्वन्ति रुजाशोफास्रसस्रवान् ॥ ८
सुरसादि प्रयुञ्जीत तत्र धावनपूरणे ॥ ७५ ॥
सप्तपर्णकरञ्जार्कनिम्बराजादनत्वच ॥
गोमूत्रकल्कितो लेप. सेक क्षाराम्बुना हित ॥ ७६ ॥
प्रच्छाद्य मासपेश्या वा व्रणं तानाशु निर्हरेत् ॥
न चैन त्वरमाणोऽन्त सदोषमुपरोहयेत् ॥ ७७ ॥
सोऽल्पे नाप्यपचारेण भूयो विकुरुते यत ॥
रूढेऽप्यजीर्णव्यायामव्यवायादीन्विवर्जयेत् ॥ ७८ ॥
हर्ष क्रोध भय वापि यावदास्थैर्यसम्भवात् ॥
आदरेणानुवर्त्योऽय मासान् षट् सप्त वा विधि. ॥७९॥

उत्पद्यमानासु च तासु तासु वार्त्तासु दोषादिबलानुसारी ॥
तैस्तैरुपायैःप्रयतश्चिकित्सेदालोचयन्विस्तरमुत्तरोक्तम् ॥८०॥

इत्यष्टाङ्गहृदयसंहितायां सूत्रस्थाने एकोनत्रिंशोऽध्यायः ॥ २९ ॥

## त्रिंशोऽध्यायः ।

अथातः क्षाराग्निकर्मविधिमध्यायं व्याख्यास्यामः ।
सर्वशस्त्रानुशस्त्राणां क्षारः श्रेष्ठो बहूनि यत् ॥
छेद्यभेद्यादिकर्माणि कुरुते विषमेष्वपि ॥ १ ॥
दुःखावचार्यशस्त्रेषु तेन सिद्धिमयात्सु च ॥
अतिकृच्छ्रेषु रोगेषु यच्च पानेऽपि युज्य[ते] ॥ २ ॥
स पेयोऽर्शोऽग्निसादाश्मगुल्मोदरगरादि[षु] ॥
योज्यः साक्षान्मषश्वित्रबाह्यार्शःकुष्ठसुप्तिषु ॥ ३ ॥
भगन्दरार्बुदग्रन्थिदुष्टनाडीव्रणादिषु ॥
न तूभयोऽपि योक्तव्यः पित्ते रक्ते बलेऽबले ॥ ४ ॥
ज्वरेऽतिसारे हृन्मूर्द्धरोगे पाण्ड्वामयेऽरुचौ ॥
तिमिरे कृतसंशुद्धौ श्वयथौ सर्वगात्रगे ॥ ५ ॥
भीरुगर्भिण्यृतुमती प्रोद्वृत्तफलयोनिषु ॥
अजीर्णेऽन्ने शिशौ वृद्धे धमनीसन्धिमर्मसु ॥ ६ ॥
तरुणास्थिशिरास्नायुसेवनीगलनाभिषु ॥
देशेऽल्पमांसे वृषणमेढ्रस्रोतो नखान्तरे ॥ ७ ॥

वर्त्मरोगादृतेऽक्ष्णोश्च शीतवर्षोष्णदुर्दिने ॥
कालमुष्ककशम्याककदलीपारिभद्रकान् ॥ ८ ॥
अश्वकर्णमहावृक्षपलाशास्फोतवृक्षकान् ॥
इन्द्रवृक्षार्कपूतीकनक्तमालाश्वमारकान् ॥ ९ ॥
काकजङ्घामपामार्गमग्निमन्थाग्नितिल्वकान् ॥
स्वार्द्रान्समूलशाखादीन्खण्डशः परिकल्पितान् ॥ १० ॥
कोशातकीश्चतस्रश्च शूकनाल यवस्य च ॥
निवाते निचयीकृत्य पृथक्तानि शिलातले ॥ ११ ॥
प्रक्षिप्य मुष्ककचये सुधाश्मानि च दीपयेत् ॥
ततस्तिलानां कुन्तालैर्दग्ध्वाऽग्नौ विगते पृथक् ॥ १२ ॥
कृत्वा सुधाश्मना भस्म द्रोणं त्वितरभस्मन. ॥
मुष्ककोत्तरमादाय प्रत्येक जलमूत्रयो ॥ १३ ॥
गालयेदर्द्धभारेण महता वाससा च तत् ॥
यावत्पिच्छिलरक्ताच्छस्तीक्ष्णो जातस्तदा च तम् ॥१४॥
गृहीत्वा क्षारनिस्यन्द पचेल्लौह्या विघट्टयन् ॥
पच्यमाने ततस्तस्मिस्ता सुधाभस्मशर्करा ॥ १५ ॥
शुक्तिक्षारपङ्कगङ्कनाभीश्चायसभाजने ॥
कृत्वाग्निवर्णान्बहुश. क्षारोत्थे कुडवोन्मिते ॥ १६ ॥
निर्वाप्य पिष्ट्वा तेनैव प्रतीवाप विनिक्षिपेत् ॥
श्लक्ष्ण शकृद्दक्षशिखिगृध्रकङ्ककपोतजम् ॥ १७ ॥
चतुष्पात्पक्षिपित्तालमनोह्वालवणानि च ॥
परितः सुतरा चातो दर्व्यातमवघट्टयेत् ॥ १८ ॥

सबाष्पैश्च यदोत्तिष्ठेद्बुद्बुदैर्लेहवद्धनः ॥
अवतार्य ततः शीतो यवराशावयोमये ॥ १९ ॥
स्थाप्योऽयं मध्यमः क्षारो न तु पिष्ट्वा क्षिपेन्मृदौ
निर्वाप्यापनयेत्तीक्ष्णे पूर्ववत्प्रतिवापनम् ॥ २० ॥
तथा लाङ्गलिकादन्तिचित्रकातिविषावचाः ॥
स्वर्जिकाकनकाक्षीरिहिंगुपूतीकपल्लवाः ॥ २१ ॥
तालपत्री विडश्चेति सप्तरात्रात्परन्तु सः ॥
योज्यस्तीक्ष्णोऽनिलश्लेष्ममेदोजेष्वर्बुदादिषु ॥ २२ ॥
मध्येष्वेव च मध्योऽन्यः पित्तास्रगुदजन्मसु ॥
बलार्थं क्षीणपानीये क्षाराम्बु पुनरावपेत् ॥ २३ ॥
नातितीक्ष्णो मृदुः श्लक्ष्णः पिच्छिलः शीघ्रगः सितः ॥
शिखरी सुखनिर्वाप्यो न विष्यन्दी न चातिरुक् ॥२४॥
क्षारो दशगुणः शस्त्रतेजसोरपि कर्मकृत् ॥
आचूषन्निव संरम्भाद्गात्रमापीडयन्निव ॥ २५ ॥
सर्वतोऽनुसरन्दोषानुन्मूलयति मूलतः ॥
कर्म कृत्वा गतरुजः स्वयमेवोपशाम्यति ॥ २६ ॥
क्षारसाध्ये गदे छिन्ने लिखिते स्राविते ऽथवा ॥
क्षारं शलाकया दत्त्वा प्लोतमावृतदेहया ॥ २७ ॥
मात्राशतमुपेक्षेत तत्रार्शःस्वावृताननम् ॥
हस्तेन यन्त्रं कुर्वीत वर्त्मरोगेषु वर्त्मनी ॥ २८ ॥
निर्भुज्य पिचुनाच्छाद्य कृष्णभागं विनिक्षिपेत् ॥
पद्मपत्रतनुः क्षारलेपो घ्राणार्बुदेषु च ॥ २९ ॥

प्रत्यादित्य निषण्णस्य समुन्नम्याग्रनासिकाम् ॥
मात्रा विधार्य' पश्चाशत्तद्ददर्शांसि कर्णजे ॥ ३० ॥
क्षार प्रमार्ज्जनेनानु परिमृज्यावगम्य च ॥
सुदग्ध घृतमध्वक्त तत्पयोमस्तुकाञ्जिकै' ॥ ३१ ॥
निर्वापयेत्ततः साज्यै' स्वादुशीतै. प्रदेहयेत् ॥
अभिष्यन्दीनि भोज्यानि भोज्यानि क्लेदनाय च ॥३२॥
यदि च स्थिरमूलत्वात्क्षारदग्ध न शीर्यते ॥
धान्याम्लवीजयष्ट्याह्वतिलैरालेपयेत्तत. ३३ ॥
तिलकल्क' समधुको घृताक्तो व्रणरोपणः ॥
पक्वजम्बुसितं सन्न सम्यग्दग्धं विपर्य्यये ॥ ३४ ॥
ताम्रतातोदकण्ड्वाद्यैर्दुर्दग्धं तं पुनर्दहेत् ॥
अतिदग्धे स्रवेद्रक्तं मूर्च्छादाहज्वरादय ॥ ३५ ॥
गुदे विशेषाद्विण्मूत्रसरोधोऽतिप्रवर्तनम् ॥
पुंस्त्वोपघातो मृत्युर्वा गुदस्य शातनाद्ध्रुवम् ॥ ३६ ॥
नासाया नासिकावंशदरणाकुञ्चनोद्भव' ॥
भवेच्च विषयाज्ञान तद्वच्छ्रोत्रादिकेष्वपि ॥ ३७ ॥
विशेषादत्र सेकोऽम्लैर्लेपो मधु घृत तिला' ॥
वातपित्तहरा चेष्टा सर्वैव शिशिरा क्रिया ॥ ३८ ॥
अम्लो हि शीत. स्पर्शेन क्षारस्तेनोपसंहित' ॥
यात्याशु स्वादुता तस्मादम्लैर्निर्वापयेत्तराम् ॥ ३९ ॥
अग्नि. क्षारादपि श्रेष्ठस्तद्दग्धानामसम्भवात् ॥
भेषजक्षारशस्त्रैश्च न सिद्धाना प्रसाधनात् ॥ ४० ॥

त्वचि मांसे शिरास्नायुसन्ध्यस्थिषु स युज्यते ॥
मषाङ्गग्लानिमूर्द्धार्त्तिमन्थकीलतिलादिषु ॥ ४१ ॥
त्वग्दाहो वर्त्तिगोदन्तसूर्य्यकान्तशरादिभिः ॥
अर्शोभगन्दरग्रन्थिनाडीदुष्टव्रणादिषु ॥ ४२ ॥
मांसदाहो मधुस्नेहजाम्बवोष्ठगुडादिभिः ॥
श्लिष्टवर्त्मन्यसृक्स्रावनील्यसम्यग्व्यधादिषु ॥ ४३ ॥
शिरादिदाहस्तैरेव, न दहेत्क्षारवारितान् ॥
अन्तःशल्यासृजो भिन्नकोष्ठान्भूरिव्रणातुरान् ॥ ४४ ॥
सुदग्धं घृतमध्वक्तं स्निग्धशीतैः प्रदेहयेत् ॥
तस्य लिङ्गं स्थिते रक्ते शब्दवल्लासिकान्वितम् ॥ ४५ ॥
पक्वतालकपोताभं सुरोहं नातिवेदनम् ॥
प्रमाददग्धवत्सर्वं दुर्दग्धात्यर्थदग्धयोः ॥ ४६ ॥
चतुर्धा तत्तु तुत्थेन सह तुत्थस्य लक्षणम् ॥
त्वग्विवर्णोष्यतेऽत्यर्थं न च स्फोटसमुद्भवः ॥ ४७ ॥
सस्फोटदाहतीव्रोषं दुर्दग्धमतिदाहतः ॥
मांसलम्बनसङ्कोचदाहधूपनवेदनाः ॥ ४८ ॥
शिरादिनाशस्तृण्मूर्च्छाव्रणगाम्भीर्य्यमृत्यवः ॥
तुत्थस्याग्निप्रतपनं कार्यमुष्णञ्च भेषजम् ॥ ४९ ॥
स्त्याने‌ऽस्रे वेदनात्यर्थं विलीने मन्दता रुजः ॥
दुर्दग्धे शीतमुष्णञ्च युञ्ज्यादादौ ततो हिमम् ॥ ५० ॥
सम्यग्दग्धे तुगाक्षीरिप्लक्षचन्दनगौरिकैः ॥
लिम्पेत्साज्यामृतैरूर्ध्वं पित्तविद्रधिवत्क्रिया ॥ ५१ ॥

अतिदग्धे द्रुत कुर्यात्सर्व पित्तविसर्पवत् ॥
स्नेहदग्धे भृशतर रूक्ष तत्र तु योजयेत् ॥ ५२ ॥
समाप्यते स्थानमिदं हृदयस्य रहस्यवत् ॥
अत्रार्था॰ सूत्रिता॰ सूक्ष्माः प्रतन्यन्ते हि सर्वतः ॥ ५३ ॥
इति वैद्यपतिसिंहगुप्तसूनुवाग्भट्टविरचितायामष्टाग-
हृदयसहिताया प्रथम सूत्रस्थानं सम्पूर्णम् ॥ १ ॥

इत्यष्टाङ्गहृदयसहिताया सूत्रस्थाने त्रिंशोऽध्याय ॥ ३० ॥

---

# शारीरस्थानम् ।

## प्रथमोऽध्याय ।

अथातो गर्भावक्रान्तिशारीर व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षय ॥
शुद्धे शुक्रार्तवे सत्त्व॰ स्वकर्मक्लेशचोदितः ॥
गर्भ॰ सम्पद्यते युक्तिवशादग्निरिवारणौ ॥ १ ॥
बीजात्मकैर्महाभूतै॰ सूक्ष्मै॰ सत्त्वानुगैश्च सः ॥
मातुश्चाहाररसजैः क्रमात्कुक्षौ विवर्द्धते ॥ २ ॥
तेजो यथार्करश्मीना स्फटिकेन तिरस्कृतम् ॥
नेन्धन दृश्यते गच्छत्सत्त्वो गर्भाशयं तथा ॥ ३ ॥
कारणानुविधायित्वात्कार्याणा तत्स्वभावता ॥
नानायोन्याकृती॰ सत्त्वो धत्तेऽतो द्रुतलोहवत् ॥ ४ ॥

अत एव च शुक्रस्य बाहुल्याज्जायते पुमान् ॥
रक्तस्य स्त्री तयोः साम्ये क्लीबः शुक्रार्तवे पुनः ॥ ५ ॥
वायुना बहुशो भिन्ने यथास्वं बह्वपत्यता ॥
वियोनिविकृताकाराज्जायन्ते विकृतैर्मलैः ॥ ६ ॥
मासि मासि रजः स्त्रीणां रसजं स्रवति त्र्यहम् ॥
वत्सराद्द्वादशादूर्ध्वं याति पञ्चाशतः क्षयम् ॥ ७ ॥
पूर्णषोडशवर्षा स्त्री पूर्णविंशेन सङ्गता ॥
शुद्धे गर्भाशये मार्गे रक्ते शुक्रेऽनिले हृदि ॥ ८ ॥
वीर्यवन्तं सुतं सूते ततो न्यूनाब्दयोः पुनः ॥
रोग्यल्पायुरधन्यो वा गर्भो भवति नैव वा ॥ ९ ॥
वातादिकुणपग्रन्थिपूयक्षीणमलाह्वयम् ॥
बीजासमर्थं रेतोस्रं स्वलिङ्गैर्दोषजं वदेत् ॥ १० ॥
रक्तेन कुणपं श्लेष्मवाताभ्यां ग्रन्थिसन्निभम् ॥
पूयाभं रक्तपित्ताभ्यां क्षीणं मारुतपित्ततः ॥ ११ ॥
कृच्छ्राण्येतान्यसाध्यं तु त्रिदोषं मूत्रविट्प्रभम् ॥
कुर्याद्वातादिभिर्दुष्टेस्वौषधं कुणपे पुनः ॥ १२ ॥
धातकीपुष्पखदिरदाडिमार्जुनसाधितम् ॥
पाययेत्सर्पिरथ वा विपक्वमसनादिभिः ॥ १३ ॥
पलाशभस्माश्मभिदा ग्रन्थ्याभे पूयरेतसि ॥
परूषकवटादिभ्यां क्षीणे शुक्रकरी क्रिया ॥ १४ ॥
स्निग्धं वान्तं विरिक्तं च निरूढमनुवासितम् ॥
योजयेच्छुक्रदोषार्तं सम्यगुत्तरबस्तिभिः ॥ १५ ॥

सशुण्ठो विट्प्रभे सर्पिर्हिंगुसेव्यादिसाधितम् ॥
पिबेद्ग्रन्थ्यार्तवे पाठाव्योषवृक्षकजं जलम् ॥ १६ ॥
पेयं कुणपपूयास्रे चन्दनं वक्ष्यते तु यत् ॥
गुह्यरोगे च तत्सर्वं कार्यं सोत्तरवस्तिकम् ॥ १७ ॥
शुक्रं शुक्लं गुरु स्निग्धं मधुरं बहुलं बहु ॥
घृतमाक्षिकतैलाभं सद्गर्भायार्तवं पुनः ॥ १८ ॥
लाक्षारसशशास्राभं धौतं यच्च विरज्यते ॥
शुद्धशुक्रार्तवं स्वच्छं सरक्तं मिथुनं मिथः ॥ १९ ॥
स्नेहैः पुंसवनैः स्निग्धं शुद्धं शीलितवस्तिकम् ॥
नरं विशेषात्क्षीराज्यैर्मधुरौषधसंस्कृतैः ॥ २० ॥
नारीं तैलेन माषैश्च पित्तलैः समुपाचरेत् ॥
क्षामप्रसन्नवदनां स्फुरच्छ्रोणिपयोधराम् ॥ २१ ॥
स्रस्ताक्षिकुक्षिं पुंस्कामां विद्यादृतुमतीं स्त्रियम् ॥
पद्मं सङ्कोचमायाति दिनेऽतीते यथा तथा ॥ २२ ॥
ऋतावतीते योनिः सा शुक्रं नातः प्रतीच्छति ॥
मासेनोपचितं रक्तं धमनीभ्यामृतौ पुनः ॥ २३ ॥
ईषत्कृष्णं विगन्धं च वायुर्योनिमुखान्नुदेत् ॥
ततः पुष्पेक्षणादेव कल्याणध्यायिनी त्र्यहम् ॥ २४ ॥
मृजालङ्काररहिता दर्भसंस्तरशायिनी ॥
क्षैरेयं यावकं स्तोकं कोष्ठशोधनकर्षणम् ॥ २५ ॥
पर्णे शरावे हस्ते वा भुञ्जीत ब्रह्मचारिणी ॥
चतुर्थेऽह्नि ततः स्नात्वा शुक्लमाल्याम्बरा शुचिः ॥ २६ ॥

इच्छन्ती भर्तृसदृशं पुत्रं पश्येत्पुरः पतिम् ॥
ऋतुस्तु द्वादशनिशाः पूर्वास्तिस्रश्च निन्दिताः ॥ २७ ॥
एकादशी च युग्मासु स्यात्पुत्रोऽन्यासु कन्यका ॥
उपाध्यायोऽथ पुत्रीयं कुर्वीत विधिवद्विधिम् ॥ २८ ॥
नमस्कारपरायास्तु शूद्राया मन्त्रवर्जितम् ॥
अवन्ध्य एवं संयोगः स्यादपत्यं च कामतः ॥ २९ ॥
सन्तोऽप्याहुरपत्यार्थं दम्पत्योः सङ्गतं रहः ॥
दुरपत्यं कुलाङ्गारो गोत्रे जातं महत्यपि ॥ ३० ॥
इच्छेतां यादृशं पुत्रं तद्रूपचरितांश्च तौ ॥
चिन्तयेतां जनपदांस्तदाचारपरिच्छदौ ॥ ३१ ॥
कर्मान्ते च पुमान्सर्पिः क्षीरशाल्योदनाशितः ॥
प्राग्दक्षिणेन पादेन शय्यां मौहूर्तिकाज्ञया ॥ ३२ ॥
आरोहेत्स्त्री तु वामेन तस्य दक्षिणपार्श्वतः ॥
तैलमाषोत्तराहारा तत्र मन्त्रं प्रयोजयेत् ॥ ३३ ॥
अहिरसि आयुरसि सर्वतः प्रतिष्ठासि धाता त्वाम् ॥
दधातु विधाता त्वां दधातु ब्रह्मवर्चसा भवेति ॥ ३४ ॥
ब्रह्मा बृहस्पतिर्विष्णुः सोमः सूर्यस्तथाश्विनौ ॥
भगोथ मित्रावरुणौ वीरं ददतु मे सुतम् ॥ ३५ ॥
सान्त्वयित्वा ततोऽन्योन्यं संविशेतां मुदान्वितौ ॥
उत्ताना तन्मना योषित्तिष्ठेदङ्गैः सुसंस्थितैः ॥ ३६ ॥
तथा हि बीजं गृह्णाति दोषैः स्वस्थानमास्थितैः ॥
लिङ्गन्तु सद्योगर्भाया योन्यां बीजस्य संग्रहः ॥ ३७ ॥

तृप्तिर्गुरुत्वं स्फुरणं शुक्रास्रानुबन्धनम्॥
हृदयस्पन्दनं तन्द्रा तृड्ग्लानिर्लोमहर्षणम्॥ ३८॥
अव्यक्तः प्रथमे मासि सप्ताहात्कललो भवेत्॥
गर्भः पुंसवनान्यत्र पूर्वं व्यक्तेः प्रयोजयेत्॥ ३९॥
बली पुरुषकारो हि दैवमप्यतिवर्तते॥
पुष्ये पुरुषकं हैमं राजतं वाथ वायसम्॥ ४०॥
कृत्वाऽग्निवर्णं निर्वाप्य क्षीरे तस्याञ्जलिं पिबेत्॥
गौरदण्डमपामार्गं जीवकर्षभशैर्यकान्॥ ४१॥
पिबेत्पुष्ये जले पिष्टानेकद्वित्रिसमस्तशः॥
क्षीरेण श्वेतबृहतीमूलं नासापुटे स्वयम्॥ ४२॥
पुत्रार्थं दक्षिणे सिञ्चेद्वामे दुहितृवाञ्छया॥
पयसा लक्ष्मणामूलं पुत्रोत्पादस्थितिप्रदम्॥ ४३॥
नासयास्येन वा पीतं वटशृङ्गाष्टकं तथा॥
औषधीर्जीवनीयाश्च बाह्यान्तरुपयोजयेत्॥ ४४॥
उपचारः प्रियहितैर्भर्त्रा भृत्यैश्च गर्भधृक्॥
नवनीतघृतक्षीरैः सदा चैनामुपाचरेत्॥ ४५॥
अतिव्यवायमायासं भारं प्रावरणं गुरु॥
अकालजागरस्वप्नकठिनोत्कटकासनम्॥ ४६॥
शोकक्रोधभयोद्वेगवेगश्रद्धाविधारणम्॥
उपवासाध्वतीक्ष्णोष्णगुरुविष्टम्भिभोजनम्॥ ४७॥
रक्तं निवसनं श्वभ्रकूपेक्षां मद्यमामिषम्॥
उत्तानशयनं यच्च स्त्रियो नेच्छन्ति तत्त्यजेत्॥ ४८॥

तथा रक्तस्रुतिं शुद्धिं बस्तिमामासतोऽष्टमात् ॥
एभिर्गर्भः स्रवेदामः कुक्षौ शुष्येन्म्रियेत वा ॥ ४९ ॥
वातलैश्च भवेद्गर्भः कुब्जान्धजडवामनः ॥
पित्तलैः खलतिः पिङ्गः श्वित्री पाण्डुः कफात्मभिः॥५०॥
व्याधींश्चास्या मृदुसुखैरतीक्ष्णैरौषधैर्जयेत् ॥
द्वितीये मासि कललाद्धनः पेश्यथ वाऽर्बुदम् ॥ ५१ ॥
पुंस्त्रीक्लीबाः क्रमात्तेभ्यस्तत्र व्यक्तस्य लक्षणम् ॥
क्षामता गरिमा कुक्षौ मूर्च्छा छर्दिररोचकः ॥ ५२ ॥
जृम्भा प्रसेकः सदनं रोमराज्याः प्रकाशनम् ॥
अम्लेष्टता स्तनौ पीनौ सस्तन्यौ कृष्णचूचुकौ ॥ ५३ ॥
पादशोफो विदाहोऽन्ये श्रद्धाश्च विविधात्मिकाः ॥
मातृजं ह्यस्य हृदयं मातुश्च हृदयेन तत् ॥ ५४ ॥
सम्बद्धं तेन गर्भिण्या नेष्टं श्रद्धाविधारणम् ॥
देयमप्यहितं तस्यै हितोपहितमल्पकम् ॥ ५५ ॥
श्रद्धाविघाताद्गर्भस्य विकृतिश्च्युतिरेव वा ॥
व्यक्तीभवति मासेऽस्य तृतीये गात्रपञ्चकम् ॥ ५६ ॥
मूर्धा द्वे सक्थिनी बाहू सर्वसूक्ष्माङ्गजन्म च ॥
सममेव हि मूर्धाद्यैर्ज्ञानं च सुखदुःखयोः ॥ ५७ ॥
गर्भस्य नाभौ मातुश्च हृदि नाडी निबध्यते ॥
यया स पुष्टिमाप्नोति केदार इव कुल्यया ॥ ५८ ॥
चतुर्थे व्यक्तताङ्गानां चेतनायाश्च पञ्चमे ॥
षष्ठे स्नायुशिरारोमबलवर्णनखत्वचाम् ॥ ५९ ॥

सर्वैः सर्वाङ्गसम्पूर्णो भावैः पुष्यति सप्तमे ॥
गर्भेणोत्पीडिता दोषास्तस्मिन्हृदयमाश्रिताः ॥
कण्डूं विदाहं कुर्वन्ति गर्भिण्याः किकिसानि च ॥६०॥
नवनीतं हितं तत्र कोलाम्बुमधुरौषधैः ॥
सिद्धमल्पपटुस्नेहं लघु स्वादु च भोजनम् ॥ ६१ ॥
चन्दनोशीरकल्केन लिम्पेदूरुस्तनोदरम् ॥
श्रेष्ठया चैणहारिणशशशोणितयुक्तया ॥ ६२ ॥
अश्वघ्नपत्रसिद्धेन तैलेनाभ्यज्य मर्दयेत् ॥
पटोलनिम्बमाञ्जिष्ठासुरसैः सेचयेत्पुनः ॥ ६३ ॥
दार्वीमधुकतोयेन मृजा च परिशीलयेत् ॥
ओजोऽष्टमे सञ्चरति मातापुत्रौ मुहुः क्रमात् ॥ ६४ ॥
तेन तौ म्लानमुदितौ तत्र जातो न जीवति ॥
शिशुरोजोऽनवस्थानान्नारी संशयिता भवेत् ॥ ६५ ॥
क्षीरपेया च पेयात्र सघृतान्वासनं घृतम् ॥
मधुरैः साधितं शुद्ध्यै पुराणशकृतस्तथा ॥ ६६ ॥
शुष्कमूलककोलाम्लकषायेण प्रशस्यते ॥
शताह्वाकल्कितो बस्तिः सतैलघृतसैन्धवः ॥ ६७ ॥
तस्मिंस्त्वेकाहयातेऽपि कालः सूतेरतः परम् ॥
वर्षाद्विकारकारी स्यात्कुक्षौ वातेन धारितः ॥ ६८ ॥
शस्तश्च नवमे मासि स्निग्धो मांसरसौदनः ॥
बहुस्नेहा यवागूर्वा पूर्वोक्तं चानुवासनम् ॥ ६९ ॥

तत एव पिचुं चास्या योनौ नित्यं निधापयेत् ॥
वातघ्नपत्रभृंगाम्भः शीतं स्नानेऽन्वहं हितम् ॥ ७० ॥
निःस्नेहांगी न नवमान्मासात्प्रभृति वासयेत् ॥
प्राग्दक्षिणस्तनस्तन्या पूर्वं तत्पार्श्वचेष्टिनी ॥ ७१ ॥
पुन्नाम्दौर्हृदप्रश्नरता पुंस्वप्नदर्शिनी ॥
उन्नते दक्षिणे कुक्षौ गर्भे च परिमण्डले ॥ ७२ ॥
पुत्रं सूतेऽन्यथा कन्यां या चेच्छति नृसङ्गतिम् ॥
नृत्यवादित्रगान्धर्वगन्धमाल्यप्रिया च या ॥ ७३ ॥
क्लीबं तत्सङ्करे तत्र मध्यं कुक्षेः समुन्नतम् ॥
यमौ पार्श्वद्वयोन्नामात्कुक्षौ द्रोण्यामिव स्थिते ॥ ७४ ॥
प्राक् चैव नवमान्मासात्सूतिकागृहमाश्रयेत् ॥
देशे प्रशस्ते सम्भारैः सम्पन्नं साधकेऽहनि ॥ ७५ ॥
तत्रोदीक्षेत सा सूतिं सूतिका परिवारिता ॥
अद्यश्वःप्रसवे ग्लानिः कुक्ष्यक्षिश्लथता क्लमः ॥ ७६ ॥
अधोगुरुत्वमरुचिः प्रसेको बहुमूत्रता ॥
वेदनोरूदरकटीपृष्ठहृद्वस्तिवङ्क्षणे ॥ ७७ ॥
योनिभेदरुजास्तोदस्फुरणस्रवणानि च ॥
आवीनामनुजन्मातस्ततो गर्भोदकस्रुतिः ॥ ७८ ॥
अथोपस्थितगर्भां तां कृतकौतुकमङ्गलाम् ॥
हस्तस्थपुन्नामफलां स्वभ्यक्तोष्णाम्बुसेचिताम् ॥ ७९ ॥
पाययेत्सघृतां पेयां तनौ भूशयने स्थिताम् ॥
आभुग्नसक्थिमुत्तानामभ्यक्तांगीं पुनःपुनः ॥ ८० ॥

अधो नाभेर्विमृद्नीयात्कारयेज्जृम्भचक्रमम् ॥
गर्भः प्रयात्यवागेव तल्लिंग हृद्विमोक्षतः ॥ ८१ ॥
आविश्य जठर गर्भो वस्तेरुपरि तिष्ठति ॥
आव्यो हि त्वरयन्त्येना खट्वामारोपयेत्तत. ॥ ८२ ॥
अथ सम्पीडिते गर्भे योनिमस्या प्रसाधयेत् ॥
मृदुपूर्वं प्रवाहेत वाढमाप्रसवाच्च सा ॥ ८३ ॥
हर्षयेत्ता मुहु. पुत्रजन्मशब्दजलानिलै. ॥
प्रत्यायाति तथा प्राणा. सूतिक्लेशावसादिताः ॥ ८४ ॥
धूपयेद्गर्भसगे तु योनिं कृष्णाहिकञ्चुकै ॥
हिरण्यपुष्पीमूलं च पाणिपादेन धारयेत् ॥ ८५ ॥
सुवर्चला विशल्यां वा जराय्वपतनेऽपि च ॥
कार्यमेतत्तथोत्क्षिप्य वाह्वोरेना विकम्पयेत् ॥ ८६ ॥
कटीमाकोटयेत्पार्ष्ण्या स्फिजौ गाढ निपीडयेत् ॥
तालुकण्ठ स्पृशेद्वेण्या मूर्ध्नि दद्यात्स्नुहीपय ॥ ८७ ॥
भूर्जलागलिकीतुम्बीसर्पत्वक्कुष्ठसर्षपैः ॥
पृथग्द्वाभ्यां समस्तैर्वा योनिलेपनधूपनम् ॥ ८८ ॥
कुष्ठतालीसकल्क वा सुरामण्डेन पाययेत् ॥
यूषेण वा कुलत्थाना विल्वजेनासवेन वा ॥ ८९ ॥
शताह्वासर्षपाजाजीशिग्रुतीक्ष्णकचित्रकैः ॥
सहिङ्गुकुष्ठमदनैर्मूत्रे क्षीरे च सार्षपम् ॥ ९० ॥
तैल सिद्ध हित पायौ योन्यां वाप्यनुवासनम् ॥
शतपुष्पावचाकुष्ठकणासर्षपकल्कित. ॥ ९१ ॥

निरूहः पातयत्याशु सस्नेहलवणोऽपराम् ॥
तत्सङ्गे ह्यनिलो हेतुः सा निर्यात्याशु तज्जयात् ॥९२ ॥
कुशला पाणिनाऽक्तेन हरेत्कृत्तनखेन वा ॥
मुक्तगर्भापरां योनिं तैलेनाङ्गञ्च मर्दयेत् ॥ ९३ ॥
मक्कल्लाख्ये शिरोबस्तिकोष्ठशूले तु पाययेत् ॥
सुचूर्णितं यवक्षारं घृतेनोष्णजलेन वा ॥ ९४ ॥
धान्याम्बु वा गुडव्योषत्रिजातकरजोन्वितम् ॥
अथ बालोपचारेण बालं योषिदुपाचरेत् ॥ ९५ ॥
सूतिका क्षुद्वती तैलाद् घृताद्वा महतीं पिबेत् ॥
पञ्चकोलकिनीं मात्रामनुचोष्णं गुडोदकम् ॥ ९६ ॥
वातघ्नौषधतोयं वा तथा वायुर्न कुप्यति ॥
विशुद्ध्यति च दुष्टास्रं द्वित्रिरात्रमयं क्रमः ९७ ॥
स्नेहायोग्या तु निःस्नेहममुमेव विधिं भजेत् ॥
पीतवत्याश्च जठरं यमकाक्तं विवेष्टयेत् ॥ ९८ ॥
जीर्णे स्नाता पिबेत्पेयां पूर्वोक्तौषधसाधिताम् ॥
त्र्यहादूर्ध्वं विदार्यादिवर्गक्वाथेन साधिता ॥ ९९ ॥
हिता यवागूः स्नेहाढ्या सात्म्यातः पयसाऽथ वा ॥
सप्तरात्रात्परं चास्यै क्रमशो बृंहणं हितम् ॥ १०० ॥
द्वादशाहेऽनतिक्रान्ते पिशितं नोपयोजयेत् ॥
यत्नेनोपचरेत्सूतां दुःसाध्या हि तदामयाः ॥ १०१ ॥

गर्भवृद्धिप्रसवरुक्क्लेदास्रस्रातिपीडनैः ॥
एवञ्च मासादध्यर्धान्मुक्ताहारादियन्त्रणा ॥
गतसूताभिधाना स्यात्पुनरार्त्तवदर्शनात् ॥ १०२ ॥

इत्यष्टाङ्गहृदयसंहितायां शारीरस्थाने प्रथमोऽध्यायः ॥ १ ॥

## द्वितीयोऽध्यायः ।

अथातो गर्भव्यापदं शारीरं व्याख्यास्यामः ।
गर्भिण्याः परिहार्याणां सेवया रोगतोऽपि वा ॥
पुष्पे दृष्टेऽथ वा शूले बाह्यान्तः स्निग्धशीतलम् ॥ १ ॥
सेव्याम्भोजहिमक्षीरीवल्ककल्काज्यलेपिताम् ॥
धारयेद्योनिवस्तिभ्यामार्द्रार्द्रान् पिचुनक्तकान् ॥ २ ॥
शतधौतघृताक्तां स्त्री तदम्भस्यवगाहयेत् ॥
ससिताक्षौद्रकुमुदकमलोत्पलकेसरम् ॥ ३ ॥
लिह्यात्क्षीरघृतं खादेच्छृङ्गाटककसेरुकम् ॥
पिबेत्कान्ताब्जशालूकबालोदुम्बरवत्पयः ॥ ४ ॥
शृतेन शालिकाकोलीद्विबलामधुकेक्षुभिः ॥
पयसा रक्तशाल्यन्नमद्यात्समधुशर्करम् ॥ ५ ॥
रसैर्वा जाङ्गलैः शुद्धिवर्जं चास्रोक्तमाचरेत् ॥
असम्पूर्णत्रिमासायाः प्रत्याख्याय प्रसाधयेत् ॥ ६ ॥
आमान्वये च तत्रेष्टं शीतं रूक्षोपसंहितम् ॥
उपवासो घनोशीरगुडूच्यरलुधान्यकाः ॥ ७ ॥

दुरालभापर्पटकचन्दनातिविषाबलाः ॥
क्वथिताः सलिले पानं तृणधान्यादिभोजनम् ॥ ८ ॥
मुद्गादियूषैरामे तु जिते स्निग्धादि पूर्ववत् ॥
गर्भे निपतिते तीक्ष्णं मद्यं सामर्थ्यतः पिबेत् ॥ ९ ॥
गर्भकोष्ठविशुद्ध्यर्थमर्त्तिविस्मरणाय च ॥
लघुना पञ्चमूलेन रूक्षां पेयां ततः पिबेत् ॥ १० ॥
पेयाममद्यपा कल्के साधितां पाञ्चकौलिके ॥
बिल्वादिपञ्चकक्काथे तिलोद्दालकतण्डुलैः ॥ ११ ॥
मासतुल्यदिनान्येवं पेयादिः पतिते क्रमः ॥
लघुस्नेहलवणो दीपनीययुतो हितः ॥ १२ ॥
दोषधातुपरिक्लेदशोषार्थं विधिरित्ययम् ॥
स्नेहान्नबस्तयश्चोर्द्ध्वं बल्यजीवनदीपनाः ॥ १३ ॥
सञ्जातसारे महति गर्भे योनिपरिस्रवात् ॥
वृद्धिमप्राप्नुवन्गर्भः कोष्ठे तिष्ठति सस्फुरः ॥ १४ ॥
उपविष्टकमाहुस्तं वर्द्धते तेन नोदरम् ॥
शोकोपवासरूक्षाद्यैरथ वा योन्यतिस्रवात् ॥ १५ ॥
वाते क्रुद्धे कृशः शुष्येद्गर्भो नागोदरं तु तत् ॥
उदरं वृद्धमप्यत्र हीयते स्फुरणं चिरात् ॥ १६ ॥
तयोर्बृंहणवातघ्नमधुरद्रव्यसंस्कृतैः ॥
घृतक्षीररसैस्तृप्तिरामगर्भांश्च खादयेत् ॥ १७ ॥
तैरेव च सुतृप्तायाः क्षोभणं यानवाहनैः ॥
लीनाख्ये निस्फुरे श्येनगोमत्स्योत्क्रोशबर्हिजाः ॥ १८ ॥

रसा बहुघृता देया माषमूलकजा अपि ॥
बालबिल्वं तिलान्माषान्सक्तूंश्च पयसा पिबेत् ॥ १९ ॥
समेद्यमांसं मधु वा कट्यभ्यङ्गञ्च शीलयेत् ॥
हर्षयेत्सततं चैनामेव गर्भः प्रवर्द्धते ॥ २० ॥
पुष्टोऽन्यथा वर्षगणैः कृच्छ्राज्जायेत नैव वा ॥
उदावर्त्तन्तु गर्भिण्या. स्नेहैराशुतरा जयेत् ॥ २१ ॥
योग्यैश्च वस्तिभिर्हन्यात्सगर्भां स हि गर्भिणीम् ॥
गर्भेऽतिदोषोपचयादपथ्यैर्दैवतोऽपि वा ॥ २२ ॥
मृतेऽन्तरुदर शीतं स्तब्धे ध्मातं भृशव्यथम् ॥
गर्भास्पन्दो भ्रमस्तृष्णा कृच्छ्रादुच्छ्वसनं क्लम' २३ ॥
अरतिः स्रस्तनेत्रत्वमावीनामसमुद्भव' ॥
तस्याः कोष्णाम्बुसिक्ताया पिष्ट्वा योनिं प्रलेपयेत्॥२४॥
गुड किण्व सलवण तथान्तः पूरयेन्मुहु ॥
घृतेन कल्कीकृतया शाल्मल्यतासिपिच्छया ॥ २५ ॥
मन्त्रैर्योग्यैर्जरायुक्तैर्मूढगर्भो न चेत्पतेत् ॥
अथापृच्छयेश्वरं वैद्यो यत्नेनाशु तमाहरेत् ॥ २६ ॥
हस्तमभ्यज्य योनिश्च साज्यशाल्मलिपिच्छया ॥
हस्तेन शक्य तेनैव गात्रं च विषमं स्थितम् ॥ २७ ॥
आच्छन्नोत्पीडसपीडविक्षेपोत्क्षेपणादिभिः ॥
अनुलोम्य समाकर्षेद्योनिं प्रत्यार्जमागतम् ॥ २८ ॥
हस्तपादशिरोभिर्यो योनि भुग्न. प्रपद्यते ॥
पादेन योनिमेकेन भुग्नोऽन्येन गुदं च यः ॥ २९ ॥

विष्कम्भौ नामतो मूढौ शस्त्रदारणमर्हतः ॥
मण्डलाङ्गुलिशस्त्राभ्यां तत्र कर्म प्रशस्यते ॥ ३० ॥
वृद्धिपत्रं हि तीक्ष्णाग्रं न योनाववचारयेत् ॥
पूर्वं शिरःकपालानि दारयित्वा विशोधयेत् ॥ ३१ ॥
कक्षोरस्तालुचिबुके प्रदेशेऽन्यतमे ततः ॥
समालम्ब्य दृढं कर्षेत्कुशलो गर्भशङ्कुना ॥ ३२ ॥
अभिन्नशिरसं त्वक्षिकूटयोर्गण्डयोरपि ॥
बाहुं छित्त्वांससक्तस्य वाताध्मातोदरस्य तु ॥ ३३ ॥
विदार्य कोष्ठमन्त्राणि बहिर्वा संनिरस्य च ॥
कटीसक्तस्य तद्वच्च तत्कपालानि दारयेत् ॥ ३४ ॥
यद्यद्वायुवशादंगं सज्जेद्गर्भस्य खण्डशः ॥
तत्तच्छित्त्वा हरेत्सम्यग्रक्षेन्नारीं च यत्नतः ॥ ३५ ॥
गर्भस्य हि गतिं चित्रां करोति विगुणोऽनिलः ॥
तत्रानल्पमतिस्तस्मादवस्थापेक्षमाचरेत् ॥ ३६ ॥
छिन्द्याद्गर्भं न जीवन्तं मातरं स हि मारयेत् ॥
सहात्मना न चोपेक्ष्यः क्षणमप्यस्तजीवितः ॥ ३७ ॥
योनिसंवरणभ्रंशमक्कल्लश्वासपीडिताम् ॥
पूत्युद्गारां हिमांगीं च मूढगर्भां परित्यजेत् ॥ ३८ ॥
अथापतन्तीमपरां पातयेत्पूर्ववद्भिषक् ॥
एवं निर्हृतशल्यां तु सिञ्चेदुष्णेन वारिणा ॥ ३९ ॥
दद्यादभ्यक्तदेहायै योनौ स्नेहपिचुं ततः ॥
योनिर्मृदुर्भवेत्तेन शूलं चास्याः प्रशाम्यति ॥ ४० ॥

दीप्यकातिविषारास्नाहिङ्ग्वेलापञ्चकोलकान् ॥
चूर्णं स्नेहेन कल्कं वा क्राथं वा पाययेत्ततः ॥ ४१ ॥
कटुकातिविषापाठाशाकत्वग्घिङ्गुतेजिनी. ॥
तद्वच्च दोषस्यन्दार्थं वेदनोपशमाय च ॥ ४२ ॥
त्रिरात्रमेवं सप्ताह स्नेहमेव तत पिबेत् ॥
साय पिबेदरिष्ट वा तथा सुकृतमासवम् ॥ ४३ ॥
शिरीषककुभक्राथपिचून्योनौ विनिक्षिपेत् ॥
उपद्रवाश्च येऽन्ये स्युस्तान्यथास्वमुपाचरेत् ॥ ४४ ॥
पयो वातहरैः सिद्धं दशाहं भोजने हितम् ॥
रसो दशाहं च परं लघुपथ्याल्पभोजना ॥ ४५ ॥
स्वेदाभ्यगपरा स्नेहान्वलातैलादिकान्भजेत् ॥
ऊर्ध्वं चतुर्भ्यो मासेभ्य. सा क्रमेण सुखानि च ॥ ४६ ॥
बलामूलकषायस्य भागा. षट् पयसस्तथा ॥
यवकोलकुलत्थाना दशमूलस्य चैकतः ॥ ४७ ॥
निःक्राथभागो भागश्च तैलस्य च चतुर्दश ॥
द्विमेदादारुमञ्जिष्ठापाकोलीद्वयचन्दनै. ॥ ४८ ॥
सारिवाकुष्ठतगरजीवकर्षभसैन्धवैः ॥
कालानुसार्याशैलेयवचागुरुपुनर्नवैः ॥ ४९ ॥
अश्वगन्धावरीक्षीरशुक्लायष्टीवरारसैः ॥
शताह्वाशूर्पपर्ण्येलात्वक्पत्रै. श्लक्ष्णकल्कितै. ॥ ५० ॥
पक्वं मृद्वग्निना तैल सर्ववातविकारजित् ॥
सूतिकाबालमर्मास्थिक्षतक्षीणेषु पूजितम् ॥ ५१ ॥

ज्वरगुल्मग्रहोन्मादमूत्राघातान्त्रवृद्धिजित् ॥
धन्वन्तरेरभिमतं योनिरोगक्षयापहम् ॥ ५२ ॥
बस्तिद्वारे विपन्नायाः कुक्षिः प्रस्पन्दते यदि ॥
जन्मकाले ततः शीघ्रं पाटयित्वोद्धरेच्छिशुम् ॥ ५३ ॥
मधुकं शाकबीजं च पयस्या सुरदारु च ॥
अश्मन्तकः कृष्णतिलास्ताम्रवल्ली शतावरी ॥ ५४ ॥
वृक्षादनी पयस्या च लता चोत्पलसारिवा ॥
अनन्ता सारिवा रास्ना पद्मा च मधुयष्टिका ॥ ५५ ॥
बृहतीद्वयकाश्मर्यः क्षीरिशृङ्गत्वचो घृतम् ॥
पृश्निपर्णी बला शिग्रुः श्वदंष्ट्रा मधुपर्णिका ॥ ५६ ॥
शृङ्गाटकं बिसं द्राक्षा कसेरु मधुकं सिता ॥
सप्तैतान्पयसा योगानर्द्धश्लोकसमापनान् ॥ ५७ ॥
क्रमात्सप्तसु मासेषु गर्भे स्रवति योजयेत् ॥
कपित्थबिल्वबृहतीपटोलेक्षुनिदिग्धजैः ॥ ५८ ॥
मूलैः शृतं प्रयुञ्जीत क्षीरं मासे तथाऽष्टमे ॥
नवमे सारिवाऽनन्तापयस्यामधुयष्टिभिः ॥ ५९ ॥
योजयेद्दशमे मासि सिद्धं क्षीरं पयस्यया ॥
अथ वा यष्टिमधुकनागरामरदारुभिः ॥ ६० ॥
अवस्थितं लोहितमङ्गनाया वातेन गर्भं ब्रुवतेऽनभिज्ञाः ॥
गर्भाकृतित्वात्कटुकोष्णतीक्ष्णैः स्रुते पुनः केवल एव रक्ते ॥ ६१ ॥
गर्भं जडा भूतहृतं वदन्ति मूर्त्तेर्न दृष्टं हरणं यतस्तैः ॥
ओजोशनत्वादथ वाऽव्यवस्थैर्भूतैरुपेक्ष्येत न गर्भमाता ॥ ६२ ॥

इत्यष्टाङ्गहृदयसहितायां शारीरस्थाने द्वितीयोऽध्यायः ॥ २ ॥

# तृतीयोऽध्यायः ।



अथातोऽङ्गविभाग शारीरं व्याख्यास्यामः ।
शिरोऽन्तराधिर्द्वौ बाहू सक्थिनी च समासतः ॥
षडङ्गमङ्गं प्रत्यङ्ग तस्याक्षिहृदयादिकम् ॥ १ ॥
शब्द. स्पर्शश्च रूप च रसो गन्ध. क्रमाद्गुणा. ॥
खाऽनिलाऽग्न्यऽम्भुवामेकगुणवृद्ध्यन्वय परे ॥ २ ॥
तत्र खात्खानि देहेऽस्मिञ्छ्रोत्र शब्दो विविक्तता ॥
वातात्स्पर्शत्वगुच्छ्वासा वह्नेर्दृग्रूपपक्तय ॥ ३ ॥
आप्या जिह्वारसक्लेदा घ्राणगन्धास्थि पार्थिवम् ॥
मृद्वत्र मातृज रक्तमांसमज्जगुदादिकम् ॥ ४ ॥
पैतृकं तु स्थिर शुक्रं धमन्यस्थिकचादिकम् ॥
चैतन चित्तमक्षाणि नानायोनिषु जन्म च ॥ ५ ॥
सात्म्यज त्वायुरारोग्यमनालस्यं प्रभा बलम् ॥
रसज वपुषो जन्म वृत्तिर्वृद्धिरलोलता ॥ ६ ॥
सात्त्विक शौचमास्तिक्य शुक्लधर्मरुचिर्मतिः ॥
राजस बहुभाषित्वं मानक्रुद्दम्भमत्सरा ॥ ७ ॥
तामसं भयमज्ञान निद्राऽऽलस्यं विषादिता ॥
इति भूतमयो देहस्तत्र सप्त त्वचोऽसृजः ॥ ८ ॥
पच्यमानात्प्रजायन्ते क्षीरात्सन्तानिका इव ॥
धात्वाशयान्तरक्लेदो विपक्व. स्वंस्वमूष्मणा ॥ ९ ॥

श्लेष्मस्नाय्वपराच्छन्नः कलाख्यः काष्ठसारवत् ॥
ताः सप्त सप्त चाधारः रक्तस्याद्यः क्रमात्परे ॥ १० ॥
कफामपित्तपक्वानां वायोर्मूत्रस्य च स्मृताः ॥
गर्भाशयोऽष्टमः स्त्रीणां पित्तपक्वाशयान्तरे ॥ ११ ॥
कोष्ठाङ्गानि स्थितान्येषु हृदयं क्लोमफुप्फुसम् ॥
यकृत्प्लीहोन्दुकं वृक्कौ नाभिडिम्भान्त्रबस्तयः ॥ १२ ॥
दश जीवितधामानि शिरोरसनबन्धनम् ॥
कण्ठोऽस्त्रं हृदयं नाभिर्बस्तिः शुक्रौजसी गुदम् ॥१३॥
जालानि कण्डराश्चान्ये पृथक्षोडश निर्दिशेत् ॥
षट् कूर्चाः सप्त सेवन्यो मेढ्रजिह्वाशिरोगताः ॥ १४ ॥
शस्त्रेणैताः परिहरेच्चतस्रो मांसरज्जवः ॥
चतुर्दशास्थिसंघाताः सीमन्ता द्विगुणा नव ॥ १५ ॥
अस्थ्नां शतानि षष्टिश्च त्रीणि दन्तनखैः सह ॥
धन्वन्तरिस्तु त्रीण्याह सन्धीनां च शतद्वयम् ॥ १६ ॥
दशोत्तरं सहस्रे द्वे निजगादाऽत्रिनन्दनः ॥
स्नावा नवशती पञ्च पुंसां पेशीशतानि च ॥ १७ ॥
अधिका विंशतिः स्त्रीणां योनिस्तनसमाश्रिताः ॥
दश मूलशिरा हृत्स्थास्ताः सर्वं सर्वतो वपुः ॥ १८ ॥
रसात्मकं वहन्त्योजस्तन्निबद्धं हि चेष्टितम् ॥
स्थूलमूलाः सुसूक्ष्माग्राः पत्ररेखाप्रतानवत् ॥ १९ ॥
भिद्यन्ते तास्ततः सप्तशतान्यासां भवन्ति तु ॥
तत्रैकैकं च शाखाया शतं तस्मिन्न वेधयेत् ॥ २० ॥

शिरा जालन्धरा नाम तिस्रश्चाभ्यन्तराश्रिता. ॥
षोडशद्विगुणाः श्रोण्या तासां द्वेद्वे तु वङ्क्षणे ॥ २१ ॥
द्वेद्वे कटीकतरुणे शस्त्रेणाष्टौ स्पृशेन्न ताः ॥
पार्श्वयोः षोडशैकैकामूर्ध्वगां वर्जयेच्छिराम् ॥ २२ ॥
द्वादशद्विगुणा. पृष्ठे पृष्ठवंशस्य पार्श्वगे ॥
द्वेद्वे तत्रोर्ध्वगामिन्यो न शस्त्रेण परामृशेत् ॥ २३ ॥
पृष्ठवज्जठरे तासां मेहनस्योपरि स्थिते ॥
रोमराजीमुभयतो द्वेद्वे शस्त्रेण न स्पृशेत् ॥ २४ ॥
चत्वारिंशदुरस्यासां चतुर्दश न वेधयेत् ॥
स्तनरोहिततन्मूलहृदये तु पृथग्द्वयम् ॥ २५ ॥
अपस्तम्भाख्ययोरेका तथापालापयोरपि ॥
ग्रीवायां पृष्ठवत्तासां नीले मन्ये कृकाटिके ॥ २६ ॥
विधुरे मातृकाश्चाष्टौ षोडशेति परित्यजेत् ॥
हन्वोः षोडश तासां द्वे संधिबन्धनकर्मणी ॥ २७ ॥
जिह्वायां हनुवत्तासामधो द्वे रसबोधने ॥
द्वे च वाचः प्रवर्तिन्यौ नासायां चतुरुत्तरा ॥ २८ ॥
विंशतिर्गन्धवेदिन्यौ तासामेका च तालुगाम् ॥
षट्पञ्चाशन्नयनयोर्निमेषोन्मेषकर्मणी ॥ २९ ॥
द्वेद्वे अपाङ्गयोर्द्वे च तासां षडिति वर्जयेत् ॥
नासानेत्राश्रिताः षष्टिर्ललाटे स्थपनीश्रिताम् ॥ ३० ॥
तत्रैका द्वौ तथाऽऽवर्तौ चतस्रश्च कचान्तगा. ॥
सप्तैव वर्जयेत्तासां कर्णयोः षोडशात्र तु ॥ ३१ ॥

द्वे शब्दबोधने शङ्खौ शिरास्ता एव चाश्रिताः ॥
द्वे शङ्खसन्धिगे तासां मूर्ध्नि द्वादश तत्र तु ॥ ३२ ॥
एकैकां पृथगुत्क्षेपसीमन्ताधिपतिस्थिताम् ॥
इत्यवेध्यविभागार्थं प्रत्यङ्गं वर्णिताः शिराः ॥ ३३ ॥
अवेध्यास्तत्र कार्त्स्न्येन देहेऽष्टानवतिस्तथा ॥
संकीर्णा ग्रथिताः क्षुद्राः वक्राः सन्धिषु चाश्रिताः ॥३४॥
तासां शताना सप्तानां पादोऽस्रं वहते पृथक् ॥
वातपित्तकफैर्जुष्टं शुद्धं चैव स्थिता मलाः ॥ ३५ ॥
शरीरमनुगृह्णन्ति पीडयन्त्यन्यथा पुनः ॥
तत्र श्यावारुणाः सूक्ष्माः पूर्णारिक्ताः क्षणाच्छिराः ॥३६॥
प्रस्यन्दिन्यश्च वातास्रं वहन्ते पित्तशोणितम् ॥
स्पर्शोष्णा शीघ्रवाहिन्यो नीलपीताः कफं पुनः ॥ ३७ ॥
गौर्यः स्निग्धाः स्थिराः शीताः संसृष्टं लिङ्गसङ्करे ॥
गूढाः समास्थिताः स्निग्धा रोहिण्यः शुद्धशोणितम् ॥ ३८ ॥
धमन्यो नाभिसम्बद्धा विंशतिश्चतुरुत्तराः ॥
ताभिः परिवृतो नाभिश्चक्रनाभिरिवारकैः ॥ ३९ ॥
ताभिश्चोर्द्ध्वमधस्तिर्यग्देहोऽयमनुगृह्यते ॥
स्रोतांसि नासिके कर्णौ नेत्रे पाय्वास्यमेहनम् ॥ ४० ॥
स्तनौ रक्तपथश्चेति नारीणामधिकं त्रयम् ॥
जीवितायतनान्यन्तःस्रोतांस्याहुस्त्रयोदश ॥ ४१ ॥
प्राणधातुमलाम्भोऽन्नवाहीन्यहितसेवनात् ॥
तानि दुष्टानि रोगाय विशुद्धानि सुखाय च ॥ ४२ ॥

स्वधातुसमवर्णानि वृत्तस्थूलान्यणूनि च ॥
स्रोतांसि दीर्घाण्याकृत्या प्रतानसदृशानि च ॥ ४३ ॥
आहारश्च विहारश्च यः स्याद्दोषगुणैः समः ॥
धातुभिर्विगुणो यश्च स्रोतसां स प्रदूषकः ॥ ४४ ॥
अतिप्रवृत्तिः सङ्गो वा शिराणां ग्रन्थयोऽपि वा ॥
विमार्गतो वा गमनं स्रोतसां दुष्टिलक्षणम् ॥ ४५ ॥
बिसानामिव सूक्ष्माणि दूरं प्रविसृतानि च ॥
द्वाराणि स्रोतसां देहे रसो यैरुपचीयते ॥ ४६ ॥
व्यधे तु स्रोतसां मोहकम्पाध्मानवमिज्वराः ॥
प्रलापशूलविण्मूत्ररोधो मरणमेव वा ॥ ४७ ॥
वामपार्श्वाश्रितं नाभेः किंचित्सूर्यस्य मंडलम् ॥
तन्मध्ये मंडलं सौम्यं तन्मध्येऽग्निर्व्यवस्थितः ॥ १ ॥
जरायुमात्रप्रच्छन्नः काचकोशस्थदीपवत् ॥
अथ सार्द्धश्लोकः क्षेपकः ॥
स्रोतोविद्धमतो वैद्यः प्रत्याख्याय प्रसाधयेत् ॥
उद्धृत्य शल्यं यत्नेन सद्यःक्षतविधानतः ॥ ४८ ॥
अन्नस्य पक्ता पित्तं तु पाचकाख्यं पुरेरितम् ॥
दोषधातुमलादीनामूष्मेत्यात्रेयशासनम् ॥ ४९ ॥
तदधिष्ठानमन्नस्य ग्रहणाद्ग्रहणी मता ॥
सैव धन्वन्तरिमते कला पित्तधराह्वया ॥ ५० ॥
आयुरारोग्यवीर्यौजोभूतधात्वग्निपुष्टये ॥
स्थिता पक्वाशयद्वारि भुक्तमार्गार्गलेव सा ॥ ५१ ॥

भुक्तमामाशये रुद्ध्वा सा विपाच्य नयत्यधः ॥
बलवत्यबला त्वन्नमाममेव विमुञ्चति ॥ ५२ ॥
ग्रहण्यां बलमग्निर्हि स चापि ग्रहणीबलः ॥
दूषितेऽग्नावतो दुष्टा ग्रहणी रोगकारिणी ॥ ५३ ॥
यदन्नं देहधात्वोजोबलवर्णादिपोषणम् ॥
तत्राग्निर्हेतुराहारान्नह्यपक्वाद्रसादयः ॥ ५४ ॥
अन्नं कालेऽभ्यवहृतं कोष्ठं प्राणानिलाहृतम् ॥
द्रवैर्विभिन्नसङ्घातं नीतं स्नेहेन मार्दवम् ॥ ५५ ॥
सन्धुक्षितः समानेन पचत्यामाशयस्थितम् ॥
औदर्योऽग्निर्यथा बाह्यः स्थालीस्थं तोयतण्डुलम् ॥ ५६ ॥
आदौ षड्रसमप्यन्नं मधुरीभूतमीरयेत् ॥
फेनीभूतं कफं यातं विदाहादम्लतां ततः ॥ ५७ ॥
पित्तमामाशयात्कुर्याच्च्यवमानं च्युतं पुनः ॥
अग्निना शोषितं पक्वं पिण्डितं कटुमारुतम् ॥ ५८ ॥
भौमाप्याग्नेयवायव्याः पञ्चोष्माणः सनाभसाः ॥
पञ्चाहारगुणान्स्वान्स्वान्पार्थिवादीन्पचन्त्यनु ॥ ५९ ॥
यथास्वं ते च पुष्णन्ति पक्वा भूतगुणान्पृथक् ॥
पार्थिवाः पार्थिवानेव शेषाः शेषांश्च देहगान् ॥ ६० ॥
किट्टं सारश्च तत्पक्वमन्नं सम्भवति द्विधा ॥
तत्राच्छं किट्टमन्नस्य मूत्रं विद्याद्घनं शकृत् ॥ ६१ ॥
सारस्तु सप्तभिर्भूयो यथास्वं पच्यतेऽग्निभिः ॥
रसाद्रक्तं ततो मांसं मांसान्मेदस्ततोऽस्थि च ॥ ६२ ॥

अस्थ्नो मज्जा ततः शुक्र शुक्राद्गर्भ• प्रजायते ॥
कफ पित्त मलः खेषु प्रस्वेदो नखरोम च ॥ ६३ ॥
स्नेहोऽक्षित्वग्विशामोजोधातूना क्रमशो मलाः ॥
रसादिकिट्टो धातूनां पाकादेव द्विधाच्छ्रत' ॥ ६४ ॥
परस्परोपसस्तम्भाद्धातुस्नेहपरम्परा ॥
केचिदाहुरहोरात्रात्पडहादपरे परे ॥ ६५ ॥
मासेन याति शुक्रत्वमन्नं पाकक्रमादिभि' ॥
सन्ततं भोज्यधातूना परिवृत्तिस्तु चक्रवत् ॥ ६६ ॥
वृष्यादीनि प्रभावेण सद्य शुक्रादि कुर्वते ॥
प्राय करोत्यहोरात्रात्कर्मान्यदपि भेपजम् ॥ ६७ ॥
व्यानेन रसधातुर्हि विक्षेपोचितकर्मणा ॥
युगपत्सर्वतोऽजस्र देहे विक्षिप्यते सदा ॥ ६८ ॥
क्षिप्यमाण स्ववैगुण्याद्रस सज्जति यत्र स ॥
तस्मिन्विकार कुरुते खे वर्षमिव तोयद ॥ ६९ ॥
दोषाणामपि चैव स्यादेकदेशप्रकोपनम् ॥
अन्नभौतिकधात्वग्निकर्मेति परिभाषितम् ॥ ७० ॥
अन्नस्य पक्ता सर्वेषा पक्तृणामधिको मत ॥

समोऽग्निर्विषमस्तीक्ष्णो मन्दश्चैवं चतुर्विधः ॥
यः पचेत्सम्यगेवान्नं भुक्तं सम्यक्समस्त्वसौ ॥ ७४ ॥
विषमोऽसम्यगप्याशु सम्यक्वापि चिरात्पचेत् ॥
तीक्ष्णो वह्निः पचेच्छीघ्रमसम्यगपि भोजनम् ॥ ७५ ॥
मन्दस्तु सम्यगप्यन्नमुपयुक्तं चिरात्पचेत् ॥
कृत्वाऽऽस्यशोषाटोपान्त्रकूजनाऽऽध्मानगौरवम् ॥ ७६ ॥
सहजं कालजं युक्तिकृतं देहबलं त्रिधा ॥
तत्र सत्त्वशरीरोत्थं प्राकृतं सहजं बलम् ॥ ७७ ॥
वयस्कृतमृतूत्थं च कालजं युक्तिजं पुनः ॥
विहाराहारजनितं तथोर्जस्करयोगजम् ॥ ७८ ॥
देशोऽल्पवारिद्रुनगो जांगलः स्वल्परोगदः ॥
आनूपो विपरीतोऽस्मात्समः साधारणः स्मृतः ॥ ७९ ॥
मज्जमेदोवसामूत्रपित्तश्लेष्मशकृन्त्यसृक् ॥ ८० ॥
रसो जलं च देहेऽस्मिन्नेकैकाञ्जलिवर्द्धितम् ॥
पृथक् स्वप्नसृतं प्रोक्तमोजोमस्तिष्करेतसाम् ॥ ८१ ॥
द्वावञ्जली तु स्तन्यस्य चत्वारो रजसः स्त्रियाः ॥
पधातोरिदं मानं विद्याद्वृद्धिक्षयावतः ॥ ८२ ॥
पा।
किंद्दं रुग्गर्भिणीभोज्यचेष्टागर्भाशयर्तुषु ॥
तत्राच्छंशोऽधिकस्तेन प्रकृतिः सप्तधोदिता ॥ ८३ ॥
सारस्तु सप्तकारित्वाद्बलित्वादन्यकोपनात् ॥
रसाद्रक्तं ततात्वाद्दोषाणां प्रबलोऽनिलः ॥ ८४ ॥

प्रायोऽत एव पवनाध्युषिता मनुष्या
दोषात्मकाः स्फुटितधूसरकेशगात्राः ॥
शीतद्विषश्चलधृतिस्मृतिबुद्धिचेष्टा-
सौहार्ददृष्टिगतयोऽतिबहुप्रलापाः ॥ ८५ ॥
अल्पपित्तबलजीवितनिद्राः
सन्नसक्तचलजर्जरवाचः ॥
नास्तिका बहुभुजः सविलासा
गीतहासमृगयाकलिलोलाः ॥ ८६ ॥
मधुराम्लपटूष्णसात्म्यकाङ्क्षाः
कृशदीर्घाकृतयः सशब्दयाताः ॥
न दृढा न जितेन्द्रिया न चार्या
न च कान्तादयिता बहुप्रजा वा ॥ ८७ ॥
नेत्राणि चैषां खरधूसराणि
वृत्तान्यचारूणि मृतोपमानि ॥
उन्मीलितानीव भवन्तिसुप्ते
शैलद्रुमास्ते गगनं च यान्ति ॥ ८८ ॥
अधन्या मत्सरा ध्माताः स्तेनाः प्रोद्बद्धपिण्डिकाः ॥
श्वशृगालोष्ट्रगृध्राखुकाकानूकाश्च वातिकाः ॥ ८९ ॥
पित्तं वह्निर्वह्निजं वा यदस्मा-
त्पित्तोद्रिक्तस्तीक्ष्णतृष्णाबुभुक्षः ॥
गौरोष्णाङ्गस्ताम्रहस्ताङ्घ्रिवक्त्रः
शूरो मानी पिङ्गकेशोल्परोमा ॥ ९० ॥

दयितमाल्यविलेपनमण्डनः
सुचरितः शुचिराश्रितवत्सलः ॥
विभवसाहसबुद्धिबलान्वितो
भवति भीषुगतिर्द्विषतामपि ॥ ९१ ॥
मेधावी प्रशिथिलसन्धिबन्धमांसो
नारीणामनभिमतोऽल्पशुक्रकामः ॥
आवासः पलिततरङ्गनीलिकानां
भुंक्तेऽन्नं मधुरकषायतिक्तशीतम् ॥ ९२ ॥
धर्मद्वेषी स्वेदनः पूतिगन्धि-
र्भूर्युच्चारक्रोधपा नाशनेर्ष्यः ॥
सुप्तः पश्येत्कर्णिकारान्पलाशा-
न्दिग्दाहोल्काविद्युदर्कानलांश्च ॥ ९३ ॥
तनूनि पिङ्गानि चलानिचैषां
तन्वल्पपक्ष्माणि हिमप्रियाणि ॥
क्रोधेन मद्येन रवेश्च भासा
रागं व्रजन्त्याशु विलोचनानि ॥ ९४ ॥
मध्यायुषो मध्यबलाः पण्डिताः क्लेशभीरवः ॥
व्याघ्रर्क्षकपिमार्जारयक्षानूकाश्च पैत्तिकाः ॥ ९५ ॥
श्लेष्मा सोमः श्लेस्मलस्तेनसौम्यो
गूढस्निग्धाश्लिष्टसन्ध्यस्थिमांसः ॥
क्षुत्तृड्दुःखक्लेशधर्मैरतप्तो
बुद्ध्यायुक्तः सात्त्विकः सत्यसन्धः ॥ ९६ ॥

प्रियङ्गुदूर्वाशरकाण्डशस्त्रगोरोचनापद्मसुवर्णवर्ण. ॥
प्रलम्ववाहु. पृथुपीनवक्षा महाललाटो घननीलकेश. ॥९७॥

मृदङ्ग' समसुविभक्तचारुवर्ष्मा
वह्वोजोरतिरसशुक्रपुत्रभृत्य. ॥
धर्म्मात्मा वदति न निष्ठुरं च जातु
प्रच्छन्न वहति दृढं चिर च वैरम्॥ ९८ ॥

समदद्विरदेन्द्रतुल्ययातो
जलदाम्भोधिमृदङ्गसिंहघोष' ॥
स्मृतिमानभियोगवान् विनीतो
न च वाल्येऽप्यतिरोदनो न लोल ॥ ९९ ॥

तिक्त कषाय कटुकोष्णरूक्ष-
मल्प स भुङ्क्ते वलवास्तथापि ॥
रक्तान्तसुस्निग्धविशालदीर्घ-
सुव्यक्तशुक्लासितपक्ष्मलाक्ष' ॥ १०० ॥

अल्पव्याहारक्रोधपानाशनेर्ष्य
प्राज्यायुर्वित्तो दीर्घदर्शी वदान्य ॥
श्राद्धो गम्भीर स्थूललक्षः क्षमावा-
नार्यो निद्रालुर्दीर्घसूत्र. कृतज्ञ ॥१०१॥

ऋजुर्विपश्चित्सुभग. सलज्जो
भक्तो गुरूणा स्थिरसौहृदश्च ॥
स्वप्ने सपद्मान्सविहङ्गमाला
स्तोयाशयान्पश्यति तोयदाश्च ॥ १०२ ॥

ब्रह्मरुद्रेन्द्रवरुणतार्क्ष्यहंसगजाधिपैः ॥
श्लेष्मप्रकृतयस्तुल्यास्तथा सिंहाऽश्वगोवृषैः ॥ १०३ ॥
प्रकृतीर्द्वयसर्वोत्था द्वन्द्वसर्वगुणोदये ॥
शौचास्तिक्यादिभिश्चैवं गुणैर्गुणमयीं वदेत् ॥ १०४ ॥
वयस्त्वाषोडशाद्बालं तत्र धात्विन्द्रियौजसाम् ॥
वृद्धिरासप्ततेर्मध्यं तत्रावृद्धिः परं क्षयः ॥ १०५ ॥
स्वं स्वं हस्तत्रयं सार्द्धं वपुः पात्रं सुखायुषोः ॥
न च यद्युक्तमुद्रिक्तैरष्टाभिर्निन्दितैर्निजैः ॥ १०६ ॥
अरोमशासितस्थूलदीर्घत्वैः सविपर्ययैः ॥
सुस्निग्धा मृदवः सूक्ष्मा नैकमूलाः स्थिराः कचाः॥१०७॥
ललाटमुन्नतं श्लिष्टशङ्खमर्द्धेन्दुसन्निभम् ॥
कर्णौ नीचोन्नतौ पश्चान्महान्तौ श्लिष्टमांसलौ ॥१०८॥
नेत्रे व्यक्तासितसिते सुबद्धे घनपक्ष्मणी ॥
उन्नताग्रा महोच्छ्वासा पीनर्जुर्नासिका समा ॥ १०९ ॥
ओष्ठौ रक्तावनुद्वृत्तौ महत्यौ नोल्बणे हनू ॥
महदास्यं घना दन्ताः स्निग्धाः श्लक्ष्णाःसिताः समाः ॥११०॥
जिह्वा रक्तायता तन्वी मांसलं चिबुकं महत् ॥
ग्रीवा ह्रस्वा घना वृत्ता स्कन्धावुन्नतपीवरौ ॥ १११ ॥
उदरं दक्षिणावर्त्तगूढनाभि समुन्नतम् ॥
तनुरक्तोन्नतनखं स्निग्धमाताम्रमांसलम् ॥ ११२ ॥
दीर्घाच्छिद्राङ्गुलि महत्पाणिपादं प्रतिष्ठितम् ॥
गूढवंशं बृहत्पृष्ठं निगूढाः सन्धयो दृढाः ॥ ११३ ॥

धीरः स्वरोऽनुनादी च वर्णः स्निग्धः स्थिरप्रभः ॥
स्वभावजं स्थिरं सत्त्वमविकारि विपत्स्वपि ॥ ११४ ॥
उत्तरोत्तरसुक्षेत्रं वपुर्गर्भादिनीरुजम् ॥
आयासज्ञानविज्ञानैर्वर्द्धमानं शनैः शुभम् ॥ ११५ ॥
इति सर्वगुणोपेते शरीरे शरदां शतम् ॥
आयुरैश्वर्यमिष्टाश्च सर्वेभावा प्रतिष्ठिताः ॥ ११६ ॥
त्वग्रक्तादीनि सत्त्वान्तान्यग्राण्यष्टौ यथोत्तरम् ॥
बलप्रमाणज्ञानार्थं साराण्युक्तानि देहिनाम् ॥ ११७ ॥
सारैरुपेतः सर्वैः स्यात्परं गौरवसंयुतः ॥
सर्वारम्भेषु चाशावान्सहिष्णुः सन्मतिः स्थिरः ॥११८॥
अनुत्सेकमदैन्यं च सुखं दुःखं च सेवते ॥
सत्त्ववांस्तप्यमानस्तु राजसो नैव तामसः ॥ ११९ ॥
दानशीलदयासत्यब्रह्मचर्यकृतज्ञता ॥
रसायनानि मैत्री च पुण्यायुर्वृद्धिकृद्गुणः ॥ १२० ॥

इत्यष्टाङ्गहृदयसंहितायां शारीरस्थाने तृतीयोऽध्यायः ॥ ३ ॥

## चतुर्थोऽध्यायः ।



अथातो मर्मविभागं शारीरं व्याख्यास्यामः ।
सप्तोत्तरं मर्मशतं तेषामेकादशादिशेत् ॥
पृथक्सक्थ्नोस्तथा बाह्वोस्त्रीणि कोष्ठे नवोरसि ॥ १ ॥

पृष्ठे चतुर्दशोर्ध्वं तु जत्रोस्त्रिंशच्च सप्त च ॥
मध्ये पादतलस्याहुरभितो मध्यमाङ्गुलिम् ॥ २ ॥
तलहृन्नाम रुजया तत्र विद्धस्य पञ्चता ॥
अङ्गुष्ठाङ्गुलिमध्यस्थं क्षिप्रमाक्षेपमारणम् ॥ ३ ॥
तस्योर्ध्वं द्व्यङ्गुले कूर्चः पादभ्रमणकम्पकृत् ॥
गुल्फसन्धेरधः कूर्चशिरःशोफरुजाकरम् ॥ ४ ॥
जंघाचरणयोः सन्धौ गुल्फोरुक्स्तम्भमान्द्यकृत् ॥
जंघान्तरे त्विन्द्रबस्तिर्मारयत्यसृजःक्षयात् ॥ ५ ॥
जंघोर्वोः संगमे जानुखञ्जता तत्र जीवतः ॥
जानुनस्त्र्यंगुलादूर्द्ध्वमण्यूरुस्तम्भशोफकृत् ॥ ६ ॥
उर्व्यूरुमध्ये तद्वेधात्साक्थिशोषोऽस्त्रसंक्षयात् ॥
ऊरुमूले लोहिताख्यंहन्ति पक्षमसृक्क्षयात् ॥ ७ ॥
मुष्कवंक्षणयोर्मध्ये विटपंषण्ढताकरम् ॥
इति सक्थ्नोस्तथा बाह्वोर्मणिबन्धोऽत्रगुल्फवत् ॥ ८ ॥
कूर्परं जानुवत्कौण्यं तयोर्विटपवत्पुनः ॥
कक्षाक्षमध्ये कक्षाधृक्कुणित्वं तत्र जायते ॥ ९ ॥
स्थूलान्त्रबद्धः सद्योघ्नो विड्वातवमनो गुदः ॥
मूत्राशयो धनुर्वक्रो बस्तिरल्पास्त्रमांसगः ॥ १० ॥
एकोधोवदनो मध्ये कट्याः सद्यो निहन्त्यसून् ॥
ऋतेऽश्मरीव्रणाद्विद्धस्तत्राप्युभयतश्च सः ॥ ११ ॥
मूत्रस्राव्येकतो भिन्नो व्रणो रोहेच्च यत्नतः ॥
देहामपक्कस्थानानां मध्येसर्वशिराश्रयः ॥ १२ ॥

नाभि सोऽपि हि सद्योघ्नो द्वारमामाशयस्य च ॥
सत्वादिधाम हृदयं स्तनोर.कोष्ठमध्यगम् ॥ १३ ॥
स्तनरोहितमूलाख्ये द्व्यंगुले स्तनयोर्वदेत् ॥
ऊर्ध्वाधोऽस्रकफापूर्णकोष्ठो नश्येत्तयो. क्रमात् ॥ १४ ॥
अपस्तम्भावुरःपार्श्वे नाड्यावनिलवाहिनी ॥
रक्तेन पूर्णकोष्ठोऽत्र श्वासात्कासाच्च नश्यति ॥ १५ ॥
पृष्ठवशोरसोर्मध्ये तयोरेव च पार्श्वयो. ॥
अधोऽसकूटयोर्विद्यादपालापारयमर्मणी ॥ १६ ॥
तयो. कोष्ठेऽसृजा पूर्णे नश्येद्यातेन पूयताम् ॥
पार्श्वयो. पृष्ठवशस्य श्रोणीकर्णौ प्रतिष्ठिते ॥ १७॥
वंशाश्रिते स्फिजोरूर्ध्वं कटीकतरुणे स्मृते ॥
तत्र रक्तक्षयात्पाण्डुर्हीनरूपो विनश्यति ॥ १८ ॥
पृष्ठवंश ह्युभयतो यौ सन्धी कटिपार्श्वयो. ॥
जघनस्य वहिर्भागे मर्मणी तौ कुकुन्दरौ ॥ १९ ॥
चेष्टाहानिरध काये स्पर्शाज्ञानं च तद्व्यधात् ॥
पार्श्वान्तरनिवद्धौ यावुपरि श्रोणिकर्णयो. ॥ २० ॥
आशयच्छादनौ तौ तु नितम्बौ तरुणास्थिगौ ॥
अध.शरीरे शोफोऽत्र दौर्वल्य मरणं तत. ॥ २१ ॥
पार्श्वान्तरनिवद्धौ च मध्ये जघनपार्श्वयो' ॥
तिर्यगूर्ध्वं च निर्दिष्टौ पार्श्वसन्धी तयोर्व्यधात् ॥ २२ ॥
रक्तपूरितकोष्ठस्य शरीरान्तरसम्भव ॥
स्तनमूलार्जवे भागे पृष्ठवंशाश्रये शिरे ॥ २३ ॥

बृहत्यौ तत्र विद्धस्य मरणं रक्तसंक्षयात् ॥
बाहुमूलाभिसम्बद्धे पृष्टवंशस्य पार्श्वयोः ॥२४ ॥
अंसयोः फलके बाहुस्वापशोषौ तयोर्व्यधात् ॥
ग्रीवामुभयतः स्नाव्नी ग्रीवाबाहुशिरोन्तरे ॥ २५ ॥
स्कन्धांसपीठसम्बन्धावंसौ बाहुक्रियाहरौ ॥
कण्ठनाडीमुभयतः शिराहनुसमाश्रिताः ॥ २६ ॥
चतस्रस्तासु नीले द्वे मन्ये द्वे मर्मणी स्मृते ॥
स्वरप्रणाशवैकृत्यं रसाज्ञानं च तद्व्यधे ॥ २७ ॥
कण्ठनाडीमुभयतो जिह्वानासागताः शिराः ॥
पृथक्चतस्रस्ताः सद्यो घ्नन्त्यसून्मातृकाह्वयाः ॥ २८ ॥
कृकाटिके शिरोग्रीवासन्धी तत्र चलं शिरः ॥
अधस्तात्कर्णयोर्निम्ने विधुरे श्रुतिहारिणी ॥ २९ ॥
फणावुभयतोघ्राणमार्गं श्रोत्रपथानुगौ ॥
अन्तर्गलस्थितौ वेधाद्गन्धविज्ञानहारिणौ ॥ ३० ॥
नेत्रयोर्बाह्यतोऽपाङ्गौ भ्रुवोः पुच्छान्तयोरधः ॥
तथोपरि भ्रुवोर्निम्नावावर्त्तावान्ध्यमेषु तु ॥ ३१ ॥
अनुकर्णं ललाटान्ते शङ्खौ सद्योविनाशनौ ॥
केशान्ते शङ्खयोरूर्ध्वमुत्क्षेपौ स्यपनी पुनः ॥ ३२ ॥
भ्रुवोर्मध्ये त्रयेऽप्यत्र शल्ये जीवेदनुद्धृते ॥
स्वयं वा पतिते पाकात्सद्यो नश्यति तूद्धृते ॥ ३३ ॥
जिह्वाक्षिनासिकाश्रोत्रखचतुष्टयसङ्गमे ॥
तालुन्यास्यानि चत्वारि स्रोतसां तेषु मर्मसु ॥ ३४ ॥

विद्ध. शृङ्गाटकाख्येषु सद्यस्त्यजति जीवितम् ॥
कपाले सन्धय. पञ्च सीमन्तास्तिर्यगूर्ध्वगा ॥ ३५ ॥
भ्रमोन्मादतमोनाशैस्तेषु विद्धेषु नश्यति ॥
आन्तरो मस्तकस्योर्ध्वं शिरासन्धिसमागम' ॥ ३६ ॥
रोमावर्तोऽधिपो नाम मर्म सद्यो हरत्यसून् ॥
विषमं स्पंदन यत्र पीडिते रुक् च मर्म तत् ॥ ३७ ॥
मासास्थिस्नायुधमनीशिरासन्धिसमागम. ॥
स्यान्मर्मेति च तेनाऽत्र सुतरा जीवितं स्थितम् ॥ ३८ ॥
वाहुल्येन तु निर्देशः षोढैव मर्मकल्पना ॥
प्राणायतनसामान्यादैक्य वा मर्मणा मतम् ॥ ३९ ॥
मासजानि दशेन्द्राख्यतलहृत्स्तनरोहिता. ॥
शक्रो कटीकतरुणे नितम्बावसयो फले ॥ ४० ॥
अस्थ्न्यष्टौ स्नावमर्माणि त्रयोविंशतिराणय' ॥
कूर्चकूर्चशिरोपागक्षिप्रोक्षेपासवस्तय. ॥ ४१ ॥
गुदोपस्तम्भविधुरशृगाटानि नवादिशेत् ॥
मर्माणि धमनीस्थानि सप्तत्रिंशच्छिराश्रया. ॥ ४२ ॥
बृहत्यौ मातृकानीले मन्ये कक्षाधरौ फणौ ॥
विटपे हृदय नाभि पार्श्वसधी स्तनान्तरे ॥ ४३ ॥
अपालापौ स्थपन्यूर्व्यश्चतस्रो लोहितानि च ॥
सन्धौ विंशतिरावर्तौ मणिबन्धौ कुकुन्दरौ ॥ ४४ ॥
सीमन्ता' कूर्परौ गुल्फौ कृकाट्यौ जानुनी पति. ॥
मांसमर्म गुदोऽन्येषा स्नाव्नी कक्षाधरौ तथा ॥ ४५ ॥

विटपौ विधुराख्ये च शृंगाटानि शिरासु तु ॥
अपस्तम्भावपागो च धमनीस्थं न तेः स्मृतम् ॥ ४६ ॥
विद्धेऽजस्रमसृक्स्रावो मासधावनवत्तनुः ॥
पाण्डुत्वमिन्द्रियाज्ञानं मरणं चाशु मांसजे ॥ ४७ ॥
मज्जान्वितोऽच्छो विच्छिन्नस्रावो रुक्चास्थिमर्मणि ॥
आयामाक्षेपकस्तम्भाः स्नायुजेभ्यधिकं रुजा ॥ ४८ ॥
यानस्थानासनाः शक्तिर्वैकल्यमथवान्तकः ॥
रक्तं सशब्दफेनोष्णं धमनीस्थे विचेतसः ॥ ४९ ॥
शिरामर्मव्यधे सान्द्रमजस्रं बहुसृक्स्रवेत् ॥
तत्क्षयात्तृड्भ्रमश्वासमोहहिध्माभिरन्तकः ॥ ५० ॥
वस्तु शूकैरिवाकीर्णं रूढे च कुणिखञ्जता ॥
वलचेष्टाक्षयः शोषः पर्वशोफश्च सन्धिजे ॥ ५१ ॥
नाभिशङ्खाधिपापानहृच्छृंगाटकवस्तयः ॥
अष्टौ च मातृकाः सद्यो निघ्नन्त्येकान्नविंशतिः ॥ ५२ ॥
सप्ताहः परमस्तेषांकालः कालस्य कर्षणे ॥
त्रयस्त्रिंशदपस्तम्भतलहृत्पार्श्वसन्धयः ॥ ५३ ॥
कटीतरुणसीमन्तस्तनमूलेन्द्रवस्तयः ॥
क्षिप्रापालापबृहतीनितंवस्तनरोहिताः ॥ ५४ ॥
कालान्तरप्राणहरामासमासार्द्धजीविताः ॥
उत्क्षेपो स्थपनी त्रीणि विशल्यघ्नानि तत्र हि ॥ ५५ ॥
वायुर्मांसवसामज्जमस्तुलुंगानि शोषयन् ॥
शल्यापायेविनिर्गच्छञ्छ्वासात्कासाच्च हन्त्यसून् ॥ ५६ ॥

फणावपाङ्गौ विधुरौ नीले मन्ये कृकाटिके ॥
असासफलकावर्तविटपोर्वीकुकुन्दरा. ॥ ५७ ॥
सजानुलोहिताख्याऽणिकक्षाधृक्कूर्चकूर्पराः ॥
वैकल्यमितिचत्वारि चत्वारिंशच्च कुर्वते ॥ ५८ ॥
हरन्ति तान्यपि प्राणान्कदाचिदभिघातत ॥
अष्टौ कूर्चशिरोगुल्फमणिबन्धा रुजाकरा ॥ ५९ ॥
तेषा विटपकक्षाधृगूर्व्य. कूर्चशिरांसि च ॥
द्वादशांगुलमानानि द्व्यङ्गुले मणिबन्धने ॥ ६० ॥
गुल्फौ च स्तनमूले च त्र्यङ्गुलौजानुकूर्परौ ॥
अपानबस्तिहृन्नाभिनीला सीमन्तमातृका ॥ ६१ ॥
कूर्चशृङ्गाटमन्याश्च त्रिंशदेकेन वर्जिता ॥
आत्मपाणितलोन्माना. शेषाण्यर्धाङ्गुल वदेत् ॥ ६२ ॥
पञ्चाशत्षट् च मर्माणि तिलव्रीहिसमान्यपि ॥
इष्टानि मर्माण्यन्येषा चतुर्धोक्ताः शिरास्तु या. ॥ ६३ ॥
तर्पयन्ति वपु कृत्स्न ता मर्माण्याश्रितास्तत. ॥
तत्क्षतात्क्षतजात्यर्थप्रवृत्तेर्धातुसंक्षये ॥ ६४ ॥
वृद्धश्चलो रुजस्तीव्रा. प्रतनोति समीरयन् ॥
तेजस्तदुद्धृतधत्ते तृष्णाशोपमदभ्रमान् ॥ ६५ ॥
स्विन्नस्रस्तश्लथतनुं हरत्येन ततोऽन्तक. ॥
वर्द्धयेत्सन्धितो गात्र मर्मणाभिहते द्रुतम् ॥ ६६ ॥
छेदनात्सन्धिदेशस्य सङ्कुचन्ति शिरा द्यतः ॥
जीवि० प्राणिना तत्र रक्ते तिष्ठति तिष्ठति ॥ ६७ ॥

सुविक्षतोऽप्यतो जीवेदमर्मणि न मर्मणि ॥
प्राणघातिनि जीवेत्तु कश्चिद्वैद्यगुणेन चेत् ॥ ६८ ॥
असम्यगभिघाताच्च सोऽपि वैकल्यमश्नुते ॥
तस्मात्क्षारविषाग्न्यादीन् यत्नान्मर्मसु वर्जयेत् ॥ ६९ ॥
मर्माभिघातः स्वल्पोऽपि प्रायशो बाधतेतराम् ॥
रोगा मर्माश्रितास्तद्वत्प्रक्रान्ता यत्नतोऽपि च ॥ ७० ॥

इत्यष्टाङ्गहृदयसंहितायां शारीरस्थाने चतुर्थोऽध्यायः ॥ ४ ॥

## पञ्चमोऽध्यायः ।

अथातो विकृतिविज्ञानीयं शारीरं व्याख्यास्यामः ।
पुष्पं फलस्य धूमोऽग्नेर्वर्षस्य जलदोदयः ॥
यथा भविष्यतो लिङ्गं रिष्टं मृत्योस्तथा ध्रुवम् ॥ १ ॥
अरिष्टं नास्ति मरणं दृष्टरिष्टं च जीवितम् ॥
अरिष्टे रिष्टविज्ञानं न च रिष्टेऽप्यनैपुणात् ॥ २ ॥
केचित्तु तद्विधत्याहुः स्थाय्यस्थायिविभेदतः ॥
दोषाणामपि बाहुल्याद्रिष्टाभासः समुद्भवेत् ॥ ३ ॥
स दोषाणांशमे शाम्येत्स्थाय्यवश्यन्तु मृत्यवे ॥
रूपेन्द्रियस्वरच्छायाप्रतिच्छायाक्रियादिषु ॥ ४ ॥
अन्येष्वपि च भावेषु प्राकृतेष्वनिमित्ततः ॥
विकृतिर्या समासेन रिष्टं तदिति लक्षयेत् ॥

हन्त्यसून् ॥ ५६ ॥

केशरोम निरभ्यङ्गं यस्याऽभ्यक्तमिवेक्ष्यते ॥
यस्यात्यर्थं चले नेत्रे स्तब्धान्तर्गतनिर्गते ॥ ६ ॥
जिह्मे विस्तृतसंक्षिप्ते संक्षिप्तविनतभ्रुणी ॥
उद्भ्रान्तदर्शने हीनदर्शने नकुलोपमे ॥ ७॥
कपोताभे अलाताभे स्रुते लुलितपक्ष्मणी ॥
नासिकाऽत्यर्थविवृता संवृता पिटिकाचिता ॥ ८ ॥
उच्छूनास्फुटिता म्लाना यस्यौष्ठो यात्यधोऽधर ॥
ऊर्द्ध्वं द्वितीयः स्याता वा पक्वजम्बूनिभावुभौ ॥ ९ ॥
दन्ता. सशर्करा श्यावास्ताम्रा पुष्पितपङ्किता· ॥
सहसैव पतेयुर्वा जिह्वा जिह्मा विसर्पिणी ॥ १० ॥
श्वेता शुष्का गुरुः श्यावा लिप्ता सुप्ता सकण्टका ॥
शिर. शिरोधरा वोढुं पृष्ठं वा भारमात्मनः ॥ ११ ॥
हनू वा पिण्डमास्यस्थ शक्नुवन्ति न यस्य च॥
यस्यानिमित्तमगानि गुरूण्यतिलघूनि वा ॥ १२ ॥
विषदोषाद्विना यस्य खेभ्यो रक्त प्रवर्त्तते ॥
उत्सिक्तं मेहन यस्य वृषणावतिनिःसृतौ ॥ १३ ॥
अतोऽन्यथा वा यस्य स्यात्सर्वे ते कालचोदिताः ॥
यस्याऽपूर्वा शिरालेखा बालेन्द्वाकृतयोऽपि वा ॥ १४ ॥
ललाटे वस्तिशीर्षे वा षण्मासान्न स जीवति ॥
पद्मिनीपत्रवत्तोयशरीरे यस्य देहिन ॥ १५ ॥
प्लवते प्लुवमानस्य षण्मास तस्य जीवितम् ॥
हरिताभाः शिरा यस्य रोमकूपाश्च संवृताः ॥ १६ ॥

सोऽम्लाभिलाषी पुरुषः पित्तान्मरणमश्नुते ॥
यस्य गोमयचूर्णाभंचूर्णं मूर्ध्नि मुखेऽपि वा ॥ १७ ॥
सस्नेहं मूर्ध्नि धूमो वा मासान्तं तस्य जीवितम् ॥
मूर्ध्नि भ्रुवोर्वा कुर्वन्ति सीमन्तावर्त्तकानवाः ॥ १८ ॥
मृत्युं स्वस्थस्य षड्रात्रात्त्रिरात्रादातुरस्य तु ॥
जिह्वा श्यावा मुखं पूति सव्यमक्षि निमज्जति ॥ १९ ॥
खगा वा मूर्ध्नि लीयन्ते यस्य तं परिवर्जयेत् ॥
यस्य स्नातानुलिप्तस्य पूर्वं शुष्यत्युरो भृशम् ॥ २० ॥
आर्द्रेषु सर्वगात्रेषु सोऽर्द्धमासं न जीवति ॥
अकस्माद्युगपद्गात्रे वर्णौ प्राकृतवैकृतौ ॥ २१ ॥
तथैवोपचयग्लानिरौक्ष्यस्नेहादि मृत्यवे ॥
यस्य स्फुटेयुरंगुल्यो नाकृष्टा न स जीवति ॥ २२ ॥
क्षवकासादिषु तथा यस्याऽपूर्वो ध्वनिर्भवेत् ॥
ह्रस्वो दीर्घोऽति वोच्छ्वासः पूतिः सुरभिरेव वा ॥ २३ ॥
आप्लुतानाप्लुते काये यस्य गन्धोऽतिमानुषः ॥
मलवस्त्रव्रणादौ वा वर्षान्तं तस्य जीवितम् ॥ २४ ॥
भजन्तेऽत्यङ्गसौरस्याद्यं यूकामक्षिकादयः ॥
त्यजन्ति वाऽतिवैरस्यात्सोऽपि वर्षं न जीवति ॥ २५ ॥
सततोष्मसु गात्रेषु शैत्यं यस्योपलक्ष्यते ॥
शीतेषु भृशमौष्ण्यं वा स्वेदः स्तम्भोऽप्यहेतुकः ॥ २६ ॥
यो जातशीतपिटिकः शीताङ्गो वा विदह्यते ॥
उष्णद्वेषी च शीतार्त्तः स प्रेताधिपगोचरः ॥ २७ ॥

उरस्यूष्मा भवेद्यस्य जठरे चातिशीतता ॥
भिन्न पुरीष तृष्णा च यथा प्रेतस्तथैव स. ॥ २८ ॥
मूत्र पुरीषं निष्ठ्यूत शुक्र वाप्सु निमज्जति ॥
निष्ठ्यूत वहुवर्णं वा यस्य मासात्स नश्यति ॥ २९ ॥
घनीभूतमिवाकाशमाकाशमिव यो घनम् ॥
अमूर्त्तमिव मूर्त्तञ्च मूर्त्त चाऽमूर्त्तवत्स्थितम् ॥ ३० ॥
तेजस्यतेजस्तद्वच्च शुक्लं कृष्णमसच्च सत् ॥
अनेत्ररोगश्चन्द्रं च वहुरूपमलाञ्छनम् ॥ ३१ ॥
जाग्रद्रक्षासि गन्धर्वान्प्रेतानन्याश्च तद्विधान् ॥
रूप व्याकृति तद्वच्च य पश्यति स नश्यति ॥ ३२ ॥
सप्तर्षीणा समीपस्था यो न पश्यत्यरुन्धतीम् ॥
ध्रुवमाकाशगङ्गा वा न स पश्यति ता समाम् ॥ ३३ ॥
मेघतोयौघनिर्घोषवीणापणववेणुजान् ॥
शृणोत्यन्याश्च य शब्दानसतो न सतोऽपि वा ॥ ३४ ॥
निष्पीड्य कर्णौ शृणुयान्न यो धुकधुकस्वनम् ॥
तद्वद्गन्धरसस्पर्शान्मन्यते यो विपर्ययात् ॥ ३५ ॥
सर्वशो वा न यो यश्च दीपगन्ध न जिघ्रति ॥
विधिना यस्य दोषाय स्वास्थ्यायाविधिना रसा. ॥३६॥
य' पासुनेव कीर्णाङ्गो योऽङ्गघात न वेत्ति वा ॥
अन्तरेण तपस्तीव्र योग वा विधिपूर्वकम् ॥ ३७ ॥
जानात्यतीन्द्रियं यश्च तेषा मरणमादिशेत् ॥
हीनो दीन. स्वरोऽव्यक्तो यस्य स्याद्गद्गदोऽपि वा ॥ ३८ ॥

सहसा यो विमुह्येद्वा विवक्षुर्न स जीवति ॥
स्वरस्य दुर्बली भावं हानिं वा बलवर्णयोः ॥ ३९ ॥
रोगवृद्धिमयुक्त्या च दृष्ट्वा मरणमादिशेत् ॥
अपस्वरं भाषमाणं प्राप्तं मरणमात्मनः ॥ ४० ॥
श्रोतारं चास्य शब्दस्य दूरतः परिवर्जयेत् ॥
संस्थानेन प्रमाणेन वर्णेन प्रभयाऽपि वा ॥ ४१ ॥
छाया विवर्त्तते यस्य स्वप्नेऽपि प्रेत एव सः ॥
आतपादर्शतोयादौ या संस्थानप्रमाणतः ॥ ४२ ॥
छायाऽङ्गात्सम्भवत्युक्ता प्रतिच्छायेति सा पुनः ॥
वर्णप्रभाश्रया यातु सा छायैव शरीरगा ॥ ४३ ॥
भवेद्यस्य प्रतिच्छाया च्छिन्नाभिन्नाऽधिकाऽकुला ॥
विशिरा द्विशिरा जिह्मा विकृता यदिवाऽन्यथा ॥ ४४ ॥
तं समाप्तायुषं विद्यान्न चेल्लक्ष्यनिमित्तजा ॥
प्रतिच्छायामयी यस्य न चाक्षणीक्ष्येत कन्यका ॥ ४५ ॥
खादीनां पञ्च पञ्चानां छाया विविधलक्षणाः ॥
नाभसीनिर्मलाऽऽनीला सस्नेहा सप्रभेव च ॥ ४६ ॥
वाताद्रजोऽरुणा श्यावा भस्मरूक्षा हतप्रभा ॥
विशुद्धरक्ता त्वाग्नेयी दीप्ताभा दर्शनप्रिया ॥ ४७ ॥
शुद्धवैदूर्यविमला सुस्निग्धातोयजा सुखा ॥
स्थिरा स्निग्धा घना शुद्धा श्यामा श्वेता च पार्थिवी॥४८॥
वायवी रोगमरणक्लेशायान्याः सुखोदयाः ॥
प्रभोक्ता तैजसी सर्वा सा तु सप्तविधा स्मृता ॥ ४९ ॥

रक्ता पीता सिता श्यामा हरिता पाण्डुरा सिता ॥
तासा या. स्युर्विकासिन्य. स्निग्धाश्च विमलाश्च या ॥५०॥
ता. शुभा मलिना रूक्षा सक्षिप्ताश्चासुखोदयाः ॥
वर्णमाक्रामतिच्छाया प्रभावर्णप्रकाशिनी ॥ ५१ ॥
आसन्ने लक्ष्यते छाया विकृष्टे भा प्रकाशते ॥
नाऽच्छायो नाऽप्रभ. कश्चिद्विशेपाश्चिह्नयन्ति तु ॥ ५२ ॥
नृणा शुभाशुभोत्पत्ति कालेच्छायासमाश्रयाः ॥
निकषन्निव य. पादौ च्युतास. परिसर्पति ॥ ५३ ॥
हीयते वलतः शश्वद्योऽन्नमश्नन्हित वहु ॥
योऽल्पाशी वहुविण्मूत्रो वह्वाशी चाल्पमूत्रविट् ॥ ५४ ॥
योऽल्पाशी वा कफेनार्त्तो दीर्घ श्वसिति चेष्टते ॥
दीर्घमुच्छ्वस्य यो ह्रस्व नि.श्वस्य परिताम्यति ॥ ५५ ॥
ह्रस्वश्च य प्रश्वसिति व्याविद्ध स्पन्दते भृशम् ॥
शिरो विक्षिपते कृच्छ्राद्योऽश्चयित्वा प्रपाणिकौ ॥ ५६ ॥
यो ललाटात्स्रुतस्वेदः श्लथसन्धानवन्धन ॥
उत्थाप्यमान' समुह्येद्यो वली दुर्वलोऽपि वा ॥ ५७ ॥
उत्तान एव स्वपिति यः पादौ विकरोति च ॥
शयनासनकुड्यादौ योऽसदेव जिघृक्षति ॥ ५८ ॥
अहास्यहासी समुह्यन् यो लेढि दशनच्छदौ ॥
उत्तरोष्ठ परिलिहन्फूत्कारांश्च करोति य' ॥ ५९ ॥
यमभिद्रवति च्छाया कृष्णा पीताऽरुणाऽपि वा ॥
भिषग्भेषजपानान्नगुरुमित्रद्विषश्च ये ॥
वशगा. सर्व एवैते विज्ञेयाः समवर्त्तिन' ॥ ६० ॥

ग्रीवाललाटहृदयं यस्य स्विद्यति शीतलम् ॥
उष्णोऽपरः प्रदेशश्च शरणं तस्य देवता ॥ ६१ ॥
योऽणुज्योतिरनेकाग्रो दुश्छायो दुर्मनाः सदा ॥
बलिं बलिभृतो यस्य प्रणीतं नोपभुञ्जते ॥ ६२ ॥
नीर्निमित्तश्च यो मेधां शोभामुपचयं श्रियम् ॥
प्राप्नोत्यतो वा विभ्रंशं स प्राप्नोति यमक्षयम् ॥ ६३ ॥
गुणदोषमयी यस्य स्वस्थस्य व्याधितस्य वा ॥
यात्यन्यथात्वं प्रकृतिः षण्मासान्न स जीवति ॥ ६४ ॥
भक्तिः शीलं स्मृतिस्त्यागो बुद्धिर्बलमहेतुकम् ॥
षडेतानि निवर्तन्ते षड्भिर्मासैर्मरिष्यतः ॥ ६५ ॥
मत्तवद्गतिवाक्कम्पमोहा मासान्मरिष्यतः ॥ ६६ ॥
नश्यत्यजानन्षडहात्केशलुञ्चनवेदनाम् ॥
न याति यस्य चाहारः कण्ठं कण्ठामयादृते ॥ ६७ ॥
प्रेष्याः प्रतीपतां यान्ति प्रेताकृतिरुदीर्यते ॥
यस्य निद्रा भवेन्नित्यं नैव वा न स जीवति ॥ ६८ ॥
वक्त्रमापूर्यतेऽश्रूणां स्विद्यतश्चरणौ भृशम् ॥
चक्षुश्चाकुलतां याति यमराज्यं गमिष्यतः ॥ ६९ ॥
यैः पुरा रमते भावैररतिस्तैर्न जीवति ॥
सहसा जायते यस्य विकारः सर्वलक्षणः ॥
निवर्तते वा सहसा सहसा स विनश्यति ॥ ७० ॥
ज्वरो निहन्ति बलवान्गम्भीरो दैर्घरात्रिकः ॥ ७१ ॥

स प्रलापभ्रमश्वासक्षीण शूनं हतानलम् ॥
अक्षामं सक्तवचन रक्ताक्षं हृदि शूलिनम् ॥ ७२ ॥
संशुष्ककासः पूर्वाह्ने योऽपराह्णेऽपि वा भवेत् ॥
वलमासविहीनस्य श्लेष्मकाससमन्वितः ॥ ७३ ॥
रक्तपित्तं भृशं रक्तं कृष्णमिन्द्रधनुःप्रभम् ॥
ताम्रहारिद्रहरितं रूपं रक्तं प्रदर्शयेत् ॥ ७४ ॥
रोमकूपप्रविसृतं कण्ठास्यहृदये सृजत् ॥
वाससो रञ्जनं पूति वेगवच्चातिभूरि च ॥ ७५ ॥
वृद्धं पाण्डुज्वरच्छर्दिकासशोफातिसारिणम् ॥
कासश्वासौ ज्वरच्छर्दितृष्णातीसारशोफिनम् ॥ ७६ ॥
यक्ष्मा पार्श्वरुजानाहरक्तच्छर्द्यंसतापिनम् ॥
छर्दिर्वेगवती मूत्रशकृद्गन्धि. सचन्द्रिका ॥ ७७ ॥
सास्राविट्पूयरुक्कासश्वासवत्यनुषङ्गिणी ॥
तृष्णान्यरोगक्षपितं बहिर्जिह्वं विचेतनम् ॥ ७८ ॥
मदात्ययोऽतिशीतार्त्तं क्षीण तैलप्रभाननम् ॥
अर्शांसि पाणिपन्नाभिगुदमुष्कास्यशोफिनम् ॥ ७९ ॥
हृत्पार्श्वांगरुजाच्छर्दिपायुपाकज्वरातुरम् ॥
अतीसारो यकृत्पिण्डमांसधावनमेचकैः ॥ ८० ॥
तुल्यस्तैलघृतक्षीरदधिमज्जवसासवै. ॥
मस्तुलुंगमषीपूयवेसवाराम्बुमाक्षिकैः ॥ ८१ ॥
अतिरक्तासितस्निग्धपूत्यच्छघनवेदन. ॥
कर्बुरः प्रस्रवन् धातून्निष्पुरीषोऽथवाऽतिविट् ॥ ८२ ॥

तन्तुमान् मक्षिकाक्रान्तो राजीमांश्चन्द्रकैर्युतः ॥
शीर्णपायुवलिं मुक्तनालं पर्वास्थिशूलिनम् ॥ ८३ ॥
स्रस्तपायुं बलक्षीणमन्नमेवोपवेशयेत् ॥
सतृट्श्वासज्वरच्छर्दिदाहानाहप्रवाहिकः ॥ ८४ ॥
अश्मरी शूनवृषणं बद्धमूत्रं रुजार्दितम् ॥
मेहस्तृड्दाहपिटिकामांसकोथातिसारिणम् ॥ ८५ ॥
पिटिकामर्महृत्पृष्ठस्तनांसगुदमूर्द्धगाः ॥
पर्वपादकरस्था वा मन्दोत्साहं प्रमेहिणम् ॥ ८६ ॥
सर्वैश्च मांससङ्कोचदाहतृष्णामदज्वरैः ॥
विसर्पमर्मसंरोधहिध्माश्वासभ्रमक्लमैः ॥ ८७ ॥
गुल्मः पृथुपरीणाहो घनः कूर्म इवोन्नतः ॥
शिरानद्धो ज्वरच्छर्दिहिध्माध्मानरुजान्वितः ॥ ८८ ॥
कासपीनसहृल्लासश्वासातीसारशोफवान् ॥
विण्मूत्रसंग्रहश्वासशोफहिध्माज्वरभ्रमैः ८९ ॥
मूर्च्छाच्छर्द्यतिसारैश्च जठरं हन्ति दुर्बलम् ॥
शूनाक्षं कुटिलोपस्थमुपक्लिन्नतनुत्वचम् ॥ ९० ॥
विरेचनहतानाहमानाह्यन्तं पुनः पुनः ॥
पाण्डुरोगः श्वयथुमान् पीताक्षिनखदर्शनम् ॥ ९१ ॥
तन्द्रादाहरुचिच्छर्दिमूर्च्छाध्मानातिसारवान् ॥
अनेकोपद्रवयुतः पादाभ्यां प्रसृतो नरम् ॥ ९२ ॥
नारीं शोफो मुखाद्धन्ति कुक्षिगुह्यादुभावपि ॥
राजीचित्रः [illegible]च्छर्दिज्वरश्वासातिसारिणम् ॥ ९३ ॥

ज्वरातिसारौ शोफान्ते श्वयथुर्वा तयो क्षये ॥
दुर्बलस्य विशेषेण जायन्तेऽन्ताय देहिनः ॥ ९४ ॥
श्वयथुर्यस्यपादस्थ. परिस्रस्ते च पिण्डिके ॥
सीदतः सक्थिनी चैव तं भिषक्परिवर्जयेत् ॥ ९५ ॥
आनन हस्तपाद च विशेषाद्यस्य शुष्यत. ॥
शूयेते वा विना देहात्स मासाद्याति पञ्चताम् ॥ ९६ ॥
विसर्प कासवैवर्ण्यज्वरमूर्च्छाङ्गभङ्गवान् ॥
भ्रमास्यशोषहृल्लासदेहसादातिसारवान् ॥ ९७ ॥
कुष्ठ विशीर्यमाणाङ्गं रक्तनेत्र हतस्वरम् ॥
मन्दाग्नि जन्तुभिर्जुष्टं हन्ति तृष्णातिसारिणम् ॥ ९८ ॥
वायुः सुप्तत्वच भग्न कफशोफरुजातुरम् ॥
वातास्रमोहमूर्च्छायमदस्वप्नज्वरान्वितम् ॥ ९९ ॥
शिरोग्रहारुचिश्वाससङ्कोचस्फोटकोथवत् ॥
शिरोरोगारुचिश्वासमोहविड्भेदतृड्भ्रमैः ॥ १०० ॥
घ्नन्ति सर्वामया' क्षीणस्वरधातुबलानलम् ॥
वातव्याधिरपस्मारी कुष्ठी रक्त्युदरी क्षयी ॥ १०१ ॥
गुल्मी मेही च तान्क्षीणान्विकारेऽल्पेऽपि वर्जयेत् ॥
बलमांसक्षयस्तीव्रो रोगवृद्धिररोचकः ॥ १०२ ॥
यस्यातुरस्य लक्ष्यन्ते त्रीन्पक्षान्न स जीवति ॥
वाताऽष्ठीलातिसवृद्धा तिष्ठन्तीदारुणा हृदि ॥ १०३ ॥
तृष्णया तु परीतस्य सद्यो मुष्णाति जीवितम् ॥
शैथिल्य पिण्डिके वायुर्नीत्वा नासा च जिह्मताम् ॥ १०४ ॥

क्षीणस्यायस्य मन्ये वा सद्यो मुष्णाति जीवितम् ॥
नाभीगुदान्तरं गत्वा वंक्षणौ वा समाश्रयन् ॥ १०५ ॥
गृहीत्वापायुहृदये क्षीणदेहस्य वा वली ॥
मलान् बस्तिशिरोनाभिं विबद्ध्य जनयन्रुजम् ॥१०६॥
कुर्वन्वंक्षणयोः शूलं तृष्णां भिन्नपुरीषताम् ॥
श्वासं वा जनयन्वायुर्गृहीत्वा गुदवंक्षणम् ॥ १०७ ॥
वितत्य पर्शुकाग्राणि गृहीत्वोरश्च मारुतः ॥
स्तिमितस्याततांक्षस्य सद्यो मुष्णाति जीवितम् ॥१०८॥
सहसा ज्वरसन्तापस्तृष्णा मूर्च्छा बलक्षयः ॥
विश्लेषणं च सन्धीनां मुमूर्षोरुपजायते ॥ १०९ ॥
गोसर्गे वदनाद्यस्य स्वेदः प्रच्यवते भृशम् ॥
लेपज्वरोपतप्तस्य दुर्लभं तस्य जीवितम् ॥ ११० ॥
प्रवालगुलिकाभासा यस्य गात्रे मसूरिकाः ॥
उत्पद्याशु विनश्यन्ति न चिरात्स विनश्यति ॥ १११ ॥
मसूरविदलप्रख्यास्तथा विद्रुमसन्निभाः ॥
अन्तर्वक्त्राः किणाभाश्च विस्फोटा देहनाशनाः ॥ ११२ ॥
कामलाऽक्ष्णोर्मुखं पूर्णं शङ्खयोर्मुक्तमांसता ॥
सन्त्रासश्चोष्णताऽङ्गे च यस्य तं परिवर्जयेत् ॥ ११३ ॥
अकस्मादनुधावच्च विघृष्टं त्वक्समाश्रयम् ॥
( चंदनोशीरमदिराकुणपध्वांक्षगंधयः ॥
शैवालकुक्कुटशिखाकुंदशालिमयप्रभा ॥
अंतर्दाहा निरूष्माणः प्राणनाशकरा व्रणाः ॥ १ ॥

क्षेपकः सार्धश्लोकोयम् ॥ )
यो वातजो न शूलायस्यान्न दाहाय पित्तज ॥ ११४ ॥
कफजो न च पूयाय मर्मजश्च रुजे न य ॥
अचूर्णश्चूर्णकीर्णाभो यत्राऽकस्माच्च दृश्यते ॥ ११५ ॥
रूपं शक्तिध्वजादीना सर्वांस्तान्वर्जयेद्व्रणान् ॥
विण्मूत्रमारुतवह कृमिलं च भगन्दरम् ॥ ११६ ॥
घट्टयञ्जानुना जानु पादावुद्यम्य पातयन् ॥
योऽपास्यति मुहुर्वक्रमारुतं न स जीवति ॥ ११७ ॥
दन्तैश्छिदन्नखाग्राणितैश्च केशास्तृणानि च ॥
भूमिं काष्ठेन विलिखँल्लोष्ठंलोष्ठेन ताडयन् ॥ ११८ ॥
हृष्टरोमा सान्द्रमूत्र शुष्ककासीज्वरी च य. ॥
मुहुर्हसन्मुहु' क्ष्वेडञ्छय्या पादेन हन्ति य. ॥ ११९ ॥
मुहुश्छिद्राणि विमृशन्नातुरो न स जीवति ॥
मृत्यवे सहसार्तस्य तिलकव्यङ्गविप्लव ॥ १२० ॥
मुखे दन्ते नखे पुष्प जठरे विविधा शिरा ॥
ऊर्ध्वश्वासं गतोष्माण शूलोपहतवक्षणम् ॥ १२१ ॥
शर्म वाऽनधिगच्छन्त बुद्धिमान्परिवर्जयेत् ॥
विकारा यस्य वर्द्धन्ते प्रकृति. परिहीयते ॥ १२२ ॥
सहसा सहसा तस्य मृत्युर्हरति जीवितम् ॥
यमुद्दिश्यातुर वैद्य. सम्पादयितुमौषधम् ॥ १२३ ॥
यतमानो न शक्नोति दुर्लभ तस्य जीवितम् ॥
विज्ञात वहुश. सिद्ध विधिवच्चावतारितम् ॥ १२४ ॥

न सिध्यत्यौषधं यस्य नास्ति तस्य चिकित्सितम् ॥
अवेद्यस्यौषधेऽन्ने वा कल्प्यमाने विपर्ययः ॥ १२५ ॥
अकस्माद्वर्णगन्धादेः स्वस्थोऽपि न स जीवति ॥
निवाते सेन्धनं यस्य ज्योतिश्चाप्युपशाम्यति ॥ १२६ ॥
आतुरस्य गृहे यस्य भिद्यन्तेवा पतन्ति वा ॥
अतिमात्रममत्राणिदुर्लभं तस्य जीवितम् ॥ १२७ ॥
यं नरं सहसा रोगो दुर्बलं परिमुञ्चति ॥
संशयं प्राप्तमात्रे यो जीवितं तस्य मन्यते ॥ १२८ ॥
कथयन्नैव पृष्टोऽपि दुःश्रवं मरणं भिषक् ॥
गतासोर्बन्धुमित्राणां न चेच्छेत्तं चिकित्सितुम् ॥१२९॥
यमदूतपिशाचाद्यैर्यत्परासुरुपास्यते ॥
घ्नद्भिरौषधवीर्याणि तस्मात्तं परिवर्जयेत् ॥ १३० ॥
आयुर्वेदफलं कृत्स्नं यदायुर्ज्ञे प्रतिष्ठितम् ॥
रिष्टज्ञानादृतस्तस्मात्सर्वदैव भवेद्भिषक् ॥ १३१ ॥
मरणं प्राणिनां दृष्टमायुः पुण्योभयक्षयात् ॥
तयोरप्यक्षयाद्दृष्टं विषमापरिहारिणाम् ॥ १३२ ॥

इत्यष्टाङ्गहृदयसंहिताया शारीरस्थाने पंचमोऽध्यायः ॥ ५ ॥

## षष्ठोऽध्यायः ।

अथातो दूतादिविज्ञानीयं शारीरं व्याख्यास्यामः ।
पाखण्डाश्रमवर्णानां सवर्णाः कर्मसिद्धये ॥
त एव विपरीताः स्युर्दूताः कर्मविपत्तये ॥ १ ॥

दीन भीत द्रुत त्रस्तं रूक्षामङ्गलवादिनम् ॥
शस्त्रिण दण्डिनं षण्ढं मुण्डश्मश्रु जटाधरम् ॥ २ ॥
अमङ्गलाह्वयं क्रूरकर्माण मलिन स्त्रियम् ॥
अनेकव्याधित व्यङ्गं रक्तमाल्यानुलेपनम् ॥ ३ ॥
तैलपङ्काङ्कितं जीर्णविवर्णार्द्रैकवाससम् ॥
खरोष्ट्रमाहिषारूढ काष्ठलोष्टादिमर्दिनम् ॥ ४ ॥
नानुगच्छेद्भिषग्दूतमाह्वयन्तं च दूरत. ॥
अशस्तचिन्तावचने नग्ने छिन्दति भिन्दति ॥ ५ ॥
जुह्वाने पावक पिण्डान्पितृभ्यो निर्वपत्यपि ॥
सुप्ते मुक्तकचेऽभ्यक्ते रुदत्यप्रयते तथा ॥ ६ ॥
वैद्ये दूता मनुष्याणामागच्छन्ति मुमूर्षताम् ॥
विकारसामान्यगुणे देशे कालेऽथ वा भिषक् ॥ ७ ॥
दूतमभ्यागत दृष्ट्वा नातुर तमुपाचरेत् ॥
स्पृशन्तौ नाभिनासास्यकेशरोमनखद्विजान् ॥ ८ ॥
गुह्यपृष्ठस्तनग्रीवाजठरानामिकागुली ॥
कार्पासवुससीमास्थिकपालमुशलोपलम् ॥ ९ ॥
मार्जनीशूर्पचैलान्तभस्माङ्गारदशातुषान् ॥
रज्जूपानत्तुलापाशमन्यद्वाभग्नविच्युतम् ॥ १० ॥
तत्पूर्वदर्शने दूता व्याहरन्ति मरिष्यताम् ॥
तथार्द्धरात्रे मध्याह्ने सन्ध्ययो. पूर्ववासरे ॥ ११ ॥
षष्ठीचतुर्थीनवमीराहुकेतूदयादिषु ॥
भरणीकृत्तिकाऽश्लेषापूर्वाऽऽर्द्रापैत्र्यनैर्ऋते ॥ १२ ॥

यस्मिंश्च दूते ब्रुवति वाक्यमातुरसंश्रयम् ॥
पश्येन्निमित्तमशुभं तं च नानुव्रजेद्भिषक् ॥ १३ ॥
तद्यथा विकलः प्रेतः प्रेतालङ्कार एव वा ॥
छिन्नं दग्धं विनष्टं वा तद्वादीनि वचांसि वा ॥ १४ ॥
रसो वा कटुकस्तीव्रो गन्धो वा कौणपो महान् ॥
स्पर्शो वा विपुलः क्रूरो यद्वान्यदपि तादृशम् ॥ १५ ॥
तत्सर्वमभितो वाक्यं वाक्यकालेऽथ वा पुनः ॥
दूतमभ्यागतं दृष्ट्वा नातुरं तमुपाचरेत् ॥ १६ ॥
हाहाक्रन्दितमुत्क्रुष्टं रुदितं स्खलनं क्षुतम् ॥
वस्त्रातपत्रपादत्रव्यसनं व्यसनेक्षणम् ॥ १७ ॥
चैत्यध्वजानां पात्राणां पूर्णानां च निमज्जनम् ॥
हतानिष्टप्रवादाश्च दूषणं भस्मपांसुभिः ॥ १८ ॥
पथश्छेदोऽहि मार्जारगोधासरठवानरैः ॥
दीप्तांप्रतिदिशं वाचं क्रूराणां मृगपक्षिणाम् ॥ १९ ॥
कृष्णधान्यगुडोदश्विल्लवणासवचर्मणाम् ॥
सर्षपाणावसातैलतृणपङ्केन्धनस्य च ॥ २० ॥
क्लीबक्रूरश्वपाकानां जालवागुरयोरपि ॥
छर्दितस्य पुरीषस्य पूतिदुर्दर्शनस्य च ॥ २१ ॥
निःसारस्य व्यवायस्य कार्पासादेररेरपि ॥
शयनासनयानानामुत्तानानां तु दर्शनम् ॥ २२ ॥
न्युब्जानामितरेषां च पात्रादीनामशोभनम् ॥
पुंसंज्ञाःपक्षिणो वामाः स्त्रीसंज्ञा दक्षिणाः शुभाः ॥२३॥

प्रदक्षिणं खगमृगा यान्तो नैवं श्वजम्बुका ॥
अयुग्माश्च मृगा शस्ता शस्ता नित्यं च दर्शने ॥२४॥
चाषभासभरद्वाजनकुलच्छागबर्हिण. ॥
अशुभ सर्वथोलूकबिडालसरठेक्षणम् ॥ २५॥
प्रशस्ता कीर्त्तने कोलगोधाहिशशजाहका. ॥
न दर्शने न विरुते वानरर्क्षावतोऽन्यथा ॥ २६ ॥
धनुरैन्द्र च लालाटमशुभ शुभमन्यत' ॥
अग्निपूर्णानि पात्राणि भिन्नानि विशिखानि च ॥ २७ ॥
दध्यक्षतानि निर्गच्छन्वक्ष्यमाण च सङ्कलम् ॥
वैद्यो मारिष्यता वेश्म प्रविशन्नेव पश्यति ॥ २८ ॥
दूताद्यसाधु दृष्ट्वैवं त्यजेदार्त्तमतोऽन्यथा ॥
करुणाशुद्धसन्तानो यत्नतः समुपाचरेत् ॥ २९ ॥
दध्यक्षतेक्षुनिष्पावप्रियंगुसधुसर्षिपाम् ॥
यावकाञ्जनभृङ्गारघण्टादीपसरोरुहाम् ॥ ३० ॥
दूर्वार्द्रसत्स्यमासाना लाजाना फलभक्षयो ॥
रत्नेभपूर्णकुम्भाना कन्याया. स्यन्दनस्य च ॥ ३१ ॥
नरस्य वर्द्धमानस्य देवताना नृपस्य च ॥
शुक्लानासुमनोवालचामराम्बरवाजिनाम् ॥ ३२ ॥
शखसाधुद्विजोष्णीपतोरणस्वस्तिकस्य च ॥
भूमे' समुद्धृतायाश्च वह्नेः प्रज्वलितस्य च ॥ ३३ ॥
मनोज्ञस्यान्नपानस्य पूर्णस्य शकटस्य च ॥
नृभिर्धेन्वा. सवत्साया वडवाया. स्त्रिया अपि ॥ ३४ ॥

जीवञ्जीवकसारङ्गसारसप्रियवादिनाम् ॥
रुचकादर्शसिद्धार्थरोचनानां च दर्शनम् ॥ ३५ ॥
गन्धः सुसुरभिर्वर्णः सुशुक्लोमधुरो रसः ॥
गोपतेरनुकूलस्य स्वरस्तद्वद्गवामपि ॥ ३६ ॥
मृगपक्षिनराणां च शोभिनां शोभना गिरः ॥
छत्रध्वजपताकानामुत्क्षेपणमभिष्टुतिः ॥ ३७ ॥
भेरीमृदंगशंखानां शब्दाःपुण्याहनिःस्वनाः ॥
वेदाध्ययनशब्दाश्च सुखो वायुः प्रदक्षिणः ॥ ३८ ॥
पथि वेश्मप्रवेशे च विद्यादारोग्यलक्षणम् ॥
इत्युक्तं दूतशकुनं स्वप्नानूर्द्ध्वं प्रचक्षते । ३९ ॥
स्वप्ने मद्यं सह प्रेतैर्यः पिबन्कृष्यते शुना ॥ ॥
स मर्त्यो मृत्युनाशीघ्रं ज्वररूपेण नीयते ॥ ४० ॥
रक्तमाल्यवपुर्वस्त्रो यो हसन्ह्रियते स्त्रिया ॥
सोऽस्रपित्तेन महिषश्ववराहोष्ट्रगर्दभैः ॥ ४१ ॥
यः प्रयाति दिशं याम्यां मरणं तस्य यक्ष्मणा ॥
लता कण्टकिनी वंशस्तालो वा हृदि जायते ॥ ४२ ॥
यस्य तस्याशु गुल्मेन यस्य वह्निमनर्चिषम् ॥
जुह्वतो घृतसिक्तस्य नग्नस्योरसि जायते ॥ ४३ ॥
पद्मं स नश्येत्कुष्ठेन चाण्डालैः सह यः पिबेत् ॥
स्नेहं बहुविधं स्वप्ने स प्रमेहेण नश्यति ॥ ४४ ॥
उन्मादेन जले मज्जेद्यो नृत्यन्राक्षसैः सह ॥
अपस्मारेण योमर्त्यो नृत्यन्प्रेतेन नीयते ॥ ४५ ॥

यान खरोष्ट्रमार्जारकपिशार्दूलसूकरै. ॥
यस्य प्रेतै· शृगालैर्वा स मृत्योर्वर्त्तते मुखे ॥ ४६ ॥
अपूपशष्कुलीर्जग्ध्वा विबुद्धस्तद्विध वमन् ॥
न जीवत्यक्षिरोगाय सूर्य्येन्दुग्रहणेक्षणम् ॥ ४७ ॥
सूर्य्याचन्द्रमसो पातदर्शन दृग्विनाशनम् ॥
मूर्ध्नि वशलतादीना सम्भवो वयसा तथा ॥ ४८ ॥
निलयोमुण्डता काकगृध्राद्यै. परिवारणम् ॥
तथा प्रेतपिशाचस्त्रीद्रविडान्ध्रगवाशनै ॥ ४९ ॥
सङ्गो वेत्रलतावंशतृणकण्टकसङ्कटे ॥
श्वभ्रश्मशानशयनं पतन पांसुभस्मनो· ॥ ५० ॥
मज्जन जलपङ्कादौ शीघ्रेण स्रोतसा हृति ॥
नृत्यवादित्रगीतानि रक्तस्रग्वस्त्रधारणम् ॥ ५१ ॥
वयोऽङ्गवृद्धिरभ्यङ्गो विवाह· श्मश्रुकर्म च ॥
पकान्नस्नेहमद्याश· प्रच्छर्दनविरेचने ॥ ५२ ॥
हिरण्यलोहयोर्लाभ कलिर्बन्धपराजयौ ॥
उपानद्युगनाशश्च प्रपात. पादचर्म्मणोः ॥ ५३ ॥
हर्षो भृशं प्रकुपितै पितृभिश्चावभर्त्सनम् ॥
प्रदीपग्रहनक्षत्रदन्तदैवतचक्षुषाम् ॥ ५४ ॥
पतन वा विनाशो वा भेदन पर्वतस्य च ॥
कानने रक्तकुसुमे पापकर्मनिवेशने ॥ ५५ ॥
चितान्धकारसम्बाधे जनन्याश्च प्रवेशनम् ॥
पात प्रासादशैलादेर्मत्स्येन ग्रसन तथा ॥ ५६ ॥

काषायिणामसौम्यानां नग्नानां दण्डधारिणाम् ॥
रक्ताक्षाणां च कृष्णानां दर्शनं जातु नेष्यते ॥ ५७ ॥
कृष्णा पापाननाचारा दीर्घकेशनखस्तनी ॥
विरागमाल्यवसना स्वप्नकालनिशा मता ॥ ५८ ॥
मनोवहानां पूर्णत्वात्स्रोतसां प्रबलैर्मलैः ॥
दृश्यन्ते दारुणाः स्वप्ना रोगी यैर्याति पञ्चताम् ॥ ५९ ॥
अरोगः संशयं प्राप्य कश्चिदेव विमुच्यते ॥
दृष्टः श्रुतोऽनुभूतश्च प्रार्थितः कल्पितस्तथा ॥ ६० ॥
भाविको दोषजश्चेति स्वप्नः सप्तविधो मतः ॥
तेष्वाद्या निष्फलाः पञ्च यथास्वं प्रकृतिर्दिवा ॥ ६१ ॥
विस्मृतो दीर्घह्रस्वोऽति पूर्वरात्रे चिरात्फलम् ॥ ६२ ॥
दृष्टः करोति तुच्छं च गोसर्गे तदहर्महत् ॥ ६३ ॥
निद्रया चानुपहतः प्रतीपैर्वचनैस्तथा ॥
याति पापोऽल्पफलतां दानहोमजपादिभिः ॥ ६४ ॥
अकल्याणमपि स्वप्नं दृष्ट्वा तत्रैव यः पुनः ॥
पश्येत्सौम्यं शुभं तस्य शुभमेव फलं भवेत् ॥ ६५ ॥
देवान्द्विजान्गोवृषभाञ्जीवतः सुहृदो नृपान् ॥
साधून्यशस्विनो वह्निमिद्धं स्वच्छाञ्जलाशयान् ॥ ६६ ॥
कन्यां कुमारकान्गौराञ्शुक्लवस्त्रान्सुतेजसः ॥
नराशनं दीप्ततनुं समन्ताद्रुधिरोक्षितः ॥ ६७ ॥
यः पश्येल्लभते यो वा छत्रादर्शविषामिषम् ॥
शुक्लाः सुमनसो वस्त्रममेध्यालेपनं फलम् ॥ ६८ ॥

शैलप्रासादसफलवृक्षसिंहनरद्विपान् ॥
आरोहेद्गोऽश्वयानं च तरेन्नदह्रदोदधीन् ॥ ६९ ॥
पूर्वोत्तरेण गमनमगम्यागमनं मृतम् ॥
सम्बाधान्नि सृतिर्देवै पितृभिश्चाभिनन्दनम् ॥ ७० ॥
रोदन पतितोत्थान द्विपतां चावमर्दनम् ॥
यस्य स्यादायुरारोग्यं वित्तं वहु च सोऽश्नुते ॥ ७१ ॥
मङ्गलाचारसम्पन्न' परिवारस्तथातुर' ॥
श्रद्दधानोऽनुकूलश्च प्रभूतद्रव्यसंग्रहः ॥ ७२ ॥
सत्त्वलक्षणसयोगो भक्तिर्वैद्यद्विजातिषु ॥
चिकित्सायामनिर्वेदस्तदारोग्यस्य लक्षणम् ॥ ७३ ॥
इत्यत्र जन्ममरणं यत' सम्यगुदाहृतम् ॥
शरीरस्य तत. स्थान शारीरमिदमुच्यते ॥ ७४ ॥

इति श्रीवैद्यपतिसिंहगुप्तसूनोर्वाग्भटस्य कृतावष्टाङ्गहृदयसंहिताया शारीरस्थान समाप्तमध्यायश्च षष्ठ ॥ ६ ॥

---

# ( निदानस्थानम् )

## प्रथमोऽध्याय. ।

अथात. सर्वरोगनिदान व्याख्यास्याम
इति ह स्माहुरात्रेयादयो महर्षय ॥
रोग पाप्मा ज्वरो व्याधिर्विकारो दु.खमामय. ॥ १ ॥

यक्ष्मातङ्कगदाबाधशब्दाः पर्यायवाचिनः ॥
निदानं पूर्वरूपाणि रूपाण्युपशयस्तथा ॥ २ ॥
सम्प्राप्तिश्चेति विज्ञानं रोगाणां पञ्चधा स्मृतम् ॥
निमित्तहेत्वायतनप्रत्ययोत्थानकारणैः ॥ ३ ॥
निदानमाहुः पर्यायैः प्राग्रूपं येन लक्ष्यते ॥
उत्पित्सुरामयो दोषविशेषेणानधिष्ठितः ॥ ४ ॥
लिङ्गमव्यक्तमल्पत्वाद्व्याधीनां तद्यथायथम् ॥
तदेव व्यक्ततां यातं रूपमित्यभिधीयते ॥ ५ ॥
संस्थानं व्यञ्जनं लिङ्गं लक्षणं चिह्नमाकृतिः ॥
हेतुव्याधिविपर्यस्तविपर्यस्तार्थकारिणाम् ॥ ६ ॥
औषधान्नविहाराणामुपयोगं सुखावहम् ॥
विद्यादुपशयं व्याधेः स हि सात्म्यमिति स्मृतः ॥ ७ ॥
विपरीतोऽनुपशयो व्याध्यसात्म्याभिसंज्ञितः ॥
यथा दुष्टेन दोषेण यथा चानुविसर्पता ॥ ८ ॥
निर्वृत्तिरामयस्यासौ सम्प्राप्तिर्जातिरागतिः ॥
संख्याविकल्पप्राधान्यबलकालविशेषतः ॥ ९ ॥
सा भिद्यते यथाऽत्रैव वक्ष्यन्तेऽष्टौ ज्वरा इति ॥
दोषाणां समवेतानां विकल्पोंऽशांशकल्पना ॥ १० ॥
स्वातन्त्र्यपारतन्त्र्याभ्यां व्याधेः प्राधान्यमादिशेत् ॥
हेत्वादिकार्त्स्न्यावयवैर्बलाबलविशेषणम् ॥ ११ ॥
नक्तन्दिनर्तुभुक्तांशैर्व्याधिकालो यथामलम् ॥
इति प्रोक्तो निदानार्थः स व्यासेनोपदेक्ष्यते ॥ १२ ॥

सर्वेषामेव रोगाणां निदानं कुपिता मलाः ॥
तत्प्रकोपस्य तु प्रोक्तं विविधाहितसेवनम् ॥ १३ ॥
अहितं त्रिविधो योगस्त्रयाणां प्रागुदाहृतः ॥
तिक्तोषणकषायाल्परूक्षप्रमितभोजनैः ॥ १४ ॥
धारणोदीरणनिशाजागरात्युच्चभाषणैः ॥
क्रियातियोगभीशोकचिन्ताव्यायाममैथुनैः ॥ १५ ॥
ग्रीष्माहोरात्रिभुक्तान्ते प्रकुप्यति समीरणः ॥
पित्तं कट्वम्लतीक्ष्णोष्णपटुक्रोधविदाहिभिः ॥ १६ ॥
शरन्मध्याह्नरात्र्यर्द्धविदाहसमयेषु च ॥
स्वाद्वम्ललवणस्निग्धगुर्वभिष्यन्दिशीतलैः ॥ १७ ॥
आस्यास्वप्नसुखाजीर्णदिवास्वप्नातिबृंहणैः ॥
प्रच्छर्दनाद्ययोगेन भुक्तमात्रवसन्तयोः ॥ १८ ॥
पूर्वाह्णे पूर्वरात्रे च श्लेष्मा द्वंद्वं तु संकरात् ॥
मिश्रीभावात्समस्तानां सन्निपातस्तथा पुनः ॥ १९ ॥
संकीर्णाजीर्णविषमविरुद्धाध्यशनादिभिः ॥
व्यापन्नमद्यपानीयशुष्कशाकाममूलकैः ॥ २० ॥
पिण्याकमृद्यवसुरापूतिशुष्ककृशामिषैः ॥
दोषत्रयकरैस्तैस्तैस्तथान्नपरिवर्त्तनैः ॥ २१ ॥
धातोर्दुष्टात्पुरोवाताद्ग्रहवेशाद्विषाद्गरात् ॥
दुष्टान्नात्पर्वताश्लेषाद् ग्रहैर्जन्मर्क्षपीडनात् ॥ २२ ॥
मिथ्यारोगाच्च विविधात्पापानाञ्च निषेवणात् ॥
स्त्रीणां प्रसववैषम्यात्तथा मिथ्योपचारतः ॥ २३ ॥

प्रतिरोगमितिक्रुद्धा रोगाधिष्ठानगामिनीः ॥
रसायनीः प्रपद्याशु दोषा देहे विकुर्वते ॥ २४ ॥

इत्यष्टाङ्गहृदयसहितायां शारीरस्थाने प्रथमोऽध्यायः ॥ १ ॥



## द्वितीयोऽध्यायः ।

अथातो ज्वरनिदानं व्याख्यास्यामः ।
ज्वरो रोगपतिः पाप्मा मृत्युरोजोऽशनोऽन्तकः ॥
क्रोधो दक्षाध्वरध्वंसी रुद्रोर्ध्वनयनोद्भवः ॥ १ ॥
जन्मान्तयोर्मोहमयः सन्तापात्माऽपचारजः ॥
विविधैर्नामभिः क्रूरो नानायोनिषुवर्त्तते ॥ २ ॥
स जायतेऽष्टधा दोषैः पृथग्मिश्रैः समागतैः ॥
आगन्तुश्च मलास्तत्र स्वैःस्वैर्दुष्टाः प्रदूषणैः ॥ ३ ॥
आमाशयं प्रविश्याममनुगम्य पिधाय च ॥
स्रोतांसि पक्तिस्थानाच्च निरस्य ज्वलनं बहिः ॥ ४ ॥
सह तेनाभिसर्पन्तस्तपन्तः सकलं वपुः ॥
कुर्वन्तो गात्रमत्युष्णं ज्वरं निर्वर्त्तयन्ति ते ॥ ५ ॥
स्रोतोविबन्धात्प्रायेण ततः स्वेदो न जायते ॥
तस्य प्राग्रूपमालस्यमरतिर्गात्रगौरवम् ॥ ६ ॥
आस्यवैरस्यमरुचिर्जृम्भा सास्राकुलाक्षता ॥
अङ्गमर्दोऽविपाकोऽल्पप्राणताबहुनिद्रता ॥ ७ ॥

रोमहर्षो विनमन पिण्डिकोद्वेष्टन क्लम ॥
हितोपदेशेष्वक्षान्तिः प्रीतिरम्लपटूपणे ॥ ८ ॥
द्वेषः स्वादुषु भक्ष्येषु तथा वालेषु तृड् भृशम् ॥
शब्दाग्निशीतवाताम्बुच्छायोष्णेष्वनिमित्तत ॥ ९ ॥
इच्छा द्वेषश्च तदनु ज्वरस्य व्यक्तता भवेत् ॥
आगमापगमक्षोभमृदुतावेदनोष्मणाम् ॥ १० ॥
वैषम्य तत्रतत्राङ्गे तारता स्युर्वेदनाश्चला ॥
पादयो सुप्तता स्तम्भ पिण्डिकोद्वेष्टन श्रम ॥ ११ ॥
विश्लेष इव सन्धीना साद ऊर्वो कटीग्रह ॥
पृष्ठ क्षोदमिवाप्नोति निष्पीड्यत इवोदरम्॥ १२ ॥
छिद्यन्त इव चास्थीनि पार्श्वगानि विशेषत ॥
हृदयस्य ग्रहस्तोद प्राजनेनेव वक्षसः ॥ १३ ॥
स्कन्धयोर्मथन वाह्वोर्भेद पीडनमंसयो ॥
अशक्तिर्भक्षणे हन्वोर्जृम्भणं कर्णयोः स्वन ॥ १४ ॥
निस्तोद शङ्खयोर्मूर्ध्नि वेदना विरसास्यता ॥
कषायास्यत्वमथवा मलानामप्रवर्तनम् ॥ १५ ॥
रूक्षारुणत्वगास्याक्षिनखमूत्रपुरीषता ॥
प्रसेकारोचकाश्रद्धाविपाकास्वेदजागरा ॥ १६ ॥
कण्ठोष्ठशोषतृट्शुष्कौ छर्दिकासौ विषादिता ॥
हर्षो रोमाङ्गदन्तेषु वेपथु क्षवथोर्ग्रहः ॥ १७ ॥

भ्रमः प्रलापो घर्मेच्छा विनामश्चानिलज्वरे ॥
युगपद्व्याप्तिरङ्गानां प्रलापः कटुवक्त्रता ॥ १८ ॥
नासास्यपाकः शीतेच्छा भ्रमो मूर्च्छा मदोऽरतिः ॥
विट्स्रंसः पित्तवमनं रक्तष्ठीवनमम्लकः ॥ १९ ॥
रक्तकोठोद्गमः पीतहरितत्वं त्वगादिषु ॥
स्वेदो निःश्वासवैगन्ध्यमतितृष्णा च पित्तजे ॥ २० ॥
विशेषादरुचिर्जाड्यं स्रोतोरोधोऽल्पवेगता ॥
प्रसेको मुखमाधुर्यं हृल्लेपश्वासपीनसाः ॥ २१ ॥
हृल्लासश्छर्दनं कासः स्तम्भः श्वैत्यं त्वगादिषु ॥
अङ्गेषु शीतपिटिकास्तन्द्रोदर्दः कफोद्भवे ॥ २२ ॥
काले यथास्वं सर्वेषां प्रवृत्तिर्वृद्धिरेव वा ॥
निदानोक्तानुपशयो विपरीतोपशायिता ॥
यथास्वलिङ्गसंसर्गे ज्वरः संसर्गजोऽपि च ॥ २३ ॥

शिरोऽर्त्तिमूर्च्छावमिदाहमो-
हकण्ठास्यशोषारतिपर्वभेदाः ॥
उन्निद्रतातृड्भ्रमरोमहर्षा
जृम्भातिवाक्त्वं च चलात्सपित्तात् ॥ २४ ॥
तापहान्यरुचिपर्वशिरोरुक्पी-
नसश्वसनकासविबन्धाः ॥
शीतजाड्यतिमिरभ्रमतन्द्राः
श्लेष्मवातजनितज्वरलिङ्गम् ॥ २५ ॥

शीतस्तम्भस्वेदवाहाव्यवस्था
स्तृष्णा कास श्लेष्मपित्तप्रवृत्ति. ॥
मोहस्तन्द्रालिप्ततिक्तास्यता
च ज्ञेय रूप श्लेष्मपित्तज्वरस्य ॥ २६ ॥

सर्वजो लक्षणे सर्वैर्दाहोऽत्र च मुहुर्मुहुः ॥
तद्वच्छीत महानिद्रा दिवा जागरण निशि ॥ २७ ॥
सदा वा नैव वा निद्रा महास्वेदोऽति नैव वा ॥
गीतनर्त्तनहास्यादिविकृतेहाप्रवर्त्तनम् ॥ २८ ॥
साश्रुणी कलुषे रक्ते भुग्ने लुलितपक्ष्मणी ॥
अक्षिणीपिण्डिकापार्श्वमूर्द्धपर्वास्थिरुग्भ्रम ॥ २९ ॥
सस्वनौ सरुजौ कर्णौ कण्ठ. शूकैरिवाचित ॥
परिदग्धा खरा जिह्वा गुरु स्रस्ताङ्गसन्धितम ॥ ३० ॥
रक्तपित्तकफष्ठीवो लोलन शिरसोऽतिरुक् ॥
कोष्ठाना श्यावरक्ताना मण्डलानाञ्च दर्शनम् ॥ ३१ ॥
हृद्व्यथा मलससर्गः प्रवृत्तिर्वाल्पशोऽति वा ॥
स्निग्धास्यतावलभ्रंश. स्वरसादः प्रलापता ॥ ३२ ॥
दोषपाकश्चिरात्तन्द्रा प्रतत कण्ठकूजनम् ॥
सन्निपातमभिन्यास तं ब्रूयाच्च हृतौजसम् ॥ ३३ ॥
दोषे विबद्धे नष्टेऽग्नौ सर्वसम्पूर्णलक्षणः ॥
असाध्य. सोऽन्यथा कृच्छ्रो भवेद्वैकल्यदोऽपि वा ॥३४॥
अन्यश्च सन्निपातोत्थो यत्र पित्त पृथक्स्थितम् ॥
त्वचि कोष्ठेऽथवा दाह विदधाति पुरोऽनु वा ॥ ३५ ॥

तद्वद्वातकफौ शीतंदाहादिर्दुस्तरस्तयोः ॥
शीतादौ तत्र पित्तेन कफे स्यन्दितशोषिते ॥ ३६ ॥
शीते शान्तेऽम्लको मूर्च्छा मदस्तृष्णा च जायते ॥
दाहादौ पुनरन्ते स्युस्तन्द्राष्ठीववमिक्लमाः ॥ ३७ ॥
आगन्तुरभिघाताभिषङ्गशापाभिचारतः ॥
चतुर्द्धाऽत्र क्षतच्छेददाहाद्यैरभिघातजः ॥ ३८ ॥
श्रमाच्च तस्मिन्पवनः प्रायोरक्तं प्रदूषयन् ॥
सव्यथाशोफवैवर्ण्यं सरुजं कुरुते ज्वरम् ॥ ३९ ॥
ग्रहावेशौषधिविषक्रोधभीशोककामजः ॥
अभिषङ्गाद् ग्रहेणास्मिन्नकस्माद्धासरोदने ॥ ४० ॥
औषधीगन्धजे मूर्च्छा शिरोरुग्वेपथुः क्षवः ॥
विषान्मूर्च्छातिसारास्यश्यावतादाहहृद्गदाः ॥ ४१ ॥
क्रोधात्कम्पः शिरोरुक्च प्रलापो भयशोकजे ॥
कामाद् भ्रमोऽरुचिर्दाहो ह्रीनिद्राधीधृतिक्षयः ॥ ४२ ॥
ग्रहादौ सान्निपातस्य भयादौ मरुतस्त्रये ॥
कोपः कोपेऽपि पित्तस्य यौ तु शापाभिचारजौ ॥ ४३ ॥
सन्निपातज्वरौ घोरौ तावसह्यतमौ मतौ ॥
तत्राभिचारिकैर्मन्त्रैर्हूयमानस्य तप्यते ॥ ४४ ॥
पूर्वं चेतस्ततो देहस्ततो विस्फोटतृड्भ्रमैः ॥
सदाहमूर्च्छैर्ग्रस्तस्य प्रत्यहं वर्धते ज्वरः ॥ ४५ ॥
इति ज्वरोऽष्टधा दृष्टः समासाद्द्विविधस्तु सः ॥
शारीरो मानसः सौम्यस्तीक्ष्णोऽन्तर्बहिराश्रयः ॥ ४६ ॥

प्राकृतो वैकृत. साध्योऽसाध्य. सामो निरामकः ॥
पूर्वं शरीरे शारीरे तापो मनसि मानसे ॥ ४७ ॥
पवने योगवाहित्वाच्छीतं श्लेष्मयुते भवेत् ॥
दाह. पित्तयुते मिश्रं मिश्रेऽन्तःसंश्रये पुन. ॥ ४८ ॥
ज्वरेऽधिकविकारा. स्युरन्त.क्षोभो मलग्रह. ॥
वहिरेव वहिर्वेगे तापोऽपि च सुसाध्यता ॥ ४९ ॥
वर्षाशरद्वसन्तेषु वाताद्यै प्राकृत क्रमात् ॥
वैकृतोऽन्य स दु साध्य. प्रायश्च प्राकृतोऽनिलात् ॥५०॥
वर्षासु मारुतो दुष्ट. पित्तश्लेष्मान्वितो ज्वरम् ॥
कुर्यात्पित्त च शरदि तस्य चानुवल कफ ॥५१॥
तत्प्रकृत्या विसर्गाच्च तत्र नानशनाद्भयम् ॥
कफो वसन्ते तमपि वातपित्त भवेदनु ॥ ५२ ॥
वलवत्स्वल्पदोषेषु ज्वर. साध्योऽनुपद्रव ॥
सर्वथा विकृतिज्ञाने प्रागसाध्य उदाहृत ॥ ५३ ॥
ज्वरोपद्रवतीक्ष्णत्वमग्लानिर्वहुमूत्रता ॥
न प्रवृत्तिर्न विड्जीर्णा न क्षुत्सामज्वराकृति ॥ ५४ ॥
ज्वरवेगोऽधिक तृष्णा प्रलाप श्वसन भ्रम ॥
मलप्रवृत्तिरुत्क्लेश पच्यमानस्य लक्षणम् ॥ ५५ ॥
जीर्णतामविपर्यासात्सप्तरात्र च लङ्घनात् ॥
ज्वर पञ्चविध' प्रोक्तो मलकालवलावलात् ॥ ५६ ॥
प्रायश सन्निपातेन भूयसा तूपदिश्यते ॥
सन्तत सततोन्येद्युस्तृतीयकचतुर्थकौ ॥ ५७ ॥

धातुमूत्रशकृद्वाहिस्रोतसां व्यापिनो मलाः ॥
तापयन्तस्तनुं सर्वां तुल्यदूष्यादिवर्धिताः ॥ ५८ ॥
बलिनो गुरवः स्तब्धा विशेषेण रसाश्रिताः ॥
सन्ततं निष्प्रतिद्वन्द्वा ज्वरं कुर्युः सुदुःसहम् ॥ ५९ ॥
मलं ज्वरोष्मा धातून्वा स शीघ्रं क्षपयेत्ततः ॥
सर्वाकारं रसादीनां शुद्ध्याऽशुद्ध्यापि वा क्रमात् ॥६०॥
वातपित्तकफैः सप्तदशद्वादशवासरान् ॥
प्रायोऽनुयाति मर्यादां मोक्षाय च वधाय च ॥ ६१ ॥
इत्यग्निवेशस्य मतं हारीतस्य पुनः स्मृतिः ॥
द्विगुणा सप्तमी यावन्नवम्येकादशी तथा ॥६२॥
एषा त्रिदोषमर्यादा मोक्षाय च वधाय च ॥
शुद्ध्यशुद्धौ ज्वरः कालं दीर्घमप्यनुवर्तते ॥ ६३ ॥
कृशानां व्याधिमुक्तानां मिथ्याहारादिसेविनाम् ॥
अल्पोऽपि दोषो दूष्यादेर्लब्ध्वान्यतमतो बलम् ॥६४॥
स विपक्षोऽज्वरं कुर्याद्विषमं क्षयवृद्धिभाक् ॥
दोषः प्रवर्तते तेषां स्वे काले ज्वरयन्बली ॥६५॥
निवर्तते पुनश्चैष प्रत्यनीकबलाबलः ॥
क्षीणे दोषे ज्वरः सूक्ष्मो रसादिष्वेवलीयते ॥ ६६ ॥
लीनत्वात्कार्श्यवैवर्ण्यजाड्यादीनादधाति सः ॥
आसन्नाविवृतास्यत्वात्स्रोतसां रसवाहिनाम् ॥६७॥
आशु सर्वस्य वपुषो व्याप्तिर्दोषेण जायते ॥
सन्ततः सततस्तेन विपरीतो विपर्ययात् ॥ ६८ ॥

विषमो विषमारम्भक्रियाकालोऽनुषङ्गवान् ॥
दोषो रक्ताश्रय प्राय' करोति सततं ज्वरम् ॥ ६९ ॥
अहोरात्रस्य स द्वि' स्यात्सकृदन्येद्युराश्रित ॥
तस्मिन्मासवहा नाडीर्मेदोनाडीस्तृतीयके ॥ ७० ॥
ग्राही पित्तानिलान्मूर्ध्नस्त्रिकस्य कफपित्तत'॥
सपृष्ठस्यानिलकफात्सचैकाहान्तर. स्मृत ॥ ७१ ॥
चतुर्थको मले मेदोमज्जास्थ्यन्यतमस्थिते ॥
मज्जस्थ एवेत्यपरे प्रभाव स तु दर्शयेत् ॥ ७२ ॥
द्विधा कफेन जङ्घाभ्या स पूर्वं शिरसोनिलात् ॥
अस्थिमज्जोभयगते चतुर्थकविपर्यय ॥ ७३ ॥
त्रिधा द्व्यह ज्वरयति दिनमेक तु मुञ्चति ॥
बलाबलेन दोषाणामन्नचेष्टादिजन्मना ॥ ७४ ॥
ज्वर स्यान्मनसस्तद्वत्कर्मणश्च तदा तदा ॥
दोषदूष्यर्त्वहोरात्रप्रभृतीना बलाज्ज्वर. ॥ ७५ ॥
मनसो विषयाणा च कालं तं तं प्रपद्यते ॥
धातून्प्रक्षोभयन्दोषो मोक्षकाले विलीयते ॥ ७६ ॥
ततो नर श्वसन्स्विद्यन्कूजन्वमति चेष्टते ॥
वेपते प्रलपत्युष्णै. शीतैश्चाङ्गैर्हतप्रभ. ॥ ७७ ॥
विसञ्ज्ञो ज्वरवेगार्त्त. स क्रोध इव वीक्ष्यते ॥
सदोषशब्द च शकृद्द्रवं सृजति वेगवत् ॥ ७८ ॥

देहो लघुर्व्यपगतक्लममोहतापः पाको-
मुखे करणसौष्ठवमव्यथत्वम् ॥
स्वेदः क्षवप्रकृतियोगि मनोऽन्नलिप्सा
कण्डूश्च मूर्ध्नि विगतज्वरलक्षणानि ॥ ७९ ॥

इत्यष्टाङ्गहृदयसंहितायां निदानस्थाने द्वितीयोऽध्यायः ॥ २ ॥

# तृतीयोऽध्यायः ।

अथातो रक्तपित्तकासनिदानं व्याख्यास्यामः ।
भृशोष्णतीक्ष्णकट्वम्ललवणादिविदाहिभिः ॥
कोद्रवोद्दालकैश्चान्नैस्तद्युक्तैरतिसेवितैः ॥ १ ॥
कुपितं पित्तलैः पित्तं द्रवं रक्तं च मूर्च्छिते ॥
ते मिथस्तुल्यरूपत्वमागम्य व्याप्नुतस्तनुम् ॥ २ ॥
पित्तं रक्तस्य विकृतेः संसर्गाद्दूषणादपि ॥
गन्धवर्णानुवृत्तेश्च रक्तेन व्यपदिश्यते ॥ ३ ॥
प्रभवत्यसृजःस्थानात्प्लीहतो यकृतश्च तत् ॥
शिरोगुरुत्वमरुचिः शीतेच्छा धूमकोऽम्लकः ॥ ४ ॥
छर्दिश्छर्दितबैभत्स्यं कासः श्वासो भ्रमः क्लमः ॥
लोहलोहितमत्स्यामगन्धास्यत्वं स्वरक्षयः ॥ ५ ॥
रक्तहारिद्रहरितवर्णता नयनादिषु ॥
नीललोहितपीतानां वर्णानामविवेचनम् ॥ ६ ॥

स्वप्ने तद्वर्णदर्शित्वं भवत्यस्मिन्भविष्यति ॥
ऊर्ध्वं नासाक्षिकर्णास्यैर्मेढ्रयोनिगुदैरधः ॥ ७ ॥
कुपितं रोमकूपैश्च समस्तैस्तत्प्रवर्त्तते ॥
ऊर्द्ध्वं साध्यं कफाद्यस्मात्तद्विरेचनसाधनम् ॥ ८ ॥
बह्वौषधं च पित्तस्य विरेको हि वरौषधम् ॥
अनुबन्धी कफो यश्च तत्र तस्यापि शुद्धिकृत् ॥ ९ ॥
कषाया स्वादवोऽप्यस्य विशुद्धश्लेष्मणो हिता ॥
किमु तिक्ता कषाया वा ये निसर्गात्कफापहा. ॥ १० ॥
अधो याप्यं चलाद्यस्मात्तत्प्रच्छर्दनसाधनम् ॥
अल्पौषधं च पित्तस्य वमनं न वरौषधम् ॥ ११ ॥
अनुबन्धी चलो यश्च शान्तयेपि न तस्य तत् ॥
कषायाश्च हितास्तस्य मधुरा एव केवलम् ॥ १२ ॥
कफमारुतसंसृष्टमसाध्यमुभयायनम् ॥
अशक्यप्रातिलोम्यत्वादभावादौषधस्य च ॥ १३ ॥
नहि संशोधनं किञ्चिदस्त्यस्य प्रतिलोमगम् ॥
शोधनं प्रतिलोमं च रक्तपित्ते भिषग्जितम् ॥१४॥
एवमेवोपशमनं सर्वशो नास्य विद्यते ॥
संसृष्टेषु हि दोषेषु सर्वजिच्छमनं हितम् ॥ १५ ॥
तत्र दोषानुगमनं शिरास्र इव लक्षयेत् ॥
उपद्रवाश्च विकृतिज्ञानतस्तेषु चाधिकम् ॥१६॥
आशुकारी यत. कासः स एवात. प्रवक्ष्यते ॥
पञ्च कासा. स्मृता वातपित्तश्लेष्मक्षतक्षयैः ॥ १७ ॥

क्षयायोपेक्षिताः सर्वे बलिनश्चोत्तरोत्तरम् ॥
तेषां भविष्यतां रूपं कण्ठे कंडूररोचकः ॥ १८ ॥
शूकपूर्णाभकण्ठत्वं तत्राधो विहतोऽनिलः ॥
ऊर्ध्वं प्रवृत्तः प्राप्योरस्तस्मिन्कण्ठे च संसजन् ॥ १९ ॥
शिरः स्रोतांसि सम्पूर्य ततोऽङ्गान्युत्क्षिपन्निव ॥
क्षिपन्निवाक्षिणी पृष्ठमुरः पार्श्वे च पीडयन् ॥ २० ॥
प्रवर्त्तते स वक्त्रेण भिन्नकांस्योपमध्वनिः ॥
हेतुभेदात्प्रतीघातभेदो वायोः सरंहसः ॥ २१ ॥
यद्रुजाशब्दवैषम्यं कासाना जायते ततः ॥
कुपितो वातलैर्वातः शुष्कोरःकण्ठवक्त्रताम् ॥ २२ ॥
हृत्पार्श्वोरःशिरःशूलं मोहक्षोभस्वरक्षयान् ॥
करोति शुष्कं कासं च महावेगरुजास्वनम् ॥ २३ ॥
सोऽङ्गहर्षी कफं शुष्कं कृच्छ्रान्मुक्त्वाऽल्पतां व्रजेत् ॥
पित्तात्पीताक्षिकफता तिक्तास्यत्वं ज्वरो भ्रमः ॥ २४ ॥
पित्तासृग्वमनं तृष्णा वैस्वर्यं धूमको मदः ॥
प्रततं कासवेगेन ज्योतिषामिव दर्शनम् ॥ २५ ॥
कफादुरोऽल्परुङ्मूर्द्धहृदयं स्तिमितं गुरु ॥
कण्ठोपलेपः सदनं पीनसच्छर्द्यरोचकाः ॥ २६ ॥
रोमहर्षो घनस्निग्धश्वेतश्लेष्मप्रवर्त्तनम् ॥
युद्धाद्यैः साहसैस्तैस्तैः सेवितैरयथाबलम् ॥ २७ ॥
उरस्यन्तःक्षते वायुः पित्तेनानुगतो बली ॥
कुपितः कुरुते कासं कफं तेन सशोणितम् ॥ २८ ॥

पीत श्यामं च शुष्क च ग्रथितं कथितं वहु ॥
ष्ठीवेत्कण्ठेन रुजता विभिन्नेनेव चोरसा ॥ २९ ॥
सूचीभिरिव तीक्ष्णाभिस्तुद्यमानेन शूलिना ॥
पर्वभेदज्वरश्वासतृष्णावैस्वर्यकम्पवान् ॥ ३० ॥
पारावत इवाकूजन्पार्श्वशूली ततोऽस्य च ॥
क्रमाद्वीर्यं रुचि. पक्तिर्वल वर्णश्च हीयते॥ ३१ ॥
क्षीणस्य सासृग्मूत्रत्वं स्याच्च पृष्ठकटीग्रह. ॥
वायुप्रधाना' कुपिता धातवो राजयक्ष्मिण. ॥ ३२ ॥
कुर्वन्तियक्ष्मायतने कास ष्ठीवेत्कफ तत ॥
पूतिपूयोपम पीत विस्र हरितलोहितम् ॥ ३३ ॥
लुञ्चेते इव पार्श्वे च हृदय पततीव च ॥
अकस्मादुष्णशीतेच्छा वह्वाशित्व वलक्षय ॥ ३४ ॥
स्निग्धप्रसन्नवक्त्रत्व श्रीमद्दर्शननेत्रता ॥
ततोऽस्य क्षयरूपाणि सर्वाण्याविर्भवन्ति च ॥ ३५॥
इत्येष क्षयज कास' क्षीणाना देहनाशन. ॥
याप्यो वा वलिना तद्वत्क्षतजोऽभिनवौ तु तौ ॥ ३६ ॥
सिध्येतामपि सानाथ्यात्साध्या दोषैः पृथक्त्रय. ॥
मिश्रा याप्या द्वयात्सर्वे जरसा स्थविरस्य च ॥ ३७ ॥
कासाच्छ्वासक्षयच्छर्दिस्वरसादादयो गदा. ॥
भवन्त्युपेक्षया यस्मात्तस्मात्त त्वरया जयेत् ॥ ३८॥

इत्यष्टाङ्गहृदयसंहितायां सूत्रस्थाने तृतीयोऽध्यायः ॥ ३ ॥

# चतुर्थोऽध्यायः ।



अथातःश्वासहिध्मानिदानं व्याख्यास्यामः ।
कासवृद्ध्या भवेच्छ्वासः पूर्वैर्वा दोषकोपनैः ॥
आमातिसारवमथुविषपाण्डुज्वरैरपि ॥ १ ॥
रजोधूमानिलैर्मर्मघातादतिहिमाम्बुना ॥
क्षुद्रकस्तमकश्छिन्नो महानूर्द्ध्वश्च पञ्चमः ॥ २ ॥
कफोपरुद्धगमनः पवनो विष्वगास्थितः ॥
प्राणोदकान्नवाहीनिदुष्टः स्त्रोतांसि दूषयन् ॥ ३ ॥
उरःस्थः कुरुते श्वासमामाशयसमुद्भवम् ॥
प्राग्रूपं तस्य हृत्पार्श्वशूलं प्राणविलोमता ॥ ४ ॥
आनाहः शंखभेदश्च तत्रायासातिभोजनैः ॥
प्रेरितः प्रेरयेत्क्षुद्रंस्वयं संशमनं मरुत् ॥ ५ ॥
प्रतिलोमं शिरा गच्छन्नुदीर्य पवनः कफम् ॥
परिगृह्य शिरोग्रीवमुरः पार्श्वे च पीडयन् ॥ ६ ॥
कासं घुर्घुरकं मोहमरुचिं पीनसं तृषम् ॥
करोति तीव्रवेगं च श्वासं प्राणोपतापिनम् ॥ ॥ ७ ॥
प्रताम्येत्तस्य वेगेन निष्ठ्यूतान्ते क्षणं सुखी ॥
कृच्छ्राच्छयानः श्वसिति निषण्णः स्वास्थ्यमृच्छति॥८॥
उच्छ्रिताक्षो ललाटेन स्विद्यते भृशमर्तिमान् ॥
विशुष्कास्योमुहुःश्वासी कांक्षत्युष्णं सवेपथुः॥ ९ ॥

मेघाम्बुशीतप्राग्वातैः श्लेष्मलैश्च विवर्द्धते ॥
स याप्यस्तमक. साध्यो नरो वा बलिनो भवेत् ॥ १० ॥
ज्वरमूर्च्छायुत. शीतै. शाम्येत्प्रतमकस्तु स ॥
छिन्नाच्छ्वसिति विच्छिन्नं मर्मच्छेदरुजार्दितः ॥ ११ ॥
सस्वेदमूर्च्छः सानाहो बस्तिदाहनिरोधवान् ॥
अधोदृग्विप्लुताक्षश्च मुह्यन्रक्तैकलोचन' ॥ १२ ॥
शुष्कास्य. प्रलपन्दीनो नष्टच्छायो विचेतन ॥
महता महता दीनो नादेन श्वसिति क्रथन् ॥ १३ ॥
उद्धूयमानः संरब्धो मत्तर्षभ इवानिशम् ॥
प्रणष्टज्ञानविज्ञानो विभ्रान्तनयनानन ॥ १४ ॥
वक्ष समाक्षिपन्बद्धमूत्रवर्चा विशीर्णवाक् ॥
शुष्ककण्ठो मुहुर्मुह्यन्कर्णशङ्खशिरोऽतिरुक् ॥ १५ ॥
दीर्घमूर्ध्वं श्वसित्यूर्ध्वान्न च प्रत्याहरत्यध ॥
श्लेष्मावृतमुखस्रोता क्रुद्धगन्धवहार्दित ॥ १६ ॥
ऊर्ध्वदृग्वीक्षते भ्रान्तमक्षिणी परित क्षिपन् ॥
मर्मसुच्छिद्यमानेषु परिदेवी निरुद्धवाक् ॥ १७ ॥
एते सिध्येयुरव्यक्ता व्यक्ता. प्राणहरा ध्रुवम् ॥
श्वासैकहेतुप्राग्रूपसंख्याप्रकृतिसंश्रया' ॥ १८ ॥
हिध्मा भक्तोद्भवा क्षुद्रा यमला महतीति च ॥
गम्भीरा च मरुत्तत्र त्वरयायुक्तिसेवितैः ॥ १९ ॥
रूक्षतीक्ष्णखरासात्म्यैरन्नपानैः प्रपीडित ॥
करोति हिध्मामरुजां मन्दशब्दां क्षवानुगाम् ॥ २० ॥

शमं सात्म्यान्नपानेन या प्रयाति च साऽन्नजा ॥
आयासात्पवनः क्षुद्रः क्षुद्रां हिध्मां प्रवर्त्तयेत् ॥ २१ ॥
जत्रुमूलप्रविसृतामल्पवेगां मृदुं च सा ॥
वृद्धिमायास्यतो याति भुक्तमात्रे च मार्दवम् ॥ २२ ॥
चिरेण यमलैर्वेगैराहारे या प्रवर्त्तते ॥
परिणामोन्मुखे वृद्धिं परिणामे च गच्छति ॥ २३ ॥
कम्पयंती शिरोग्रीवामाध्मातस्यातितृष्यतः ॥
प्रलापच्छर्द्यतीसारनेत्रविप्लुतजृम्भिणः ॥ २४ ॥
यमला वेगिनी हिध्मा परिणामवती च सा ॥
स्तब्धभ्रूशङ्खयुग्मस्य सास्रविप्लुतचक्षुषः ॥ २५ ॥
स्तम्भयन्ती तनुं वाचं स्मृतिं संज्ञां च मुष्णती ॥
रुन्धती मार्गमन्नस्य कुर्वती मर्मघट्टनम् ॥ २६ ॥
पृष्ठतो नमनं शोषं महाहिध्मा प्रवर्त्तते ॥
महामूला महाशब्दा महावेगा महाबला ॥ २७ ॥
पक्वाशयाद्वा नाभेर्वा पूर्ववद्या प्रवर्त्तते ॥
तद्रूपा सा मुहुः कुर्याज्जृम्भामङ्गप्रसारणम् ॥ २८ ॥
गम्भीरेणानुनादेन गंभीरा तासु साधयेत् ॥
आद्ये द्वे वर्जयेदन्त्ये सर्वलिंगां च वेगिनीम् ॥ २९ ॥
सर्वाश्च सञ्चितामस्य स्थविरस्य व्यवायिनः ॥
व्याधिभिः क्षीणदेहस्य भक्तच्छेदक्षतस्य वा ॥ ३० ॥
सर्वेऽपि रोगा नाशाय न त्वेवं शीघ्रकारिणः ॥
हिध्माश्वासौ यथा तौ हि मृत्युकाले कृतालयौ ॥ ३१ ॥

इत्यष्टाङ्गहृदयसंहितायां निदानस्थाने चतुर्थोऽध्यायः ॥ ४ ॥

# पञ्चमोऽध्यायः ॥



अथातो राजयक्ष्मादिनिदानं व्याख्यास्याम. ।

अनेकरोगानगतो बहुरोगपुरोगमः ॥

राजयक्ष्मा क्षयःशोषोरोगराडिति च स्मृत. ॥ १ ॥

नक्षत्राणा द्विजाना च राज्ञोऽभूद्यदय पुरा ॥

यच्च राजा च यक्ष्मा च राजयक्ष्मा ततो मत. ॥ २ ॥

देहौषधक्षयकृते. क्षयस्तत्सम्भवाच्च स ॥

रसादिशोषणाच्छोषो रोगराट् तेषु राजनात् ॥ ३ ॥

साहसं वेगसरोध शुक्रौज स्नेहसंक्षय ॥

अन्नपानविधित्यागश्चत्वारस्तस्य हेतव ॥ ४ ॥

तैरुदीर्णोऽनिल पित्त कफ चोदीर्य सर्वत. ॥

शरीरसन्धीनाविश्य ता शिराश्च प्रपीडयन् ॥ ५ ॥

मुखानि स्रोतसा रुद्ध्वा तथैवातिविवृत्य च ॥

सर्पन्नूर्ध्वमधस्तिर्यग्यथास्वं जनयेद्गदान् ॥ ६ ॥

रूप भविष्यतस्तस्य प्रतिश्यायो भृश क्षव' ॥

प्रसेको मुखमाधुर्य सदन वह्निदेहयो ॥७॥

स्थाल्यमत्रान्नपानादौशुचावप्यशुचीक्षणम् ॥

मक्षिकातृणकेशादिपात. प्रायोऽन्नपानयो. ॥ ८ ॥

हृल्लासश्छर्दिररुचिरश्नतोऽपि बलक्षय ॥

पाण्योरवेक्षापादास्यशोफोऽक्ष्णोरतिशुक्लता ॥ ९ ॥

बाह्वोःप्रमाणजिज्ञासा काये बैभत्स्यदर्शनम् ॥
स्त्रीमद्यमांसप्रियता घृणित्वंमूर्द्धगुंठनम् ॥ १० ॥
नखकेशातिवृद्धिश्च स्वप्ने चाभिभवो भवेत् ॥
पतंगकृकलासाहिकपिश्वापदपक्षिभिः ॥ ११ ॥
केशास्थितुषभस्मादिराशौ समधिरोहणम् ॥
शून्यानां ग्रामदेशानां दर्शनं शुष्यतोंभसः ॥ १२ ॥
ज्योतिर्गिरीणां पततां ज्वलतां च महीरुहाम् ॥
पीनसश्वासकासांसमूर्द्धस्वररुजोऽरुचिः ॥ १३ ॥
ऊर्ध्वंविड्भ्रंशसंशोषावधश्छर्दिश्च कोष्ठगे ॥
तिर्यक्स्थे पार्श्वरुग्दोषे संधिगे भवति ज्वरः ॥ १४ ॥
रूपाण्येकादशैतानि जायंते राजयक्ष्मणः ॥
तेषामुपद्रवान्विद्यात्कंठोद्ध्वंसमुरोरुजम् ॥ १५ ॥
जृम्भाङ्गमर्दनिष्ठीववह्निसादास्यपूतिताः ॥
तत्र वाताच्छिरःपार्श्वशूलमंसाङ्गमर्दनम् ॥ १६ ॥
कंठोद्ध्वंसः स्वरभ्रंशः पित्तात्पादांसपाणिषु ॥
दाहोऽतिसारोऽसृक्छर्दिर्मुखगन्धो ज्वरो मदः ॥ १७ ॥
कफादरोचकश्छर्दिः कासो मूर्धाङ्गगौरवम् ॥
प्रसेकः पीनसः श्वासः स्वरसादोऽल्पवह्निता ॥ १८ ॥
दोषैर्मन्दानलत्वेन सोपलेपैः कफोल्बणैः ॥
स्रोतोमुखेषु रुद्धेषु धातूष्मस्वल्पकेषु च ॥ १९ ॥
विदह्यमानः स्वस्थाने रसस्तांस्तानुपद्रवान् ॥
कुर्य्यादगच्छन्मांसादीनसृक् चोर्ध्वं प्रधावति ॥ २० ॥

पच्यते कोष्ठ एवान्नमन्नपक्त्रेव चाऽस्य यत् ॥
प्रायोऽस्मान्मलता यात नैवाल धातुपुष्टये ॥ २१ ॥
रसोप्यस्य न रक्ताय मासाय कुत एव तु ॥
उपस्तब्ध स शकृता केवल वर्त्तते क्षयी ॥ २२ ॥
लिङ्गेष्वल्पेष्वपि क्षीण व्याध्यौषधवलाक्षमम् ॥
वर्जयेत्साधयेदेव सर्वेष्वपि ततोऽन्यथा ॥ २३ ॥
दोषैर्व्यस्तै समस्तैश्च क्षयात्पष्ठश्च मेदसा ॥
स्वरभेदो भवेत्तत्रक्षामो रूक्षश्चल. स्वर. ॥ २४ ॥
शूकपूर्णाभकण्ठत्व स्निग्धोष्णोपशयोऽनिलात् ॥
पित्तात्तालुगले दाह शोष उक्तावसूयनम् ॥ २५ ॥
लिम्पन्निव कफात्कण्ठ मन्द खुरखुरायते ॥
स्वरो विवद्ध सर्वैस्तु सर्वलिग क्षयात्कृपेत् ॥ २६ ॥
धूमायतीव चात्यर्थ मेदसा श्लेष्मलक्षण ॥
कृच्छ्रलक्ष्याक्षरश्चात्र सर्वैरन्त्य च वर्जयेत् ॥ २७ ॥
अरोचको भवेद्दोषैर्जिह्वाहृदय सश्रयै ॥
सन्निपातेन मनस. सन्तापेन च पञ्चम ॥ २८ ॥
कषायतिक्तमधुर वातादिषु मुख क्रमात् ॥
सर्वोत्थे चिरसशोकक्रोधादिषु यथामलम् ॥ २९ ॥
छर्दिदोषै. पृथक्सर्वैर्द्विष्टैरर्थैश्च पञ्चमी ॥
उदानो विकृतो दोषान्सर्वानप्यूर्ध्वमस्यति ॥ ३० ॥
तासूत्क्लेशास्यलावण्यप्रसेकारुचयोऽग्रगा ॥
नाभिपृष्ठ रुजन्वायु. पार्श्वे चाहारमुत्क्षिपेत् ॥ ३१ ॥

ततो विच्छिन्नमल्पाल्पं कषायं फेनिलं वमेत् ॥
शब्दोद्गारयुतं कृष्णमच्छं कृच्छ्रेण वेगवान् ॥३२॥
कासास्यशोषहृन्मूर्द्धस्वरपीडाक्लमान्वितः ॥
पित्तात्क्षारोदकनिभं धूम्रं हरितपीतकम् ॥ ३३ ॥
सासृगम्लं कटूष्णं च तृण्मूर्च्छातापदाहवत् ॥
कफात्स्निग्धं घनं शीतं श्लेष्मतन्तुगवाक्षितम् ॥ ३४ ॥
मधुरं लवणं भूरि प्रसक्तलोमहर्षणम् ॥
मुखश्वयथुमाधुर्यतन्द्राहृल्लासकासवत् ॥ ३५ ॥
सर्वलिङ्गामलैः सर्वैरिष्टोक्ता या च तां त्यजेत् ॥
पूत्यमेध्याशुचिद्विष्टदर्शनश्रवणादिभिः ॥ ३६ ॥
तप्ते चित्ते हृदिक्लिष्टे छर्दिर्द्विष्टार्थयोगजा ॥
वातादीनिव विमृशेत्कृमितृष्णामदौहृदे ॥ ३७ ॥
शूलवेपथुहृल्लासैर्विशेषात्कृमिजां वदेत् ॥
कृमिहृद्रोगलिङ्गैश्च स्मृताः पञ्च तु हृद्गदाः ॥ ३८ ॥
तेषां गुल्मनिदानोक्तैः समुत्थानैश्च सम्भवः ॥
वातेन शूल्यतेऽत्यर्थं तुद्यते स्फुटतीव च ॥ ३९ ॥
[illegible]ते शुष्यति स्तब्धं हृदयं शून्यता द्रवः ॥
अकस्माद्दीनता शोको भयं शब्दासहिष्णुता ॥ ४० ॥
वेपथुर्वेष्टनं मोहः श्वासरोधोऽल्पनिद्रता ॥
पित्तात्तृष्णा भ्रमो मूर्च्छा दाहः स्वेदोऽल्पकः क्लमः॥४१॥
छर्दनं चाम्लपित्तस्य धूमकः पीतता ज्वरः ॥
श्लेष्मणा हृदयं स्तब्धं भारिकं साश्म गर्भवत् ॥ ४२ ॥

कासाग्निसादनिष्ठीवनिद्रालस्यारुचिज्वरा ॥
सर्वलिङ्गस्त्रिभिर्दोषै क्रिमिभि श्यावनेत्रता ॥ ४३ ॥
तमःप्रवेशो हृल्लास. शोष. कण्डू कफस्रुति ॥
हृदयं प्रततं चात्र क्रकचेनेव दार्यते ॥ ४४ ॥
चिकित्सेदामयं घोरं तं शीघ्रं शीघ्रकारिणम् ॥
वातात्पित्तात्कफात्तृष्णा सन्निपाताद्रसक्षयात् ॥ ४५ ॥
षष्ठीस्यादुपसर्गाच्च वातपित्ते तु कारणम् ॥
सर्वासु तत्प्रकोपो हि सौम्यधातुप्रशोषणात् ॥ ४६ ॥
सर्वदेहभ्रमोत्कम्पतापतृड्दाहमोहकृत् ॥
जिह्वामूलगलक्लोमतालुतोयवहा. शिरा ॥ ४७ ॥
सशोष्य तृष्णा जायन्ते तासा सामान्यलक्षणम् ॥
मुखशोषोजलातृप्तिरन्नद्वेष स्वरक्षय ॥ ४८ ॥
कठौष्ठजिह्वाकार्कश्यजिह्वानिष्क्रमण क्लम ॥
प्रलापश्चित्तविभ्रंशस्तृड्ग्रहोक्तास्तथाऽऽमया ॥ ४९ ॥
मारुतात्क्षामता दैन्यं शंखतोद शिरोभ्रम ॥
गन्धाज्ञानास्यवैरस्यश्रुतिनिद्राबलक्षया. ॥ ५० ॥
शीताम्बुपानाद्वृद्धिश्च पित्तान्मूर्च्छास्यतिक्तता ॥
रक्तेक्षणत्व प्रततं शोषो दाहोऽतिधूमक ॥ ५१ ॥
कफो रुणद्धि कुपितस्तोयवाहिषु मारुतम् ॥
स्रोत सु सकफस्तेन पङ्कवच्छोष्यते तत. ॥ ५२ ॥
शूकैरिवाचितः कण्ठो निद्रामधुरवक्त्रता ॥
आध्माने शिरसो जाड्यं स्तैमित्यच्छर्द्यरोचका ॥ ५३ ॥

आलस्यमविपाकश्च सर्वैः स्यात्सर्वलक्षणा ॥
आमोद्भवा च भक्तस्य संरोधाद्वातपित्तजा ॥ ५४ ॥
उष्णक्लान्तस्य सहसा शीताम्भो भजतस्तृषम् ॥
ऊष्मारुद्धोगतः कोष्ठं यां कुर्य्यात्पित्तजैव सा ॥ ५५ ॥
या च पानातिपानोत्था तीक्ष्णाग्नेः स्नेहजा च या ॥
स्निग्धगुर्वम्ललवणभोजनेन कफोद्भवा ॥ ५६ ॥
तृष्णा रसक्षयोक्तेन लक्षणेन क्षयात्मिका ॥
शोषमोहज्वराद्यन्यदीर्घरोगोपसर्गतः ॥
या तृष्णाजायते तीव्रा सोपसर्गात्मिका स्मृता ॥ ५७ ॥

इत्यष्टाङ्गहृदयसंहितायां निदानस्थाने पञ्चमोऽध्यायः ॥ ५ ॥

## षष्ठोऽध्यायः



अथातो मदात्ययनिदानं व्याख्यास्यामः ।
तीक्ष्णोष्णरूक्षसूक्ष्माम्लं व्यवाय्याशुकरं लघु ॥
विकाशि विशदं मद्यमोजसोऽस्माद्विपर्य्ययः ॥ १ ॥
तीक्ष्णादयो विषेऽप्युक्ताश्चित्तोपप्लाविनो गुणाः ॥
जीवितान्ताय जायन्ते विषे तूत्कर्षवृत्तितः ॥ २ ॥
तीक्ष्णादिभिर्गुणैर्मद्यं मन्दादीनोजसो गुणान् ॥
दशभिर्दश संक्षोभ्य चेतो नयति विक्रियाम् ॥ ३ ॥
आद्ये मदे द्वितीये स प्रमादायतने स्थितः ॥
दुर्विकल्पहतो मूढः सुखमित्याधिमुच्यते ॥ ४ ॥

मध्यमोत्तमयोः संधिं प्राप्य राजसतामस ॥
निरङ्कुश इव व्यालो न किञ्चिन्नाचरेज्जड ॥ ५ ॥
इय भूमिरवद्यानां दौःशील्यस्येदमास्पदम् ॥
एकोऽयं वहुमार्गाया दुर्गतेर्देशिकः परम् ॥ ६ ॥
निश्चेष्टः शववच्छेते तृतीये तु मदे स्थित. ॥
मरणादपि पापात्मा गत पापतरां दशाम् ॥७॥
धर्माधर्म सुख दु खमर्थानर्थं हिताहितम् ॥
यदासक्तो न जानाति कथं तच्छीलयेद्बुधः ॥ ८ ॥
मद्ये मोहो भय शोक. क्रोधो मृत्युश्च संश्रिता ॥
सोन्मादमदमूर्च्छाया. सापस्मारापतानका ॥ ९ ॥
यत्रैक स्मृतिविभ्रंशस्तत्र सर्वमसाधुयत् ॥
अयुक्तियुक्तमन्नं हि व्याधये मरणाय वा ॥ १० ॥
मद्य त्रिवर्गधीधैर्य्यलज्जादेरपि नाशनम् ॥
नातिमाद्यन्ति बलिन कृताहारा महाशना ॥११॥
स्निग्धा सत्त्ववयोयुक्ता मद्यनित्यास्तदन्वया ॥
मेद कफाधिकामन्दवातपित्ता दृढाग्नय ॥ १२ ॥
विपर्य्ययेऽतिमाद्यन्ति विश्रब्धा कुपिताश्च ये ॥
मद्येन चाम्लरूक्षेण साजीर्णे वहुनाति च ॥ १३ ॥
वातात्पित्तात्कफात्सर्वैश्चत्वार स्युर्मदात्यया. ॥
सर्वेऽपि सर्वैर्जायन्ते व्यपदेशस्तु भूयसा ॥ १४ ॥
सामान्यं लक्षणं तेषा प्रमोहो हृदयव्यथा ॥
विड्भेद. प्रततं तृष्णा सौम्याग्नेयो ज्वरोऽरुचि. ॥१५॥

शिरःपार्श्वास्थिहृत्कम्पो मर्म्मभेदस्त्रिकग्रहः ॥
उरोविबन्धस्तिमिरं कासःश्वासः प्रजागरः ॥ १६ ॥
स्वेदोऽतिमात्रं विष्टम्भः श्वयथुश्चित्तविभ्रमः ॥
प्रलापश्छर्दिरुत्क्लेशो भ्रमो दुःस्वप्नदर्शनम् ॥ १७ ॥
विशेषाज्जागरश्वासकम्पमुर्द्धरुजोऽनिलात् ॥
स्वप्ने भ्रमत्युत्पतति प्रेतैश्च सह भाषते ॥ १८ ॥
पित्ताद्दाहज्वरस्वेदमोहातीसारतृड्भ्रमाः ॥
देहो हरितहारिद्रो रक्तनेत्रकपोलता ॥ १९ ॥
श्लेष्मणश्छर्दिहृल्लासनिद्रोदर्दाङ्गगौरवम् ॥
सर्वजे सर्वलिङ्गत्वमुक्त्वा मद्यं पिबेत्तु यः ॥ २० ॥
सहसाऽनुचितं चान्यत्तस्य ध्वंसकविक्षयौ ॥
भवेतां मारुतात्कष्टौ दुर्बलस्य विशेषतः ॥२१॥
ध्वंसके श्लेष्मनिष्ठीवः कण्ठशोषोऽतिनिद्रता ॥
शब्दासहत्वंतन्द्रा च विक्षयेऽङ्गशिरोऽतिरुक् ॥ २२ ॥
हृत्कण्ठरोगः संमोहः कासस्तृष्णावमिर्ज्वरः ॥
निवृत्तो यस्तु मद्येभ्यो जितात्माबुद्धिपूर्वकृत् ॥ २३ ॥
विकारैः स्पृश्यते जातु न स शारीरमानसैः ॥
रजोमोहाहिताहारपरस्य स्युस्त्रयो गदाः ॥ २४ ॥
रसासृक्चेतनावाहिस्रोतोरोधसमुद्भवाः ॥
मदमूर्च्छायसंन्यासा यथोत्तरबलोत्तराः ॥ २५॥
मदोऽत्र दोषैः सर्वैश्च रक्तमद्यविषैरपि ॥
सक्तानल्पद्रुतभाषाश्चलः स्खलितचेष्टितः ॥ २६ ॥

रूक्षस्यावारुणतनुर्मदे वातोद्भवे भवेत्॥
पित्तेन क्रोधनो रक्तपीताभ कलहप्रिय.॥ २७॥
स्वल्पासम्बद्धवाक्पाण्डु. कफाद्धयानपरोऽलस ॥
सर्वात्मा सन्निपातेन रक्तात्स्तब्धाङ्गदृष्टिता॥२८॥
पित्तलिङ्गश्च मद्येन विकृतेहास्वरागता॥
विषे कम्पोऽतिनिद्रा च सर्वेभ्योऽभ्यधिकस्तु स.॥२९॥
लक्षयेल्लक्षणोत्कर्षाद्वातादीञ्छोणितादिषु॥
अरुणं कृष्णनील वा खं पश्यन्प्रविशत्तम.॥ ३०॥
शीघ्रं च प्रतिबुध्येत हृत्पीडा वेपथुर्भ्रम'॥
कार्श्यं श्यावारुणा छाया मूर्च्छाये मारुतात्मके॥ ३१॥
पित्तेन रक्त पीत वा नभः पश्यन्विशेत्तम'॥
विबुध्येत च सस्वेदो दाहतृट्तापपीडित॥३२॥
भिन्नविण्नीलपीताभो रक्तपीताकुलेक्षण.॥
कफेनमेघसङ्काश पश्यन्नाकाशमाविशेत्॥ ३३॥
तमश्चिराच्च बुध्येत सहृल्लास प्रसेकवान्॥
गुरुभि स्तिमितैरङ्गैरार्द्रचर्मावनद्धवत्॥ ३४॥
सर्वाकृतिस्त्रिभिर्दोषैरपस्मारइवापर.॥
पातयत्याशु निश्चेष्ट विना बीभत्सचेष्टितै.॥ ३५॥
दोषेषु मदमूर्च्छाया. कृतवेगेषु देहिनाम्॥
स्वयमेवोपशाम्यन्तिसन्न्यासो नौषधैर्विना॥ ३६॥
वाग्देहमनसा चेष्टामाक्षिप्यातिबला मलाः॥
सन्न्यास सन्निपतिताः प्राणायतनसश्रया.॥ ३७॥

कुर्वन्ति तेन पुरुषः काष्ठभूतो मृतोपमः ॥
म्रियेतशीघ्रं शीघ्रं चेच्चिकित्सा न प्रयुज्यते ॥ ३८ ॥
अगाधे ग्राहबहुले सलिलौघ इवातटे ॥
सन्न्यासे विनिमज्जन्तं नरमाशु निवर्त्तयेत् ॥ ३९ ॥
मदमानरोषतोषप्रभृतिभिररिभिर्निजैः परिष्वङ्गः ॥
युक्तायुक्तं च समं युक्तिवियुक्तेन मद्येन ॥ ४० ॥
बलकालदेशसात्म्यप्रकृतिसहायामयवयांसि ॥
प्रविभज्य तदनुरूपं यदि पिबति ततः पिबत्यमृतम्॥४१॥

इत्यष्टाङ्गहृदयसंहितायां निदानस्थाने षष्ठोऽध्यायः ॥ ६ ॥

## सप्तमोऽध्यायः ।

अथार्शसां निदानं व्याख्यास्यामः ।
अरिवत्प्राणिनो मांसकीलका विशसन्ति यत् ॥
अर्शांसि तस्मादुच्यन्ते गुदमार्गनिरोधतः ॥ १ ॥
दोषास्त्वङ्मांसमेदांसि सन्दूष्य विविधाकृतीन् ॥
मांसांकुरानपानादौ कुर्वन्त्यर्शांसि तान्जगुः ॥ २ ॥
सहजन्मोत्तरोत्थानभेदाद्द्वेधा समासतः ॥
शुष्कस्रावविभेदाच्च गुदस्थूलान्त्रसंश्रयः ॥ ३ ॥
अर्धपञ्चांगुलस्तस्मिंस्तिस्रोऽध्यर्द्धांगुलाः स्थिताः ॥
वल्यः प्रवाहिणी तासामन्तर्मध्ये विसर्जनी ॥ ४ ॥

वाह्या संवरणी तस्या गुदोष्ठे वहिरगुले ॥
यवाध्यर्धप्रमाणेन रोमाण्यत्र तत परम् ॥ ५ ॥
तत्र हेतु. सहोत्थाना वलीवीजोपतप्तता ॥
अर्शसा बीजतप्तिस्तु मातापित्रपचारत ॥ ६ ॥
दैवाच्च ताभ्या कोपो हि सन्निपातस्य नान्यत. ॥
असाध्यान्येवमाख्याता सर्वे रोगा कुलोद्भवा ॥ ७ ॥
सहजानि विशेषेण रूक्षदुर्दर्शनानि च ॥
अन्तर्मुखानि पाण्डूनि दारुणोपद्रवाणि च ॥ ८ ॥
पोढान्यानि पृथग्दोपससर्गानि वयास्त्रत ॥
शुष्काणि वात श्लेष्मभ्यामार्द्राणि त्वस्रपित्तत ॥ ९ ॥
दोपप्रकोपहेतुस्तु प्रागुक्तस्तेन सादिते ॥
अग्नौ मलेऽतिनिचिते पुनश्चातिव्यवायत. ॥ १० ॥
यानसङ्क्षोभविषमकठिनोत्कटकासनात् ॥
वस्तिनेत्राश्मलोष्टोर्वीतलचैलादिघट्टनात् ॥ ११ ॥
भृश शीताम्बुसस्पर्शात्प्रततातिप्रवाहणात् ॥
वातमूत्रशकृद्वेगधारणात्तदुदीरणात् ॥ १२ ॥
ज्वरगुल्मातिसारामग्रहणी शोफपाण्डुभि ॥
कर्शनाद्विपमाभ्यश्च चेष्टाभ्यो योषिता पुन ॥ १३ ॥
आमगर्भप्रपतनाद्गर्भवृद्धिप्रपीडनात् ॥
ईदृशैश्चापरैर्वायुरपान कुपितो मलम् ॥ १४ ॥
पायोर्वलीपु सन्धत्ते तास्वभिष्यण्णमूर्तिषु ॥
जायन्तेऽर्शांसि तत्पूर्वलक्षणं मन्दवह्निता ॥ १५ ॥

विष्टम्भः सक्थिसदनं पिण्डिकोद्वेष्टनं भ्रमः ॥
सादोऽङ्गे नेत्रयोः शोफः शकृद्भेदोऽथवा ग्रहः ॥ १६ ॥
मारुतः प्रचुरो मूढः प्रायो नाभेरधश्चरन् ॥
सरुक्सपरिकर्त्तश्च कृच्छ्रान्निर्गच्छति स्वनन् ॥ १७ ॥
अन्त्रकूजनमाटोपः क्षामतोद्गारभूरिता ॥
प्रभूतं मूत्रमल्पाविट् अश्रद्धावैधूमकोऽम्लकः ॥ १८ ॥
शिरःपृष्ठोरसां शूलमालस्यं भिन्नवर्णता ॥
तथेन्द्रियाणां दौर्बल्यं क्रोधो दुःखोपचारता ॥ १९ ॥
आशंका ग्रहणीदोषपाण्डुगुल्मोदरेषु च ॥
एतान्येव विवर्द्धन्ते जातेषु हतनामसु ॥ २० ॥
निवर्तमानोऽपानो हि तैरधोमार्गरोधतः ॥
क्षोभयन्ननिलानन्यान्सर्वेन्द्रियशरीरगान् ॥ २१ ॥
तथा मूत्रशकृत्पित्तकफान्धातूंश्चसाशयान् ॥
मृद्नात्यग्निं ततः सर्वो भवति प्रायशोऽर्शसः ॥ २२ ॥
कृशो भृशं हतोत्साहो दीनः क्षामोऽतिनिष्प्रभः ॥
असारो विगतच्छायो जन्तुजुष्ट इव द्रुमः ॥ २३ ॥
कृत्स्नैरुपद्रवैर्ग्रस्तोयथोक्तैर्मर्मपीडनैः ॥
तथा कासपिपासास्यवैरस्यश्वासपीनसैः ॥ २४ ॥
क्लमाङ्गभङ्गवमथुक्षवथुश्वयथुज्वरैः ॥
क्लैब्यबाधिर्यतैमिर्यशर्कराश्मरिपीडितः ॥ २५ ॥
क्षामभिन्नस्वरो ध्यायन्मुहुः ष्ठीवन्नरोचकी ॥
सर्वपर्वास्थिहृन्नाभिपायुवङ्क्षणशूलवान् ॥ ॥ २६ ॥

गुदेन स्रवता पिच्छां पुलाकोदकसन्निभाम् ॥
विबद्धमुक्तं शुष्कार्द्रं पक्वामं चान्तरान्तरा ॥ २७ ॥
पाण्डुपीतं हरिद्रक्तं पिच्छिलं चोपवेश्यते ॥
गुदाङ्कुरा बह्वनिला शुष्काश्चिमिचिमान्विता. ॥२८॥
म्लाना॰ श्यावारुणा स्तब्धा विषमाः परुषाः खरा. ॥
मिथो विसदृशा वक्रास्तीक्ष्णा विस्फुटिताननाः ॥ २९ ॥
बिम्बीकर्कन्धुखर्जूरकार्पासीफलसन्निभाः ॥
केचित्कदम्बपुष्पाभा केचित्सिद्धार्थकोपमा॰ ॥३० ॥
शिर. पार्श्वांसकट्यूरुवङ्क्षणाभ्यधिकव्यथा ॥
क्षवथूद्गारविष्टम्भहृद्ग्रहारोचकप्रदा ॥ ३१ ॥
कासश्वासाग्निवैषम्यकर्णनादभ्रमावहा ॥
तैरार्तो ग्रथितं स्तोकं सशब्दं सप्रवाहिकम् ॥ ३२ ॥
रुक्फेनपिच्छानुगतं विबद्धमुपवेश्यते ॥
कृष्णत्वङ्नखविण्मूत्रनेत्रवक्त्रश्च जायते ॥ ३३ ॥
गुल्मप्लीहोदराष्ठीलासम्भवस्तत एव च ॥
पित्तोत्तरा नीलमुखा रक्तपीतासितप्रभा. ॥ ३४ ॥
तन्वस्रस्राविणो विस्रास्तनवो मृदवः श्लथा ॥
शुकजिह्वायकृत्खण्डजलौकावक्त्रसन्निभाः ॥ ३५ ॥
दाहपाकज्वरस्वेदतृण्मूर्च्छारुचिमोहदा ॥
सोष्माणो द्रवनीलोष्णपीतरक्तामवर्चस. ॥ ३६ ॥
यवमध्या हरित्पीतहारिद्रत्वङ्नखादय ॥
श्लेष्मोल्बणा महामूला घना मन्दरुजा. सिताः ॥३७॥

उच्छूनोपचिताः स्निग्धाः स्तब्धवृत्तगुरुस्थिराः ॥
पिच्छिलाःस्तिमिताःश्लक्ष्णाःकण्ड्वाढ्याःस्पर्शनप्रियाः३८
करीरपनसास्थ्याभास्तथागोस्तनसन्निभाः ॥
वंक्षणानाहिनः पायुवस्तिनाभिविकर्त्तिनः ॥ ३९ ॥
सकासश्वासहृल्लासप्रसेकारुचिपीनसाः ॥
मेहकृच्छ्रशिरोजाड्यशिशिरज्वरकारिणः ॥ ४० ॥
क्लैब्याग्निमार्दवच्छर्दिसामप्रायविकारदाः ॥
वसाभाः सकफप्राज्यपुरीषाः सप्रवाहिकाः ॥ ४१ ॥
न स्रवन्ति न भिद्यन्ते पांडुस्निग्धत्वगादयः ॥
संसृष्टलिङ्गाः संसर्गान्निचयात्सर्वलक्षणाः ॥ ४२ ॥
रक्तोल्बणा गुदे कीलाः पित्ताकृतिसमन्विताः ॥
वटप्ररोहसदृशागुञ्जाविद्रुमसन्निभाः ॥ ४३ ॥
तेऽत्यर्थं दुष्टमुष्णं च गाढविट्प्रतिपीडिताः ॥
स्रवन्ति सहसा रक्तं तस्य चातिप्रवृत्तितः ॥ ४४ ॥
भेकाभः पीड्यते दुःखैः शोणितक्षयसम्भवैः ॥
हीनवर्णबलोत्साहो हतौजाः कलुषेन्द्रियः ॥ ४५ ॥
मुद्गकोद्रवजूर्णाह्वकरीरचणकादिभिः ॥
रूक्षैः संग्राहिभिर्वायुः स्वस्थाने कुपितो बली ॥ ४६ ॥
अधोवहानि स्रोतांसि संरुध्याधः प्रशोषयन् ॥
पुरीषं वातविण्मूत्रसंगं कुर्वीत दारुणम् ॥ ४७ ॥
तेन तीव्रा रुजा कोष्ठपृष्ठहृत्पार्श्वगा भवेत् ॥
आध्मानमुदरावेष्टो हृल्लासः परिकर्तनम् ॥ ४८ ॥

वस्तौ च सुतरा शूल गंडश्वयथुसम्भव. ॥
पवनस्योर्ध्वगामित्वततश्छर्द्यरुचिज्वरा ॥ ४९ ॥
हृद्रोगग्रहणीदोषमूत्रसगप्रवाहिका. ॥
बाधिर्यतिमिरश्वासशिरोरुक्कासपीनसा. ॥ ५० ॥
मनोविकारस्तृष्णास्रपित्तगुल्मोदरादय. ॥
ते ते च वातजा रोगा जायन्ते भृशदारुणा ॥ ५१ ॥
दुर्नाम्नामित्युदावर्त' परमोऽयमुपद्रव ॥
वाताभिभूतकोष्ठाना तैर्विनापि स जायते ॥ ५२ ॥
सहजानि त्रिदोषाणि यानि चाभ्यन्तरे वलौ ॥
स्थितानि तान्यसाध्यानि याप्यन्तेऽग्निवलादिभि. ॥५३॥
द्वन्द्वजानि द्वितीयाया वलौ यान्याश्रितानि च ॥
कृच्छ्रसाध्यानि तान्याहु. परिसंवत्सराणि च ॥ ५४ ॥
बाह्याया तु वलौ जातान्येकदोषोल्वणानि च ॥
अर्शासि सुखसाध्यानि न चिरोत्पतितानि च ॥ ५५ ॥
मेढ्रादिष्वपि वक्ष्यन्ते यथास्व नाभिजानि तु ॥
गण्डूपदास्यरूपाणि पिच्छिलानि मृदूनि च ॥ ५६ ॥
व्यानो गृहीत्वा श्लेष्माण करोत्यर्शस्त्वचो बहि. ॥
कीलोपम स्थिरखर चर्मकील तु त विदु' ॥ ५७ ॥
वातेन तोद. पारुष्य पित्तादसितरक्तता ॥
श्लेष्मणा स्निग्धता तस्य ग्रथितत्व सवर्णता ॥ ५८ ॥
अर्शसा प्रशमे यत्नमाशु कुर्वीत बुद्धिमान् ॥
तान्याशु हि गुद बद्ध्वा, कुर्युर्बद्धगुदोदरम् ॥ ५९ ॥

इत्यष्टाङ्गहृदयसहितायां निदानस्थाने सप्तमोऽध्याय ॥ ७ ॥

# अष्टमोऽध्यायः ।



अथातोतीसारग्रहणीरोगयोर्निदानं व्याख्यास्यामः ।
दोषैर्व्यस्तैः समस्तैश्च भयाच्छोकाच्च षड्विधः ॥
अतीसारः स सुतरां जायतेऽत्यम्बुपानतः ॥ १ ॥
कृशशुष्कामिषासात्म्यतिलपिष्टविरूढकैः ॥
मद्यरूक्षातिमात्रान्नैरर्शोभिः स्नेहविभ्रमात् ॥ २ ॥
कृमिभ्यो वेगरोधाच्च तद्विधैः कुपितोऽनिलः ॥
विस्रंसयत्यधोऽब्धातुं हत्वा तेनैव चानलम् ॥ ३ ॥
व्यापद्यानु शकृत्कोष्ठंपुरीषं द्रवतां नयन् ॥
प्रकल्पतेऽतिसाराय लक्षणं तस्य भाविनः ॥ ४ ॥
तोदो हृद्गुदकोष्ठेषु गात्रसादो मलग्रहः ॥
आध्मानमविपाकश्च तत्र वातेन विज्जलम् ॥ ५ ॥
अल्पाल्पं शब्दशूलाढ्यं विबद्धमुपवेश्यते ॥
रूक्षं सफेनमच्छञ्च ग्रथितं वा मुहुर्मुहुः ॥ ६ ॥
तथा दग्धगुडाभासं सपिच्छापरिकर्तिकम् ॥
शुष्कास्यो भ्रष्टपायुश्च हृष्टरोमा विनिष्टनन् ॥ ७ ॥
पित्तेन पीतमसितं हारीतं शाद्वलप्रभम् ॥
सरक्तमतिदुर्गन्धंतृण्मूर्च्छास्वेददाहवान् ॥ ८ ॥
सशूलपायुसन्तापं पाकवाञ्श्लेष्मणा घनम् ॥
पिच्छिलं तन्तुमच्छ्वेतं स्निग्धमामं कफान्वितम् ॥ ९ ॥

अभीक्ष्णं गुरु दुर्गन्धं विबद्धमनुबद्धरुक् ॥
निद्रालुरलसोऽन्नद्विडल्पाल्प सप्रवाहिकम् ॥ १० ॥
सरोमहर्ष. सोत्क्लेशो गुरुबस्तिगुदोदर. ॥
कृतेऽप्यकृतसंज्ञश्चसर्वात्मासर्वलक्षण ॥ ११ ॥
भयेन क्षोभिते चित्ते सपित्तो द्रावयेच्छकृत् ॥
वायुस्ततोऽतिसार्य्येत क्षिप्रमुष्णं द्रव प्लवम् ॥ १२ ॥
वातपित्तसम लिंगैराहुस्तद्वच्च शोकत ॥
अतीसार समासेन द्विधा सामो निरामक ॥ १३ ॥
सासृङ्निरस्रस्तत्राद्ये गौरवादप्सु मज्जति ॥
शकृद्दुर्गन्धमाटोपविष्टम्भार्तिप्रसेकिन ॥ १४ ॥
विपरीतो निरामस्तु कफात्पक्वोऽपि मज्जति ॥
अतीसारेषु यो नातियत्नवान्ग्रहणीगद. ॥ १५ ॥
तस्य स्यादग्निविध्वसकरैरत्यर्थसेवितै ॥
साम शकृन्निराम वा जीर्णे येनातिसार्यते ॥ १६ ॥
सोऽतिसारोऽतिसरणादाशुकारी स्वभावत' ॥
सामं सान्नमजीर्णेऽन्ने जीर्णे पक तु नैव वा ॥ १७ ॥
अकस्माद्वामुहुर्बद्धमकस्माच्छिथिल मुहु' ॥
चिरकृद्ग्रहणीदोष सञ्चयाच्चोपवेशयेत् ॥ १८ ॥
स चतुर्धा पृथग्दोषै. सन्निपाताच्च जायते ॥
प्राग्रूप तस्य सदन चिरात्पचनमम्लक ॥ १९ ॥
प्रसेको वक्त्रवैरस्यमरुचिस्तृट्क्लमो भ्रम. ॥
आनद्धोदरता छर्दि कर्णक्ष्वेडोऽन्त्रकूजनम् ॥ २० ॥

सामान्यं लक्षणं कार्श्यं धूमकस्तमकोज्वरः ॥
मूर्च्छा शिरोरुग्विष्टम्भः श्वयथुः करपादयोः ॥ २१ ॥
तत्रानिलात्तालुशोषस्तिमिरं कर्णयोः स्वनः ॥
पार्श्वोरुवंक्षणग्रीवारुजाऽभीक्ष्णं विषूचिका ॥ २२ ॥
रसेषु गृद्धिः सर्वेषु क्षुत्तृष्णा परिकीर्तिका ॥
जीर्णे जीर्यति चाध्मानं भुक्ते स्वास्थ्यं समश्नुते ॥ २३ ॥
वातहृद्रोगगुल्मार्शःप्लीहपाण्डुत्वशङ्कितः ॥
चिराद्दुःखं द्रवं शुष्कं तन्वामं शब्दफेनवत् ॥ २४ ॥
पुनःपुनः सृजेद्वर्चः पायुरुक्छ्वासकासवान् ॥
पित्तेन नीलं पीताभं पीताभः सृजति द्रवम् ॥ २५ ॥
पूत्यम्लोद्गारहृत्कंठदाहारुचितृडर्दितः ॥
श्लेष्मणा पच्यते दुःखमन्नं छर्दिररोचकः ॥ २६ ॥
आस्योपदेहनिष्ठीवकासहृल्लासपीनसाः ॥
हृदयं मन्यते स्त्यानमुदरं स्तिमितं गुरु ॥ २७ ॥
उद्गारो दुष्टमधुरः सदनं स्त्रीष्वहर्षणम् ॥
भिन्नामश्लेष्मसंसृष्टगुरुवर्चःप्रवर्त्तनम् ॥ २८ ॥
अकृशस्यापि दौर्बल्यं सर्वजे सर्वसंकरः ॥
विभागेऽगस्य ये चोक्ता विषमद्यास्त्रयोऽग्नयः ॥ २९ ॥
तेऽपि स्युर्ग्रहणीदोषाः समस्तु स्वास्थ्यकारणम् ॥
वातव्याध्यश्मरीकुष्ठमेहोदरभगन्दराः ॥
अर्शांसि ग्रहणीत्यष्टौ महारोगाः सुदुस्तराः ॥ ३० ॥

इत्यष्टाङ्गहृदयसंहितायां निदानस्थाने अष्टमोऽध्यायः ॥ ८ ॥

# नवमोऽध्यायः।



अथातो मूत्राघातनिदान व्याख्यास्याम ।
वस्तिवस्तिशिरोमेढ्रकटीवृषणपायवः ॥
एकसम्बन्धना प्रोक्ता गुदास्थिविवराश्रया. ॥ १ ॥
अधोमुखोऽपि वस्तिर्हि मूत्रवाहिशिरामुखै ॥
पार्श्वेभ्य. पूर्यते सूक्ष्मै. स्यन्दमानैरनारतम्॥२॥
यैस्तैरेव प्रविश्यैन दोपान्कुर्वंति विंशतिम् ॥
मूत्राघातान्प्रमेहाश्च कृच्छ्रान्मर्मसमाश्रयान ॥ ३ ॥
वस्तिवक्षणमेढ्रार्तियुक्तोऽल्पाल्प मुहुर्मुहु ॥
मूत्रयेद्वातजे कृच्छ्रे पैत्ते पीत सदाहरुक् ॥ ४ ॥
रक्त वा कफजे वस्तिमेढ्रगौरवशोफवान् ॥
सपिच्छ सविवन्धश्च सर्वै सर्वात्मक मलै ॥५॥
यदा वायुर्मुख वस्तेरावृत्य परिशोपयेत् ॥
मूत्र सपित्त सकफ सशुक्र वा तदा क्रमात् ॥ ६ ॥
सञ्जायतेऽश्मरी घोरा पित्ताद्गोरिव रोचना ॥
श्लेष्माश्रया च सर्वा स्यादथास्या' पूर्वलक्षणम् ॥ ७ ॥
वस्त्याध्मान तदासन्नदोपेपु परितोऽतिरुक् ॥
मूत्रे च वस्तगन्धत्व मूत्रकृच्छ्र ज्वरोऽरुचि' ॥ ८ ॥
सामान्यलिङ्ग रुङ्नाभिसेवनीवस्तिमूर्द्धसु ॥
विशीर्णधार मूत्रं स्यात्तया मार्गनिरोधने ॥ ९ ॥

तद्व्यपायात्सुखं मेहेदच्छं गोमेदकोपमम् ॥
तत्संक्षोभात्क्षते सास्रमायासाच्चातिरुग्भवेत् ॥ १० ॥
तत्र वाताद्भृशात्यार्तो दन्तान्खादति वेपते ॥
मृद्गाति मेहनं नाभीं पीडयत्यनिशं क्वणन् ॥ ११ ॥
सानिलं मुञ्चति शकृन्मुहुर्मेहति विन्दुशः ॥
श्यावा रूक्षाऽश्मरी चास्य स्याच्चिता कण्टकैरिव ॥१२॥
पित्तेन दह्यते बस्तिः पच्यमान इवोष्मवान् ॥
भल्लातकास्थिसंस्थाना रक्तपीताऽसिताऽश्मरी ॥ १३ ॥
बस्तिर्निस्तुद्यत इव श्लेष्मणा शीतलो गुरुः ॥
अश्मरी महती श्लक्ष्णा मधुवर्णाथवा सिता ॥ १४ ॥
एता भवन्ति बालानां तेषामेव च भूयसा ॥
आश्रयोपचयाल्पत्वाद्ग्रहणाहरणे सुखाः ॥ १५ ॥
शुक्राश्मरी तु महतां जायते शुक्रधारणात् ॥
स्थानाच्च्युतममुक्तं हि मुष्कयोरन्तरेऽनिलः ॥ १६ ॥
शोषयत्युपसंगृह्य शुक्रं तच्छुष्कमश्मरी ॥
बस्तिरुक्कृच्छ्रमूत्रत्वमुष्कश्वयथुकारिणी ॥ १७ ॥
तस्यामुत्पन्नमात्रायां शुक्रमेति विलीयते ॥
पीडिते त्ववकाशेऽस्मिन्नश्मर्येव च शर्करा ॥ १८ ॥
अणुशो वायुना भिन्ना सा त्वस्मिन्ननुलोमगे ॥
निरेति सहमूत्रेण प्रतिलोमे विबध्यते ॥ १९ ॥
मूत्रसन्धारिणः कुर्य्याद्रुद्ध्वा बस्तेर्मुखं मरुत् ॥
मूत्रसङ्गं रुजं कण्डूं कदाचिच्च स्वधामतः ॥ २० ॥

प्रच्याव्य वस्तिमुद्वृत्त गर्भाभ स्थूलविप्लुतम् ॥
करोति तत्र रुग्दाहस्यन्दनोद्वेष्टनानि च ॥ २१ ॥
बिन्दुशश्च प्रवर्त्तेत मूत्र वस्तौ तु पीडिते ॥
धारया द्विविधोऽप्येष वातवस्तिरिति स्मृत. ॥२२॥
दुस्तरो दुस्तरतरो द्वितीयः प्रबलानिल ॥
शकृन्मार्गस्य वस्तेश्च वायुरन्तरमाश्रित ॥ २३ ॥
अष्ठीलाभ घन ग्रन्थि करोत्यचलमुन्नतम् ॥
वाताष्ठीलेति साऽऽध्मानविण्मूत्रानिलसङ्गकृत् ॥ २४ ॥
विगुण कुण्डलीभूतो वस्तौ तीव्रव्यथोऽनिल. ॥
आविध्य मूत्र भ्रमति सस्तम्भोद्वेष्टगौरव ॥ २५ ॥
मूत्रमल्पाल्पमथवा विमुञ्चति शकृत्सृजन् ॥
वातकुण्डलिकेत्येषा मूत्रन्तु विधृत चिरम् ॥ २६ ॥
न निरेति विबद्ध वा मूत्रातीत तदल्परुक् ॥
विधारणात्प्रतिहत वातोदावर्तित यदा ॥ २७ ॥
नाभेरधस्तादुदर मूत्रमापूरयेत्तदा ॥
कुर्यात्तीव्ररुगाध्मानमपक्तिमलसग्रहम् ॥ २८ ॥
तन्मूत्रजठरं छिद्रवैगुण्येनानिलेन वा ॥
आक्षिप्तमल्प मूत्रन्तु वस्तौ नालेथवा मणौ ॥२९॥
स्थित्वा स्रवेच्छनै पश्चात्सरुज वाऽथवाऽरुजम् ॥
मूत्रोत्सङ्ग. स विच्छिन्नतच्छेषगुरुशेफसः ॥ ३० ॥
अन्तर्वस्तिमुखे वृत्त स्थिरोऽल्प सहसा भवेत् ॥
अश्मरीतुल्यरुग्ग्रन्थिर्मूत्रग्रन्थि स उच्यते ॥ ३१ ॥

मूत्रितस्य स्त्रियं यातो वायुना शुक्रमुद्धतम् ॥
स्थानाच्च्युतं मूत्रयतः प्राक्पश्चाद्वा प्रवर्त्तते ॥ ३२ ॥
भस्मोदकप्रतीकाशं मूत्रशुक्रं तदुच्यते ॥
रूक्षदुर्बलयोर्वातादुदावृत्तं शकृद्यदा ॥ ३३ ॥
मूत्रस्रोतोनुपर्येति संसृष्टं शकृता तदा ॥
मूत्रं विट्तुल्यगन्धं स्याद्विड्विघातं तमादिशेत् ॥ ३४ ।
पित्तं व्यायामतीक्ष्णोष्णभोजनाध्वातपादिभिः ।
प्रवृद्धं वायुना क्षिप्तं बस्त्युपस्थार्त्तिदाहवत् ॥ ३५ ॥
मूत्रं प्रवर्त्तयेत्पीतं सरक्तं रक्तमेव वा ॥
उष्णं पुनः पुनः कृच्छ्रादुष्णवातं वदंति तम् ॥ ३६ ।
रूक्षस्य क्लान्तदेहस्य बस्तिस्थौ पित्तमारुतौ ॥
मूत्रक्षयं सरुग्दाहं जनयेतां तदाह्वयम् ॥ ३७ ॥
पित्तं कफो द्वावपि वा संहन्येतेऽनिलेन च ॥
कृच्छ्रान्मूत्रं तदा पीतं रक्तं श्वेतं घनं सृजेत् ॥ ३८ ॥
सदाहं रोचनाशङ्खचूर्णवर्णं भवेच्च तत् ॥
शुष्कं समस्तवर्णं वा मूत्रसादं वदन्ति तम् ॥ ३९ ॥
इति विस्तरतः प्रोक्ता रोगा मूत्राऽप्रवृत्तिजाः ॥
निदानलक्षणैरूर्द्ध्वं वक्ष्यन्तेऽतिप्रवृत्तिजाः ॥ ४० ॥

इत्यष्टाङ्गहृदयसंहितायां निदानस्थाने नवमोऽध्यायः ॥ ९ ॥

# दशमोऽध्यायः।



अथात प्रमेहनिदान व्याख्यास्यामः।
प्रमेहा विंशतिस्तत्र श्लेष्मतो दश पित्तत ॥
षट् चत्वारोऽनिलात्तेषा मेदोमूत्रकफावहम् ॥ १ ॥
अन्नपानक्रियाजात यत्प्रायस्तत्प्रवर्त्तकम् ॥
स्वाद्वम्ललवणस्निग्धगुरुपिच्छिलशीतलम् ॥ २ ॥
नवधान्यसुरानूपमासेक्षुगुडगोरसम् ॥
एकस्थानासनरति शयन विधिवर्जितम् ॥ ३ ॥
वस्तिमाश्रित्य कुरुते प्रमेहान्दूपित कफ ॥
दूपयित्वा वपु क्लेदस्वेदमेदोरसामिपम् ॥ ४ ॥
पित्त रक्तमपि क्षीणे कफादौ मूत्रसश्रयम् ॥
धातून्वस्तिमुपानीय तत्क्षयेऽपि च मारुत ॥ ५ ॥
साध्ययाप्यपरित्याज्या मेहास्तेनैव तद्भवा ॥
समासमक्रियतया महात्ययतयापि च ॥ ६ ॥
सामान्य लक्षण तेषा प्रभूताविलमूत्रता ॥
दोषदूष्याविशेपेऽपि तत्सयोगविशेपत ॥ ७ ॥
मूत्रवर्णादिभेदेन भेदो मेहेपु कल्प्यते ॥
अच्छं बहु सित शीत निर्गन्धमुदकोपमम् ॥ ८ ॥
मेहत्युदकमेहेन किञ्चिच्चाविलपिच्छिलम् ॥
इक्षो रसमिवात्यर्थ मधुर चेक्षुमेहत ॥ ९ ॥

सान्द्रीभवेत्पर्युषितं सान्द्रमेही प्रमेहति ॥
सुरामेही सुरातुल्यमुपर्य्यच्छमधो घनम् ॥ १० ॥
संहृष्टरोमा पिष्टेन पिष्टवद्बहुलं सितम् ॥
शुक्राभं शुक्रमिश्रं वा शुक्रमेही प्रमेहति ॥ ११ ॥
सूत्राणून्सिकतामेही सिकतारूपिणो मलान् ॥
शीतमेही सुबहुशो मधुरं भृशशीतलम् ॥ १२ ॥
शनैः शनैः शनैर्मेही मन्दं मन्दं प्रमेहति ॥
लालातन्तुयुतं मूत्रं लालामेहेन पिच्छिलम् ॥ १३ ॥
गन्धवर्णरसस्पर्शैः क्षारेण क्षारतोयवत् ॥
नीलमेहेन नीलाभं कालमेही मषीनिभम् ॥ १४ ॥
हारिद्रमेही कटुकं हरिद्रासन्निभं महत् ॥
विस्रं माञ्जिष्ठमेहेन माञ्जिष्ठासलिलोपमम् ॥ १५ ॥
विस्रमुष्णं सलवणं रक्ताभं रक्तमेहतः ॥
वसामेही वसामिश्रं वसां वा मूत्रयेन्मुहुः ॥ १६ ॥
मज्जानं मज्जमिश्रं वा मज्जमेही मुहुर्मुहुः ॥
हस्ती मत्त इवाजस्रं मूत्रं वेगविवर्जितम् ॥ १७ ॥
सलसीकं विबद्धं च हस्तिमेही प्रमेहति ॥
मधुमेही मधुसमं जायते स किल द्विधा ॥ १८ ॥
क्रुद्धे धातुक्षयाद्वा यो दोषावृतपथेऽथवा ॥
आवृतो दोषलिङ्गानि सोऽनिमित्तं प्रदर्शयेत् ॥ १९ ॥
क्षीणः क्षणात्क्षणात्पूर्णो भजते कृच्छ्रसाध्यताम् ॥
कालेनोपेक्षिताः सर्वे यद्यान्ति मधुमेहताम् ॥ २० ॥

मधुर यच्च सर्वेषु प्रायो मध्विव मेहति ॥
सर्वेपि मधुमेहाख्या माधुर्य्याच्च तनोरत. ॥ २१ ॥
अविपाकोरुचिश्छर्दिर्निद्राकासः सपीनस. ॥
उपद्रवा. प्रजायन्ते मेहाना कफजन्मनाम् ॥ २२ ॥
वस्तिमेहोनयोस्तोदो मुष्कावदरण ज्वर ॥
दाहस्तृष्णाम्लकोमूर्च्छा विड्भेदः पित्तजन्मनाम्॥२३॥
वातिकानामुदावर्त्तकण्ठहृद्ग्रहलोलता. ॥
शूलमुन्निद्रता शोष कासश्वासश्च जायते॥ २४ ॥
शराविका कच्छपिका जालिनी विनताऽलजी ॥
मसूरिका सर्षपिका पुत्रिणी सविदारिका ॥ २५ ॥
विद्रधिश्चेति पिटिका प्रमेहोपेक्षया दश ॥
सन्धिमर्मसु जायन्ते मासलेषु च धामसु ॥ २६ ॥
अन्तोन्नता मध्यनिम्ना श्यावा क्लेदरुजान्विता ॥
शरावमानसस्थाना पिटिका स्याच्छराविका ॥ २७॥
अवगाढार्तिनिस्तोदा महावस्तुपरिग्रहा ॥
श्लक्ष्णा कच्छपपृष्ठाभा पिटिका कच्छपी मता ॥२८॥
स्तब्धा शिराजालवती स्निग्धस्रावा महाशया ॥
रुजानिस्तोदबहुला सूक्ष्मच्छिद्रा च जालिनी ॥ २९॥
अवगाढरुजा क्लेदा पृष्ठे वा जठरेपि वा ॥
महती पिटिका नीला विनता विनता स्मृता ॥ ३० ॥
दहति त्वचमुत्थाने भृश कष्टा विसर्पिणी ॥
रक्तमुष्णातितृट्स्फोटदाहमोहज्वराऽलजी ॥ ३१ ॥

मानसंस्थानयोस्तुल्यामसूरेण मसूरिका ॥
सर्षपा मानसंस्थाना क्षिप्रपाका महारुजा ॥ ३२ ॥
सर्षपा सर्षपातुल्यपिटिका परिवारिता ॥
पुत्रिणी महती भूरिसुसूक्ष्मापिटिकावृता ॥ ३३ ॥
विदारीकन्दवद्वृत्ताकठिना च विदारिका ॥
विद्रधिर्वक्ष्यतेऽन्यत्र तत्राद्यं पिटिकात्रयम् ॥ ३४ ॥
पुत्रिणी च विदारी च दुःसहा बहुमेदसः ॥
सह्याः पित्तोल्बणास्त्वन्याः सम्भवन्त्यल्पमेदसः॥३५॥
तासु मेहवशाच्च स्याद्दोषोद्रेको यथायथम् ॥
प्रमेहेण विनाप्येता जायन्ते दुष्टमेदसः ॥ ३६ ॥
तावच्च नोपलक्ष्यन्ते यावद्वस्तुपरिग्रहः ॥
हारिद्रवर्णं रक्तं वा मेहप्राग्रूपवर्जितम् ॥
यो मूत्रयेन्न तं मेहं रक्तपित्तं तु तद्विदुः ॥ ३७ ॥
स्वेदोऽङ्गगंधः शिथिलत्वमङ्गे शय्यासनस्वप्नसुखाभिषङ्गः ॥
हृन्नेत्रजिह्वाश्रवणोपदेहो घनाङ्गता केशनखातिवृद्धिः ॥३८॥
शीतप्रियत्वं गलतालुशोषो माधुर्य्यमास्ये करपाददाहः ॥
भविष्यतो मेहगणस्य रूपं मूत्रेऽभिधावन्ति पिपीलिकाश्च ३९
दृष्ट्वा प्रमेहं मधुरं सपिच्छं मधूपमं स्याद्द्विविधो विचारः ॥
सन्तर्पणाद्वाकफसम्भवःस्यात्क्षीणेषुदोषेष्वनिलात्मकोवा ४०
सपूर्वरूपाः कफपित्तमेहाः क्रमेण ये वातकृताश्च मेहाः ॥
साध्या न ते पित्तकृतास्तु याप्याः
साध्यास्तुमेदो यदि नातिदुष्टम् ॥ ४१ ॥

इत्यष्टाङ्गहृदयसंहितायां निदानस्थाने दशमोऽध्यायः ॥ १० ॥

# एकादशोऽध्यायः।



अथातो विद्रधिवृद्धिगुल्मनिदानं व्याख्यास्यामः।
भुक्तैः पर्युषितात्युष्णरूक्षशुष्कविदाहिभिः॥
जिह्मशय्याविचेष्टाभिस्तैस्तैश्चासृक्प्रदूषणैः॥ १॥
दुष्टास्त्वङ्मांसमेदोऽस्थिस्नावासृक्कण्डराश्रयः॥
यः शोफो बहिरन्तर्वा महामूलो महारुजः॥ २॥
वृत्तः स्यादायतो यो वा स्मृतः पोटा स विद्रधिः॥
दोषैः पृथक्समुदितैः शोणितेन क्षतेन च॥ ३॥
बाह्योऽत्र तत्र तत्राङ्गे दारुणो ग्रथितोन्नतः॥
आन्तरो दारुणतरो गम्भीरो गुल्मवद्घनः॥ ४॥
वल्मीकवत्समुच्छ्रायी शीघ्रघात्यग्निशस्त्रवत्॥
नाभिवस्तियकृत्प्लीहक्लोमहृत्कुक्षिवक्षणे॥ ५॥
स्याद् वृक्कयोरपाने च वातात्तत्रातितीव्ररुक्॥
श्यावारुणश्चिरोत्थानपाको विषमसंस्थितिः॥ ६॥
व्यधच्छेदभ्रमानाहस्यन्दसर्पणशब्दवान्॥
रक्तताम्रासितः पित्तात्तृण्मोहज्वरदाहवान्॥ ७॥
क्षिप्रोत्थानप्रपाकश्च पाण्डुः कण्ड्युतः कफात्॥
सोत्क्लेशशीतकस्तम्भजृम्भारोचकगौरवः॥ ८॥
चिरोत्थानविदाहश्च सङ्कीर्णः सन्निपाततः॥
सामर्थ्याच्चात्र विभजेद्बाह्याभ्यन्तरलक्षणम्॥ ९॥

कृष्णस्फोटावृतः श्यावस्तीव्रदाहरुजाज्वरः ॥
पित्तलिङ्गोऽसृजा बाह्यः स्त्रीणामेव तथान्तरः ॥ १० ॥
शस्त्राद्यैरभिघातेन क्षते वाऽपथ्यकारिणः ॥
क्षतोष्मा वायुविक्षिप्तः सरक्तं पित्तमीरयन् ॥ ११ ॥
पित्तासृग्लक्षणं कुर्य्याद्विद्रधिं भूर्युपद्रवम् ॥
तेषूपद्रवभेदश्च स्मृतोऽधिष्ठानभेदतः ॥ १२ ॥
नाभ्यां हिध्मा भवेद्वस्तौ मूत्रं कृच्छ्रेण पूति च ॥
श्वासो यकृति रोधस्तु प्लीह्न्युच्छ्वासस्य तृट् पुनः ॥१३॥
गलग्रहश्च क्लोम्नि स्यात्सर्वाङ्गप्रग्रहो हृदि ॥
प्रमोहस्तमकः कासो हृदये घट्टनं व्यथा ॥ १४ ॥
कुक्षिः पार्श्वान्तरांसार्त्तिः कक्षावाटोपजन्म च ॥
सक्थ्नोर्ग्रहो वंक्षणयोर्वृक्कयोः कटिपृष्ठयोः ॥ १५ ॥
पार्श्वयोश्च व्यथा पायौ पवनस्य निरोधनम् ॥
आमपक्वविदग्धत्वं तेषां शोफवदादिशेत् ॥ १६ ॥
नाभेरूर्ध्वं मुखात्पक्वाः प्रस्रवन्त्यधरे गुदात् ॥
उभाभ्यां नाभिजो विद्याद्दोषं क्लेदाच्च विद्रधौ ॥ १७ ॥
यथास्वं व्रणवत्तत्र विवर्ज्यः सन्निपातजः ॥
पक्वो हृन्नाभिबस्तिस्थो भिन्नोऽन्तर्बहिरेव वा ॥ १८ ॥
पक्वश्चान्तः स्रवन्वक्त्रात्क्षीणस्योपद्रवान्वितः ॥
एवमेव स्तनशिराविवृताः प्राप्य योषिताम् ॥ १९ ॥
सूतानां गर्भिणीनां वा सम्भवेच्छ्वयथुर्घनः ॥
स्तने सदुग्धेऽदुग्धे वा बाह्यविद्रधिलक्षणः ॥ २० ॥

नाडीना सूक्ष्मवक्रत्वात्कन्यानान्तु नजायते ॥
क्रुद्धो रुद्धगतिर्वायु. शोफशूलकरश्चरन् ॥ २१ ॥
मुष्कौ वङ्क्षणतः प्राप्य फलकोशाभिवाहिनीः॥
प्रपीड्य धमनीर्वृद्धि करोति फलकोशयो. ॥ २२ ॥
दोषास्रमेदोमूत्रान्त्रै सवृद्धि सप्तधा गद.॥
मूत्रान्त्रजावप्यनिलाद्धेतुभेदस्तुकेवलम् ॥ २३ ॥
वातपूर्णदृतिस्पर्शो रूक्षो वातादहेतुरुक्॥
पक्वोदुम्बरसकाश पित्ताद्दाहोष्मपाकवान्॥ २४ ॥
कफाच्छीतो गुरु स्निग्ध कण्डूमान्कठिनोऽल्परुक् ॥
कृष्णस्फोटावृत पित्तवृद्धिलिंगश्च रक्तत ॥ २५ ॥
कफवन्मेदसा वृद्धिर्मृदुस्तालफलोपम. ॥
मूत्रधारणशीलस्य मूत्रज स तु गच्छत. ॥ २६ ॥
अभोभि पूर्णदृतिवत्क्षोभयाति सरुड् मृदु ॥
मूत्र कृच्छ्रमधस्ताच्च वलय फलकोशयो. ॥ २७ ॥
वातकोपिभिराहारै शीततोयावगाहनै. ॥
धारणे रणभावाध्वविषमाङ्गप्रवर्तनै. ॥ २८ ॥
क्षोभणै क्षुभितोऽन्यैश्च क्षुद्रान्त्रावयव यदा॥
पवनो द्विगुणीकृत्य स्वनिवेशादधो नयेत् ॥
कुर्याद्वङ्क्षणसन्धिस्थो ग्रन्थ्याभं श्वयथुतदा ॥ २९ ॥
उपेक्ष्यमाणस्य च मुष्कवृद्धिमाध्मानरुक्स्तम्भवती स वायु.॥
प्रपीडितोऽन्त स्वनवान्प्रयातिप्रध्मापयन्नेति पुनश्चमुक्त ३०

क्षारीदीन्सासितांस्तोयं केवलं वाजलं हितम् ॥
रसोदाडिमपुष्पाणामाम्रोत्थःशाल्मलस्यवा ॥ ४७ ॥
कल्पयेच्छीतवर्गं च प्रदेहाभ्यञ्जनादिषु ॥ ४८ ॥

इत्यष्टाङ्गहृदयसहितायां चिकित्सास्थाने द्वितीयोऽध्यायः ॥ २ ॥

## तृतीयोऽध्यायः ।

अथातः कासचिकित्सितं व्याख्यास्यामः ।
केवलानिलजं कासं स्नेहैरादावुपाचरेत् ॥
वातघ्नसिद्धैः स्निग्धैश्चपेयायूषरसादिभिः ॥ १ ॥
लेहैर्धूमैस्तथाभ्यङ्गैःस्वेदसेकावगाहनैः ॥
बस्तिभिर्बद्धविड्वातं सपित्तं तूर्ध्वभक्तिकैः ॥ २ ॥
घृतैः क्षीरैश्चसकफं जयेत्स्नेहविरेचनैः ॥
गुडूचीकण्टकारीभ्यां पृथक्त्रिंशत्पलाद्रसे ॥ ३ ॥
प्रस्थः सिद्धो घृताद्वातकासनुद्वह्निदीपनः ॥
क्षाररास्नावचाहिङ्गुपाठायष्ट्याह्वधान्यकैः ॥ ४ ॥
द्विशाणैः सर्पिषः प्रस्थं पञ्चकोलयुतैः पचेत् ॥
दशमूलस्य निर्यूहे पीतो मण्डानुपायिना ॥ ५ ॥
सकासश्वासहृत्पार्श्वग्रहणीरोगगुल्मनुत् ॥
द्रोणेऽपां साधयेद्रास्नादशमूलशतावरीः ॥ ६ ॥
पलोन्मिताद्विकुडवं कुलत्थं बदरं यवम् ॥
तुलार्द्धं चाजमासस्य तेन साध्यंघृताढकम् ॥ ७ ॥

समक्षीरं पलाशैश्च जीवनीयैःसमीक्ष्य तत् ॥
प्रयुक्त वातरोगेषु पाननावनवास्तिभिः ॥ ८ ॥
पञ्चकासाञ्छिरःकम्पं योनिंवंक्षणवेदनाम् ॥
सर्वाङ्गैकाङ्गरोगाश्चसप्लीहोर्ध्वानिलाञ्जयेत् ॥ ९ ॥
विदार्य्यादिगणकाथकल्कसिद्धं च कासजित् ॥
अशोकबीजक्षवकजन्तुघ्नाञ्जनपद्मकैः ॥ १० ॥
सविडैश्च घृतं सिद्धं तच्चूर्णं वा घृतप्लुतम् ॥
लिह्यात्पयश्चानुपिवेदाजं कासादिपीडित' ॥ ११ ॥
विडङ्ग नागरं रास्ना पिप्पली हिङ्गु सैन्धवम् ॥
भार्ङ्गीक्षारश्चतच्चूर्णं पिवेद्वा घृतमात्रया ॥ १२ ॥
सकफेऽनिलजे कासे श्वासहिध्माहताग्निषु ॥
दुरालभा शृङ्गवेर शठी द्राक्षा सितोपलाम् ॥ १३ ॥
लिह्यात्कर्कटशृगी च कासे तैलेन वातजे ॥
दुस्पर्शा पिप्पली मुस्ता भार्ङ्गी कर्कटकी शठीम् ॥ १४ ॥
पुराणगुडतैलाभ्या चूर्णितान्यवलेहयेत् ॥
तद्वत्सकृष्णा शुण्ठीं च सभार्ङ्गी तद्वदेव च ॥ १५ ॥
पिवेच्च कृष्ण कोष्णेनसलिलेनससैन्धवाम् ॥
मस्तुना ससितां शुण्ठी दध्ना वा कणरेणुकाम् ॥ १६ ॥
पिवेद्वदरमज्जो वा मदिरादधिमस्तुभिः ॥
अथवा पिप्पलीकल्कं घृतभृष्टं ससैन्धवम् ॥ १७ ॥
कासीसपीनसो धूमं स्नैहिक विधिना पिवेत् ॥
हिध्माश्वासोक्तधूमाश्च क्षीरमांसरसाशन. ॥ १८ ॥

ग्राम्यानूपोदकैः शालियवगोधूमषष्टिकान् ॥
रसैर्माषात्मगुप्तानां यूषैर्वा भोजयेच्छितान् ॥ १९ ॥
यवानीपिप्पलीविल्वमध्यनागरचित्रकैः ॥
रास्नाजाजीपृथक्पर्णी पलाशशठिपौष्करैः ॥ २० ॥
सिद्धां स्निग्धाम्ललवणां पेयामनिलजे पिबेत् ॥
कटिहृत्पार्श्वकोष्ठार्तिश्वासहिध्माप्रणाशिनीम् ॥ २१ ॥
दशमूलरसे तद्वत्पञ्चकोलगुडान्विताम् ॥
पिबेत्पेयांसमतिलां क्षैरेयीं वा ससैन्धवाम् ॥ २२ ॥
मात्स्यकौक्कुटवाराहैर्मांसैर्वा साज्यसैन्धवाम् ॥
वास्तुको वायसीशाकं कासघ्नःसुनिषण्णकः ॥ २३ ॥
कण्टकार्याः फलं पत्रं बालं शुष्कं च मूलकम् ॥
स्नेहास्तैलादयो भक्ष्याः क्षीरेक्षुरसगौडिकाः ॥ २४ ॥
दधिमस्त्वारनालाम्लफलाम्बुमदिराः पिबेत् ।
पित्तकासे तु सकफे वमनं सर्पिषा हितम् ॥ २५ ॥
तथा मदनकाश्मर्य्यमधुकक्वथितैर्जलैः ॥
फलयष्ट्याह्वकल्कैर्वा विदारीक्षुरसाप्लुतैः ॥ २६ ॥
पित्तकासे तनुकफे त्रिवृतां मधुरैर्युताम् ।
युंज्याद्विरेकाय युतांघनश्लेष्मणि तिक्तकैः ॥ २७ ॥
हृतदोषो हिमं स्वादु स्निग्धं संसर्जनं भजेत् ॥
घने कफे तु शिशिरं रूक्षं तिक्तोपसंहितम् ॥ २८ ॥
लेहः पैत्ते सिताधात्रीक्षौद्रद्राक्षाहिमोत्पलैः ।
सकफे साब्दमरिचः सघृतः सानिले हितः ॥ २९ ॥

मृद्वीकार्द्धशतं त्रिंशत्पिप्पली॰ शर्करापलम् ।
लेहयेन्मधुनागोर्वा क्षीरपस्य शकृद्रसम् ॥ ३० ॥
त्वगेलाव्योपमृद्वीकापिप्पलीमूलपौष्करैः ॥
लाजमुस्ताशठीरास्नाधात्रीफलविभीतकैः ॥ ३१ ॥
शर्कराक्षौद्रसर्पिर्भिर्लेहोहृद्रोगकासहा ॥
मधुरैर्जाङ्गलरसैर्यवश्यामाककोद्रवा ॥३२॥
मुद्गादियूषै. शाकैश्च तिक्तकैर्मात्रया हिता॰ ॥
घनश्लेष्मणि लेहाश्च तिक्तकामधुसंयुता ॥३३॥
शालय. स्युस्तनुकफे षष्टिकाश्च रसादिभि.॥
शर्कराम्भोऽनुपानार्थं द्राक्षेक्षुस्वरसा॰ पयः ॥ ३४ ॥
काकोलीबृहतीमेदाद्वयै सवृषनागरे ॥
पित्तकासे रसक्षीरपेयायूषान्प्रकल्पयेत् ॥ ३५ ॥
द्राक्षा कणा पञ्चमूल तृणाख्यं च पचेज्जले ॥
तेन क्षीरं शृत शीतं पिबेत्समधुशर्करम् ॥ ३६ ॥
साधिता तेन पेया वा सुशीता मधुनान्विताम् ॥
शठीह्रीवेरबृहतीशर्कराविश्वभेषजम् ॥ ३७ ॥
पिष्ट्वा रस पिबेत्पूतं वस्त्रेण घृतमूर्च्छितम् ॥
शर्करा जीवक मुद्गमाषपर्ण्यौ दुरालभाम् ॥ ३८ ॥
कल्कीकृत्य पचेत्सर्पिं क्षीरेणाष्टगुणेन तत् ॥
पानभोजनलेहेषु प्रयुक्तं पित्तकासजित् ॥ ३९ ॥
लिह्याद्वा चूर्णमेतेषा कषायमथवा पिबेत् ॥
कफकासी पिबेद्वादौ सुरकाष्ठात्प्रदीपितात् ॥ ४० ॥

स्नेहं परिस्रुतं व्योषयवक्षारावचूर्णितम् ॥
स्निग्धं विरेचयेदूर्ध्वमधोमूर्ध्नि च युक्तितः ॥ ४१ ॥
तीक्ष्णैर्विरेकैर्बलिनं संसर्गीं चास्य योजयेत् ॥
यवमुद्गकुलत्थान्नैरुष्णरूक्षैः कटूत्कटैः ॥ ४२ ॥
कासमर्दकवार्त्ताकव्याघ्रीक्षारकणान्वितैः ॥
धान्वबैलरसैः स्नेहैस्तिलसर्षपनिम्बजैः ॥ ४३ ॥
दशमूलाम्बु घर्माम्बु मद्यं मध्वम्बु वा पिबेत् ॥
मूलैः पौष्करशम्याकपटोलैः संस्थितं निशाम् ॥ ४४ ॥
पिबेद्वारि सहक्षौद्रं कालेष्वन्नस्य वा त्रिषु ॥
पिप्पली पिप्पलीमूलं शृङ्गवेरं विभीतकम् ॥ ४५ ॥
शिखिकक्कुटपिच्छानां मषीक्षारो यवोद्भवः ॥
विशाला पिप्पलीमूलं त्रिवृता च मधुद्रवाः ॥ ४६ ॥
कफकासहरा लेहास्त्रयः श्लोकार्द्धयोजिताः ॥
मधुना मरिचं लिह्यान्मधुनैव च जोङ्गकम् ॥ ४७ ॥
पृथग्रसांश्चमधुना व्याघ्रीवार्त्ताकभृङ्गजान् ॥
कासघ्नस्याश्वशकृतः सुरसस्यासितस्य च ॥ ४८ ॥
देवदारुशठीरास्नाकर्कटाख्यादुरालभाः ॥
पिप्पली नागरं मुस्तं पथ्या धात्री सितोपला ॥ ४९ ॥
लाजा सितोपला सर्पिः शृङ्गी धात्रीफलोद्भवा ॥
मधुतैलयुता लेहास्त्रयो वातानुगे कफे ॥ ५० ॥
द्वे पले दाडिमादष्टौ गुडाद्व्योषात्पलत्रयम् ॥
रोचनं दीपनं स्वर्यं पीनसश्वासकासजित् ॥ ५१ ॥

गुडक्षारोषणकणादाडिम श्वासकासजित् ॥
क्रमात्पलद्वयार्द्धाक्षकर्षाक्षार्धपलोन्मितम् ॥ ५२ ॥
पिवज्ज्वरोक्तं पथ्यादि सशृङ्गीकश्च पाचनम् ॥
अथवा दीप्यकत्रिवृद्धिशालाघनेपौष्करम् ॥ ५३ ॥
सकण क्थित मूत्रे कफकासी जलेऽपि वा ॥
तैलमृष्टं च वैदेही कल्काक्ष ससितोपलम् ॥ ५४ ॥
पाययेत्कफकासघ्नं कुलत्थसलिलाप्लुतम् ॥
दशमूलाढके प्रस्थ घृतस्याक्षसमै पचेत् ॥ ५५ ॥
पुष्कराह्वशटीविल्वसुरसाव्योपहिङ्गुभि' ॥
पेयानुपान तत्सर्पिर्वातश्लेष्मामयापहम् ॥ ५६ ॥
निर्गुण्डीपत्रनिर्य्यासंसाधित कासजिद्घृतम् ॥
घृत रसे विडङ्गाना व्योपगर्भेश्च साधितम् ॥ ५७ ॥
पुनर्नवशिवाटिकासरलकासमर्दामृता-
पटोलवृहतीफणिज्जकरसैः पय सयुतै ॥
घृत त्रिकटुना च सिद्धसुपयुज्य सञ्जायते
न कासविषमज्वरक्षयगुदाङ्करेभ्यो भयम् ॥ ५८ ॥
समूलफलपत्राया• कण्टकार्य्या रसाढके ॥
घृतप्रस्थ वलाव्योषविडङ्गशठिदाडिमै ॥ ५९ ॥
सौवर्चलयवक्षारमूलामलकपौष्करै. ॥
वृश्चीववृहतीपथ्यायवानीचित्रकार्द्धिभि ॥ ६० ॥
मृद्वीकाचव्यवर्षाभूदुरालम्भाऽम्लवेतसै ॥
शृङ्गीतामलकीभार्ङ्गीरास्नागोक्षुरकै पचेत् ॥ ६१ ॥

कल्कैस्तत्सर्वकासेषु श्वासहिध्मासु चेष्यते ॥ ६२ ॥
पचेद्व्याघ्रीतुलां क्षुण्णां वहेपामाढकस्थिते ॥ ६३ ॥
क्षिप्तेपूतेतु संचूर्ण्य व्योषरास्नामृताग्निकान् ॥
शृङ्गीभार्ङ्गीघनग्रन्थिधन्वयासान्पलार्द्धकान् ॥ ६४ ॥
सर्पिषः षोडशपलं चत्वारिंशत्पलानि च ॥
मत्स्यण्डिकायाः शुद्धायाः पुनश्च तदधिश्रयेत् ॥ ६५ ॥
दर्वीलेपिनि शीते च पृथग्द्विकुडवं क्षिपेत् ॥
पिप्पलीनां तवक्षीर्य्या माक्षिकस्यानवस्य च ॥ ६६ ॥
लेहोऽयं गुल्महृद्रोगदुर्नामश्वासकासजित् ॥
शमने च पिबेद्धूमं शोधनं बहुले कफे ॥ ६७ ॥
मनःशिलालमधुकमांसीमुस्तेङ्गुदीत्वचः ॥
धूमं कासघ्नविधिनापीत्वा क्षीरंपिबेदनु ॥ ६८ ॥
निष्ठ्यूतान्ते गुडयुतंकोष्णं धूमो निहन्ति सः ॥
वातश्लेष्मोत्तरान्कासानचिरेण चिरन्तनान् ॥ ६९ ॥
तमकः कफकासे तु स्याच्चेत्पित्तानुबन्धजः ॥
पित्तकासक्रियां तत्र यथावस्थं प्रयोजयेत् ॥ ७० ॥
कफानुबन्धे पवने कुर्य्यात्कफहरां क्रियाम् ॥
पित्तानुबन्धयोर्वातकफयोः पित्तनाशिनीम् ॥ ७१ ॥
वातश्लेष्मात्मके शुष्के स्निग्धं चार्द्रे विरूक्षणम् ॥
कासे कर्म सपित्ते तु कफजे तिक्तसंयुतम् ॥ ७२ ॥
उरस्यन्तःक्षते सद्यो लाक्षां क्षौद्रयुता पिबेत् ॥
क्षीरेण शालीञ्जीर्णेऽद्यात्क्षीरेणैवसशर्करान् ॥ ७३ ॥

पार्श्ववस्तिसरुक्चाल्पपित्ताग्निस्ता सुरायुताम् ॥
भिन्नविट्कः ससुस्तातिविषापाठांसवत्सकाम् ॥ ७४ ॥
लाक्षां सर्पिर्म्मधूच्छिष्ट जीवनीयं गणं सितम् ॥
त्वक्क्षीरीसमितं क्षीरे पक्त्वा दीप्तानलःपिबेत् ॥ ७५ ॥
इक्ष्वारिकाविषग्रन्थिपद्मकेसरचन्दनैः ॥
शृतं पयो मधुयुत सन्धानार्थं क्षती पिबेत् ॥ ७६ ॥
यवाना चूर्णमामाना क्षीरे सिद्ध घृतान्वितम् ॥
ज्वरदाहे सिताक्षौद्रसक्तून्वा पयसा पिबेत् ॥ ७७ ॥
कासवाश्च पिबेत्सर्पिर्मधुरौषधसाधितम् ॥
गुडोदकवा क्वथितंसक्षौद्रमरिच हिमम् ॥ ७८ ॥
चूर्णमामलकाना वा क्षीरपक्व घृतान्वितम् ॥
रसायनविधानेन पिप्पलीर्वा प्रयोजयेत् ॥ ७९ ॥
कासी पर्वास्थिशूली च लिह्यात्सघृतमाक्षिकान् ॥
मधूकमधुकद्राक्षात्वक्क्षीरीपिप्पलीबलान् ॥ ८० ॥
त्रिजातमर्धकर्षांस पिप्पल्यर्धपल सिता ॥
द्राक्षा मधूकं खर्जूर पलाश श्लक्ष्णचूर्णितम् ॥ ८१ ॥
मधुना गुटिका घ्नन्ति ता वृष्याः पित्तशोणितम् ॥
कासश्वासारुचिच्छर्दिमूर्च्छाहिध्मावमिभ्रमान् ॥ ८२ ॥
क्षतक्षयस्वरभ्रंशप्लीहशोफाढ्यमारुतान् ॥
रक्तनिष्ठीवहृत्पार्श्वरुक्पिपासाज्वरानपि ॥ ८३ ॥
वर्षाभूशर्करारक्तशालितण्डुलजंरज ॥
रक्तष्ठीवी पिबेत्सिद्धद्राक्षारसपयोघृतैः ॥ ८४ ॥

मधूकमधुकक्षीरसिद्धं वा तण्डुलीयकम् ॥
यथा स्वमार्गविसृते रक्ते कुर्य्याच्च भेषजम् ॥ ८५ ॥
मूढवातस्त्वजामेदःसुराभृष्टं ससैन्धवम् ॥
क्षामःक्षीणक्षतोरस्को मन्दनिद्रोऽग्निदीप्तिमान् ॥ ८६ ॥
शृतक्षीररसेनाद्यात्सघृतक्षौद्रशर्करम् ॥
शर्करां यवगोधूमं जीवकर्षभकौ मधु ॥ ८७ ॥
शृतक्षीरानुपानं वा लिह्यात्क्षीणः क्षतः कृशः ॥
क्रव्यात्पिशितनिर्यूहं घृतभृष्टं पिबेच्च सः ॥ ८८ ॥
पिप्पलीक्षौद्रसंयुक्तं मांसशोणितवर्धनम् ॥
न्यग्रोधोदुम्बराश्वत्थप्लक्षशालप्रियंगुभिः ॥ ८९ ॥
तालमस्तकजम्बूत्वक्प्रियालैश्च सपद्मकैः ॥
साश्वकर्णैः शृतात्क्षीरादद्याज्जातेनसर्पिषा ॥ ९० ॥
शाल्योदनंक्षतोरस्कःक्षीणशुक्रबलेन्द्रियः ॥
वातपित्तार्दितेऽभ्यंगो गात्रभेदर्वृतैर्मतः ॥ ९१ ॥
तैलैश्चातिलरोगघ्नैः पीडिते मातरिश्वना ॥
हृत्पार्श्वार्तिषु पानं स्याज्जीवनीयस्य सर्पिषः ॥ ९२ ॥
कुर्य्याद्वा वातरोगघ्नं पित्तरक्ताविरोधि यत् ॥
यष्ट्याह्वनामबलयोः क्वाथे क्षीरे समे घृतम् ॥ ९३ ॥
पयस्यापिप्पलीवांशीकल्कैः सिद्धं क्षते हितम् ॥
जीवनीयो गणः शुण्ठी वरी वीरा पुनर्नवा ॥ ९४ ॥
बलाभार्ङ्गी स्वगुप्तार्द्धशठी चामलकी कणा ॥
शृंगाटकं पयस्या च पञ्चमूलं च यल्लघु ॥ ९५

द्राक्षक्षौद्रादि च फल मधुरस्निग्धवृहणम् ॥
तै पचेत्सर्पिष प्रस्थ कर्पांशै· श्लक्ष्णकल्कितैः ॥ ९६ ॥
क्षीरधात्री विदारीक्षुच्छागमासरसान्वितम् ॥
प्रस्थार्द्धमधुन· शीते शर्करार्द्ध तुलारज· ॥ ९७ ॥
पलार्द्धक च मारिच त्वगेलापत्रकेसरम् ॥
विनीय चूर्णितं तस्माल्लिह्यान्मात्रायथावलम् ॥ ९८ ॥
अमृतप्राशमित्येतन्नराणाममृत घृतम् ॥
सुधामृतरस प्राश्यं क्षीरमासरसाशिनां ॥ ९९ ॥
नष्टशुक्रक्षतक्षीणदुर्वलव्याधिकर्शितान् ॥
स्त्रीप्रसक्तान्कृशान्वर्णस्वरहीनाश्च वृहयेत् ॥ १०० ॥
कासहिध्माज्वरश्वासदाहतृष्णास्रपित्तनुत् ॥
पुत्रद छर्दिमूर्च्छाहृद्योनिमूत्रामयापहम् ॥ १०१ ॥
श्वदंष्ट्रोशीरमञ्जिष्ठावलाकाश्मर्य्यकट्तृणम् ॥
दर्भमूलं पृथक्पर्णी पलाशर्षभका स्थिरा ॥ १०२ ॥
पालिकानि पचेत्तेषा रसेक्षीरचतुर्गुणे ॥
कल्के सुगुप्ता जीवन्तीमेदकर्षभजीवकैः ॥ १०३ ॥
शतावर्यर्द्धिमृद्वीकाशर्कराश्रावणीविसै ॥
प्रस्थ· सिद्धोघृताद्वातपित्तहृद्रोगशूलनुत् ॥ १०४ ॥
मूत्रकृच्छ्रप्रमेहार्श·कासशोषक्षयापह ॥
धनु स्त्रीमद्यभाराध्वखिन्नाना वलमासद ॥ १०५ ॥
मधुकाष्टपलद्राक्षाप्रस्थक्वाथे प्रचेद्घृतम् ॥
पिप्पल्यष्टपले कल्केप्रस्थं सिद्धे च शीतले ॥ १०६ ॥

पृथगष्टपलं क्षौद्रशर्कराभ्यांविमिश्रयेत् ॥
समसक्तुक्षतक्षीणरक्तगुल्मेषु तद्धितम् ॥ १०७ ॥
धात्रीफलविदारीक्षुजीवनीयरसाद्धृतात् ॥
गव्याजयोश्चपयसोःप्रस्थं प्रस्थं विपाचयेत् ॥ १०८ ॥
सिद्धपूते सिताक्षौद्रं द्विप्रस्थं विनयेत्ततः ॥
यक्ष्मापस्मारपित्तासृक्कासमेहक्षयापहम् ॥ १०९ ॥
वयः स्थापनमायुष्यं मांसशुक्रबलप्रदम् ॥
घृतं तु पित्तेऽभ्यधिके लिह्याद्वाताधिके पिबेत् ॥ ११० ॥
लीढं निर्वापयेत्पित्तमल्पत्वाद्धन्ति नानलम् ॥
आक्रामत्यनिलं पीतमूष्माणं निरुणद्धि च ॥ १११ ॥
क्षामक्षीणकृशाङ्गनामेतान्येव घृतानि तु ॥
त्वक्क्षीरीपिप्पली लाजचूर्णैः पानानि योजयेत् ॥११२॥
सर्पिर्गुडान्समध्वंशान्कृत्वा दद्यात्पयोनु च ॥
रेतो वीर्य्यं बलं पुष्टिं तैराशुतरमाप्नुयात् ॥ ११३ ॥
वीतत्वगस्थिकूष्माण्डतुलां स्विन्नां पुनः पचेत् ॥
घट्टयन्सर्पिषः प्रस्थे क्षौद्रवर्णेऽत्र च क्षिपेत् ॥ ११४ ॥
खण्डाच्छतं कणाशुण्ठ्योर्द्विपलं जीरकादपि ॥
त्रिजातधान्यमरिचं पृथगर्द्धं पलांशकम् ॥ ११५ ॥
अवतारितशीते च दत्त्वा क्षौद्रं घृतार्द्धकम् ॥
खजेनामथ्य च स्थाप्य तन्निहन्त्युपयोजितम् ॥ ११६ ॥
कासहिध्माज्वरश्वासरक्तपित्तक्षतक्षयान् ॥
उरःसन्धानजननंमेधास्मृतिबलप्रदम् ॥ ११७ ॥

अश्विभ्यां विहित हृद्य कूष्माण्डकरसायनम् ॥
पिबेन्नागबलामूलस्यार्द्धकर्षाभिवर्धितम् ॥ ११८ ॥
पल क्षीरयुतमास क्षीरवृत्तिरनन्नभुक् ॥
एष प्रयोग. पुष्ट्यायुर्बलवर्णकर परम्॥ ११९ ॥
मण्डूकपर्ण्या कल्पोऽय यष्ट्या विश्वौषधस्य च ॥
पादशेष जलद्रोणे पचेन्नागबलातुलाम् ॥ १२० ॥
तेन क्वाथेनतुल्याश घृत क्षीरेण पाचयेत् ॥
पलार्द्धिकैश्चातिबलाबलायष्टीपुनर्नवै ॥ १२१ ॥
प्रपौण्डरीककाश्मर्य्यप्रियालकपिकच्छुभि ॥
अश्वगन्धासिताभीरुमेदायुग्मत्रिकण्टकै ॥ १२२ ॥
काकोलीक्षीरकाकोलीक्षीरशुक्लाद्विजीरकै ॥
एतन्नागबलासर्पि पित्तरक्तक्षतक्षयान् ॥ १२३ ॥
जयेत्तृड्भ्रमदाहाश्च बलपुष्टिकर परम् ॥
वर्ण्यमायुष्यमोजस्य वलीपलितनाशनम् ॥ १२४ ॥
उपयुज्य च षण्मासान्वृद्धोऽपि तरुणायते ॥
दीप्तेऽग्नौ विधिरेष स्यान्मन्दे दीपनपाचन ॥ १२५ ॥
यक्ष्मोक्त. क्षतिना शस्तो ग्राही स्रक्काति तु द्रवे ॥
दशमूल स्वयंगुप्ता शखपुष्पी शठी बलाम् ॥ १२६ ॥
हस्तिपिप्पल्यपामार्गपिप्पलीमूलचित्रकान् ॥
भार्ङ्गीपुष्करमूलचद्विपलाशान्यवाढकम् ॥ १२७ ॥
हरीतकीशत चैक जले पञ्चाटके पचेत् ॥
यवस्विन्ने कषायं तं पूतं तच्चाभयाशतम् ॥ १२८ ॥

पचेद्गुडतुलां दत्त्वा कुडवं च पृथग्घृतात् ॥
तैलात्सपिप्पलीचूर्णात्सिद्धशीते च माक्षिकात् ॥ १२९ ॥
लेहं द्वे चाभये नित्यमतःखादेद्रसायनात् ॥
तद्वलीपलितं हन्याद्वर्णायुर्बलवर्द्धनम् ॥ १३० ॥
पञ्चकासान्क्षयं श्वासं सहिध्मं विषमज्वरम् ॥
मेहगुल्मग्रहण्यर्शोहृद्रोगारुचिपीनसान् ॥ १३१ ॥
अगस्तिविहितं धन्यमिदं श्रेष्ठं रसायनम् ॥
दशमूलं बलां मूर्वां हरिद्रे पिप्पलीद्वयम् ॥ १३२ ॥
पाठाश्वगन्धापामार्गस्वगुप्तातिविषामृतम् ॥
बालबिल्वं त्रिवृद्दन्तीमूलं पत्रं च चित्रकात् ॥ १३३ ॥
पयस्या कुटजं हिंस्रां पुष्पं सारं च बीजकात् ॥
बोटस्थबोरभल्लातविकङ्कतशतावरी ॥ १३४ ॥
पूतीकरञ्जशम्याकचन्द्रलेखासहाचरम् ॥
सौभाञ्जनकनिम्बत्वगिक्षुरं च पलांशकम् ॥ १३५ ॥
पथ्यासहस्रं सशतं यवानां चाढकद्वयम् ॥
पचेदष्टगुणे तोये यवस्वेदेऽवतारयेत् ॥ १३६ ॥
पूते क्षिपेत्सपथ्ये च तत्र जीर्णगुडात्तुलाम् ॥
तैलाज्यधात्रीरसतः प्रस्थं प्रस्थं ततः पुनः ॥ १३७ ॥
अधिश्रयेन्मृदावग्नौ दर्वीलेपेऽवतार्य्य च ॥
शीते प्रस्थद्वयं क्षौद्रात्पिप्पलीकुडवं क्षिपेत् ॥ १३८ ॥
चूर्णीकृतं त्रिजाताच्च त्रिपलं निखनेत्ततः ॥
धान्ये पुराणकुम्भस्थं मासं खादेच्च पूर्ववत् ॥ १३९ ॥

रसायन वसिष्ठोक्तमेतत्पूर्वगुणाधिकम् ॥
स्वस्थाना निष्परीहार सर्वर्तुषु च शस्यते ॥ १४० ॥
पालिक सैन्धव शुण्ठी द्वे च सौवर्चलात्पले ॥
कुडवाशानिवृक्षाम्ल दाडिम पत्रमार्जकम् ॥ १४१ ॥
एकैका मरिचाजाज्योर्धान्यकाद्वे चतुर्थिके ॥
शर्कराया पलान्यत्र दश द्वे च प्रदापयेत् ॥ १४२ ॥
कृत्वा चूर्णमतोमात्रामन्नपानेषु दापयेत् ॥
रुच्य तद्दीपन वल्य पार्श्वार्तिश्वासकासजित् ॥ १४३ ॥
एका षोडशिका धान्याद्वे द्वे वाऽजाजिदीप्यकात् ॥
ताभ्यादाडिमवृक्षाम्लैर्द्विद्विसौवर्चलात्पलम् ॥ १४४ ॥
शुण्ठ्या.कर्प दधित्थस्य मध्यात्पञ्च पलानि च ॥
तच्चूर्ण षोडशपलै शर्कराया विमिश्रयेत् ॥ १४५ ॥
खाण्डवोऽयं प्रदेय स्यादन्नपानेषु पूर्ववत् ॥
विधिश्च यक्ष्मविहितो यथावस्थं क्षते हित ॥ १४६ ॥
निवृत्ते क्षतदोषे तु कफे वृद्धे उर शिर ॥
दाल्यते कासिनो यस्य सधूमान्प्रापिवेदिमान् ॥ १४७ ॥
द्विमेदाद्विवलायष्टीकल्कै. क्षौमे सुभाविते ॥
वर्ति कृत्वा पिवेद्धूमं जीवनीयघृतानुप ॥ १४८ ॥
मन.शिलापलाशाजगन्धात्वक्क्षीरनागरै ॥
तद्वदेवाऽनुपानं तु शर्करेक्षुगुडोदकम् ॥ १४९ ॥
पिष्ट्वा मन शिला तुल्यामार्द्रयावटशृङ्गया ॥
ससर्पिष्कं पिवेद्धूमंतित्तिरिप्रतिभोजनम् ॥ १५० ॥

क्षयजे बृंहणं पूर्वं कुर्य्यादग्नेश्च वर्द्धनम् ॥
बहुदोषाय सस्नेहंमृदु दद्याद्विरेचनम् ॥ १५१ ॥
शम्याकेन त्रिवृतया मृद्वीकारसयुक्तया ॥
तिल्वकस्य कषायेण विदारीस्वरसेन च ॥ १५२ ॥
सर्पिः सिद्धं पिबेद्युक्त्या क्षीणदेहो विशोधनम् ॥
पित्ते कफे धातुषु च क्षीणेषु क्षयकासवान् ॥ १५३ ॥
घृतं कर्कटकीक्षीरद्विबलासाधितं पिबेत् ॥
विदारीभिः कदम्बैर्वा तालसस्यैश्च साधितम् ॥ १५४ ॥
घृतं पयश्च मूत्रस्य वैवर्ण्ये कृच्छ्रनिर्गमे ॥
शूने सवेदने मेढ्रे पायौ सश्रोणिवङ्क्षणे ॥ १५५ ॥
घृतमण्डेन लघुनाऽनुवास्यो मिश्रकेण वा ॥
जाङ्गलैः प्रतिभुक्तस्य वर्त्तकाद्या बिलेशयाः ॥ १५६ ॥
क्रमशः प्रसहास्तद्वत्प्रयोज्याः पिशिताशिनः ॥
औष्ण्यात्प्रमाथिभावाच्च स्रोतोभ्यश्च्यावयन्ति ते॥१५७॥
कफं शुद्धैश्च तैः पुष्टिं कुर्य्यात्सम्यग्वहन्रसः ॥
चविकात्रिफलाभार्ङ्गीदशमूलैःसचित्रकैः ॥ १५८ ॥
कुलत्थपिप्पलीमूलपाठाकोलयवैर्जले ॥
शृतैर्नागरदुःस्पर्शापिप्पलीशठिपौष्करैः ॥ १५९ ॥
पिष्टैःकर्कटशृङ्ग्या च समैः सर्पिर्विपाचयेत् ॥
सिद्धेऽस्मिंश्चूर्णितौ क्षारौ द्वौ पञ्चलवणानि च ॥ १६० ॥
दत्त्वायुक्तयापिबेन्मात्रां क्षयकासनिपीडितः ॥
कासमर्दाभयामुस्तापाठाकट्फलनागरैः ॥ १६१ ॥

पिप्पल्याकटुरोहिण्या काश्मर्य्या स्वरसेन च ॥
अक्षमात्रैर्घृतप्रस्थं क्षीरद्राक्षारसाढके ॥ १६२ ॥
पचेच्छोपज्वरप्लीहसर्वकासहरंशिवम् ॥
विपव्याघ्रीगुडूचीना पत्रमूलफलांकुरान् ॥ १६३ ॥
रसकल्कैर्घृत पक्व हन्ति कासज्वरारुची ॥
द्विगुणे दाडिमरसे सिद्ध वा व्योपसयुतम् ॥ १६४ ॥
पिवेदुपरि भुक्तस्य यवक्षारघृत नर ॥
पिप्पलीगुडसिद्ध वा छागक्षीरयुत घृतम् ॥ १६५ ॥
एतान्यग्निविवृद्ध्यर्थं सर्पीषि क्षयकासिनाम् ॥
स्युर्दोषवद्धकण्ठोर स्रोतसाश्चविशुद्धये ॥ १६६ ॥
प्रस्थोन्मिते यवक्वाथे विशतिर्विजया पचेत् ॥
स्विन्ना मृदित्वा तास्तस्मिन्पुराणात्पट्पल गुडात् ॥ १६७ ॥
पिप्पल्या द्विपल कर्ष मनोह्वाया रसाञ्जनात् ॥
दत्त्वार्द्धाक्ष पचेद्भूय स लेह. श्वासकासनुत् ॥ १६८ ॥
श्वाविधा सूचयो दग्धा सघृतक्षौद्रशर्करा ॥
श्वासकासहरा बर्हिपादौ वा मधुसर्पिषा ॥ १६९ ॥
एरण्डपत्रक्षार वा व्योपतैलगुडान्वितम् ॥
लेहयेत्क्षारमेव वा सुरसैरण्डपत्रजम् ॥ १७० ॥
लिह्यात्त्र्यूपणचूर्णं वा पुराणगुडसर्पिषा ॥
पद्मक त्रिफलाव्योप विडङ्ग देवदारु च ॥ १७१ ॥
वला रास्ना च तच्चूर्णं समस्त समशर्करम् ॥
खादेन्मधुघृताभ्या च लिह्यात्कासहर परम् ॥ १७२ ॥

तद्वन्मरिचचूर्णं वा सघृतक्षौद्रशर्करम् ॥
पथ्याशुण्ठीघनगुडैर्गुटिका धारयेन्मुखे ॥ १७३ ॥
सर्वेषु श्वासकासेषु केवलं वा बिभीतकम् ॥
पत्रकल्कं घृतभृष्टं तिल्वकस्य सशर्करम् ॥ १७४ ॥
पेया वोत्कारिका च्छर्दितृट्कासामातिसारनुत् ॥
कण्टकारीरसे सिद्धो मुद्गयूषः सुसंस्कृतः ॥
सगौरामलकःसाम्लःसर्वकासभिषग्जितम् ॥१७५॥
वातघ्नौषधनिःक्वाथे क्षीरं यूषान्रसानपि ॥
वैष्किरान्प्रातुदान्बैलान्दापयेत्क्षयकासिने ॥ १७६ ॥
क्षतकासे च ये धूमाः सानुपाना निदर्शिताः ॥
क्षयकासेऽपि ते योज्या वक्ष्यन्ते ये च यक्ष्मणि ॥१७७॥
बृंहणं दीपनं चाग्नेः स्रोतसां च विशोधनम् ॥
व्यत्यासात्क्षयकासिभ्यो बल्यं सर्वं प्रशस्यते ॥ १७८ ॥
सन्निपातोद्भवो घोरः क्षयकासी यतस्ततः ॥
यथा दोषबलं तस्य सन्निपातहितं हितम् ॥ १७९ ॥

इत्यष्टाङ्गहृदयसंहितायां चिकित्सास्थाने तृतीयोऽध्यायः ॥ ३ ॥

## चतुर्थोऽध्यायः ।



अथातः श्वासहिध्माचिकित्सितं व्याख्यास्यामः ।
श्वासहिध्मावयस्तुल्यहेत्वाद्याःसाधनं ततः ॥ १ ॥
तुल्यमेव तदार्तं च पूर्वं स्वेदैरुपाचरेत् ॥
स्निग्धैर्लवणतैलाक्तं तैः खेषु ग्रथितः कफः ॥ २ ॥

सुलीनोऽपि विलीनोऽस्य कोष्ठं प्राप्तः सुनिर्हरः ॥
स्रोतसां स्यान्मृदुत्वं च मारुतस्यानुलोमता ॥ ३ ॥
स्विन्नं च भोजयेदन्नं स्निग्धमानूपजै रसैः ॥
दध्युत्तरेण वा दद्यात्ततोऽस्मै वमनं मृदु ॥ ४ ॥
विशेषात्कासवमथुहृद्ग्रहस्वरसादिने ॥
पिप्पलीसैन्धवक्षौद्रयुक्तं वातविरोधि यत् ॥ ५ ॥
निर्हृते सुखमाप्नोति सकफे दुष्टविग्रहे ॥
स्रोतःसु च विशुद्धेषु चरत्यविहतोऽनिलः ॥ ६ ॥
ध्मानोदावर्त्ततमके मातुलिङ्गाम्लवेतसैः ॥
हिङ्गुपीलुविडैर्युक्तमन्नं स्यादनुलोमनम् ॥ ७ ॥
ससैन्धवं फलाम्लं वा कोष्णं दद्याद्विरेचनम् ॥
एते हि कफसंरुद्धगतिप्राणप्रकोपजाः ॥ ८ ॥
तस्मात्तन्मार्गशुद्ध्यर्थमूर्द्ध्वाध:शोधनं हितम् ॥
उदीर्य्यते भृशतरं मार्गरोधाद्वहज्जलम् ॥ ९ ॥
यथानिलस्तथा तस्य मार्गमस्माद्विशोधयेत् ॥
अशान्तौ कृतसंशुद्धेर्धूमैर्लीनं मलं हरेत् ॥ १० ॥
हरिद्रापत्रमेरण्डमूलं द्राक्षां मनःशिलाम् ॥
सदेवदार्वलं मांसी पिष्ट्वा वर्त्तिं प्रकल्पयेत् ॥ ११ ॥
तां घृताक्तां पिबेद्धूमं यवान्वा घृतसंयुतान् ॥
मधूच्छिष्टं सर्जरसं घृतं वा गुरु वागुरु ॥ १२ ॥
चन्दनं वा तथा शृङ्गं वालान्वा स्नायवां गवाम् ॥
ऋक्षगोधाकुरङ्गैणचर्मशृङ्गखुराणि वा ॥ १३ ॥

गुग्गुलुं वा मनोह्वां वा शालनिर्यासमेव वा ॥
शल्लकीं गुग्गुलुं लोहंपद्मकं वा घृतप्लुतम् ॥ १४ ॥
अवश्यं स्वेदनीयानामस्वेद्यानामपि क्षणम् ॥
स्वेदयेत्ससिताक्षीरसुखोष्णस्नेहसेचनैः ॥ १५ ॥
उत्कारिकोपनाहैश्च स्वेदाध्यायोक्तभेषजैः ॥
उरःकण्ठञ्च मृदुभिः सामे त्वामविधिंचरेत् ॥ १६ ॥
अतियोगोद्धतं वातं दृष्ट्वा पवननाशनैः ॥
स्निग्धै रसाद्यैर्नात्युष्णैरभ्यङ्गैश्च शमं नयेत् ॥ १७ ॥
अनुत्क्लिष्टकफास्विन्नदुर्बलानां हि शोधनात् ॥
वायुर्लब्धास्पदो मर्म संशोष्याशु हरेदसून् ॥ १८ ॥
कषायलेहस्नेहाद्यैस्तेषां संशमयेदतः ॥
क्षीणक्षतातिसारासृक्पित्तदाहानुबन्धजान् ॥ १९ ॥
मधुरस्निग्धशीताद्यैर्हिध्माश्वासानुपाचरेत् ॥
कुलत्थदशमूलानां क्वाथे स्युर्जांगला रसाः ॥ २० ॥
यूषाश्च शिग्रुवार्ताककासघ्नं वृषमूलकैः ॥
पल्लवैर्निम्बकुलकबृहतीमातुलिंगजैः ॥ २१ ॥
व्याघ्रीदुरालभाशृंगीबिल्वमध्यत्रिकण्टकैः ॥
पेया च चित्रकाजाजीशृंगीसौवर्चलैः कृता ॥ २२ ॥
दशमूलेन वा कासश्वासहिध्मारुजापहा ॥
दशमूलशठीरास्नाभार्ङ्गीबिल्वर्द्धिपुष्करैः ॥ २३ ॥
कुलीरशृंगीचपलातामलक्यमृतौषधैः ॥
पिबेत्कषायं जीर्णेऽस्मिन्पेयांतैरेव साधिताम् ॥ २४ ॥

शालीषष्टिकगोधूमयवमुद्गकुलत्थभुक् ॥
कासहृद्ग्रहपार्श्वार्तिहिध्माश्वासप्रशान्तये ॥ २५ ॥
सक्तून्वार्काङ्कुरक्षीरभावितानां समाक्षिकान् ॥
यवाना दशमूलादिनिकाथलुलितान्पिबेत् ॥ २६ ॥
अन्ने च योजयेत्क्षार हिङ्ग्वाज्यविडदाडिमान् ॥
सपौष्करशठीव्योपमातुलिगाम्लवेतसान् ॥ २७ ॥
दशमूलस्य वा क्वाथमथवा देवदारुणः ॥
पिवेद्वा वारुणीमण्ड हिध्माश्वासी पिपासित ॥ २८ ॥
पिप्पलीपिप्पलीमूलपथ्याजन्तुघ्नचित्रके ॥
कल्कितैर्लेपिते रूटे निक्षिपेद्घृतभाजने ॥ २९ ॥
तक्रं मासस्थित तद्धि दीपन श्वासकासजित् ॥
पाठा मधुरसा दारु सरल निशि सस्थितम् ॥ ३० ॥
सुरामण्डेल्पलवण पिवेत्प्रसृतिसम्मितम् ॥
भार्ङ्गीशुंठ्यौ सुखाम्भोभि क्षार वा मरिचान्वितम् ॥३१॥
स्वक्वाथपिष्टा लुलिता वाप्पिका पाययेत वा ॥
स्वरस सप्तपर्णस्य पुष्पाणा वा शिरीपत. ॥ ३२ ॥
हिध्माश्वासे मधुकणायुक्त पित्तकफानुगे ॥
उत्कारिकातुगाकृष्णामधूलीघृतनागरै· ॥ ३३ ॥
पित्तानुवन्धे योक्तव्या पवने त्वनुवान्धिनि ॥
श्वा विच्छशामिषकणाघृतशल्यकशोणितै. ॥ ३४ ॥
पिप्पलीमूलमधुकगुडगोऽश्वसकृद्रसान् ॥
हिध्माभिस्यन्दकासघ्नाँल्लिह्यान्मधुघृतान्वितान् ॥ ३५ ॥

गोगजाश्ववराहोष्ट्रखरमेषाजविड्रसम् ॥
समध्वेकैकशो लिह्याद्बहु श्लेष्माथ वा पिबेत् ॥ ३६ ॥
चतुष्पाच्चर्मरोमास्थिखुरशृङ्गोद्भवा मषीम् ॥
तथैव वाजिगन्धाया लिह्याच्छ्वासी कफोल्वणः ॥ ३७ ॥
शठीपुष्करधात्रीर्वा पौष्करं वा कफान्वितम् ॥
गैरिकां जनकृष्णां वा स्वरसं वा कपित्थजम् ॥ ३८ ॥
रसेनवा कपित्थस्य धात्रीसैन्धवपिप्पलीः ॥
घृतक्षौद्रेण वा पथ्याविडंगोपणपिप्पलीः ॥ ३९ ॥
कोललाजामलद्राक्षापिप्पलीनागराणिवा ॥
गुडतैलनिशाद्राक्षा कणा रास्नोषणानि वा ॥ ४० ॥
पिबेद्रसाम्बुमद्याम्लैर्लेह्यौषधरजांसि वा ॥
जीवन्तीमुस्तसुरसत्वगेलाद्वयपौष्करम् ॥ ४१ ॥
चण्डातामलकीलोहभार्ङ्गीनागरवालकम् ॥
कर्कटाख्या शठी कृष्णानागकेसरचोरकम् ॥ ४२ ॥
उपयुक्तं यथाकासं चूर्णं द्विगुणशर्करम् ॥
पार्श्वरुग्ज्वरकासघ्नं हिध्माश्वासहरं परम् ॥ ४३ ॥
शठी तामलकी भार्ङ्गी चण्डावालकपौष्करम् ॥
शर्कराष्टगुणं चूर्णं हिध्माश्वासहरं परम् ॥ ४४ ॥
तुल्यं गुडं नागरं च भक्षयेन्नावयेत वा ॥
लशुनस्य पलाण्डोर्वा मूलं गृञ्जनकस्य वा ॥ ४५ ॥
चन्दनाद्वा रसं दद्यान्नारीक्षीरेण नावनम् ॥
स्तन्येन मक्षिकाविष्ठामलक्तकरसेन वा ॥ ४६ ॥

कणासौवर्चलक्षारवयस्याहिङ्गुचोरकैः ॥
सकायस्थैर्घृतं मस्तु दशमूलरसे पचेत् ॥ ४७ ॥
तत्पिबेज्जीवनीयैर्वा लिह्यात्समधु साधितम् ॥
तेजोवत्यभया कुष्ठं पिप्पली कटुरोहिणी ॥ ४८ ॥
भूतिकं पौष्करं मूलं पलाशश्चित्रकः शठी ॥
पटुद्वयं तामलकी जीवन्ती बिल्वपेशिका ॥ ४९ ॥
वचापत्रं च तालीसं कर्षांशैस्तैर्विपाचयेत् ॥
हिंगुपादैर्घृतप्रस्थं पीतमाशु निहन्ति तत् ॥ ५० ॥
शाखानिलार्शोग्रहणीहिध्माहृत्पार्श्ववेदना ॥
अर्द्धांशेन पिबेत्सर्पिः क्षारेण पटुनाऽथवा ॥ ५१ ॥
धान्वन्तरं वृषघृतं दाधिकं हपुषादि वा ॥
शीताम्बुसेकः सहसा त्रासविक्षेपभीशुचः ॥ ५२ ॥
हर्षेर्ष्योच्छ्वाससरोधा हितं कीटैश्च दंशनम् ॥
यत्किञ्चित्कफवातघ्नमुष्णं वातानुलोमनम् ॥ ५३ ॥
तत्सेव्यं प्रायशो यच्च सुतरां मारुतापहम् ॥ ५४ ॥
सर्वेषां बृंहणे ह्यल्पः शक्यश्च प्रायशो भवेत् ॥
नात्यर्थं शमने ऽपायो भृशोऽशक्यश्च कर्षणे ॥ ५५ ॥
शमनैर्बृंहणैश्चातो भूयिष्ठं तानुपाचरेत् ॥
कासश्वासक्षयच्छर्दिहिध्माश्चान्योऽन्यभेषजैः ॥ ५६ ॥

इत्यष्टाङ्गहृदयसंहितायां चिकित्सास्थाने चतुर्थोऽध्यायः ॥ ४ ॥

# पञ्चमोऽध्यायः ।



अथातो राजयक्ष्मादिचिकित्सितं व्याख्यास्यामः ।

बलिनो बहुदोषस्य स्निग्धस्विन्नस्य शोधनम् ॥
ऊर्ध्वाधो यक्ष्मिणः कुर्य्यात्सस्नेहं यन्नकर्शनम् ॥ १ ॥
पयसा फलयुक्तेन मधुरेण रसेन वा ॥
सर्पिष्मत्या यवाग्वा वा वमनद्रव्यसिद्धया ॥ २ ॥
वमेद्विरेचनं दद्यात्त्रिवृच्छ्यामानृपद्रुमान् ॥
शर्करामधुसर्पिर्भिः पयसा तर्पणेन वा ॥ ३ ॥
द्राक्षाविदारीकाश्मर्य्यमांसानां वा रसैर्युतान् ॥
शुद्धकोष्ठस्य युंजीत विधिं बृंहणदीपनम् ॥ ४ ॥
हृद्यानि चान्नपानानि वातघ्नानि लघूनि च ॥
शालिषष्टिकगोधूमयवमुद्गंसमोषितम् ॥ ५ ॥
आजं क्षीरं घृतं मांसं क्रव्यान्मांसं च शोषजित् ॥
काकोलूकवृकद्वीपिगवाश्वनकुलोरगम् ॥ ६ ॥
गृध्रभासखरोष्ट्रं च हितं छद्मोपसंहितम् ॥
ज्ञातं जुगुप्सितं तद्धि छर्दिषे न बलौजसे ॥ ७ ॥
मृगाद्याः पित्तकफयोः पवने प्रसहादयः ॥
वेसवारीकृताःपथ्यारसादिषु च कल्पिताः ॥ ८ ॥
भृष्टाः सर्षपतैलेन सर्पिषा वा यथायथम् ॥
रसिका मृदवः स्निग्धा मृदुद्रव्याभिसंस्कृताः ॥ ९ ॥

हितामौलककौलत्थास्तद्वद्यूषाश्च साधिता. ॥
सपिप्पलीक सयव सकुलत्थं सनागरम्॥ १० ॥
सदाडिमं सामलक स्निग्धमाज रसं पिवेत् ॥
तेन षड्विनिवर्त्तन्ते विकारा.पीनसादयः ॥ ११ ॥
पिवेच्च सुतरा मद्यं जीर्णं स्रोतोविशोधनम् ॥
पित्तादिषु विशेषेण मध्वारिष्टात्सवारुणी. ॥ १२ ॥
सिद्ध वा पञ्चमूलेन तामलस्याथवा जलम् ॥
पर्णिनीभिश्चतसृभिर्धान्यनागरकेण वा ॥ १३ ॥
कल्पयेच्चानुकूलोऽस्य तेनान्न शुचियत्नवान् ॥
दशमूलेन पयसा सिद्धं मासरसेन वा ॥ १४ ॥
वलागर्भं घृतं योज्य क्रव्यान्मासरसेन वा ॥
सक्षौद्र पयसा सिद्धं सर्पिर्दश गुणेन वा ॥ १५ ॥
जीवन्ती मधुक द्राक्षा फलानि कुटजस्य च ॥
पुष्कराह्व शठी कृष्णां व्याघ्रीं गोक्षुरक वलाम् ॥ १६ ॥
नीलोत्पलं तामलकी त्रायमाणा दुरालभाम् ॥
कल्कीकृत्य घृत पक्व रोगराजहरं परम् ॥ १७ ॥
घृत खर्जूरमृद्वीकामधुकै.सपरूषकै ॥
सपिप्पलीक वैस्वर्य्यकासश्वासज्वरापहम् ॥ १८ ॥
दशमूलशृतात्क्षीरात्सर्पिर्यदुदियान्नवम् ॥
सपिप्पलीक सक्षौद्र तत्पर स्वरशोधनम् ॥ १९ ॥
शिरःपार्श्वांसशूलघ्नं कासश्वासज्वरापहम् ॥
पञ्चभि'पञ्चमूलैर्वाशृताद्यदुदियाद्घृतम् ॥ २० ॥

पञ्चानां पञ्चमूलानां रसे क्षीरचतुर्गुणे ॥
सिद्धं सर्पिर्जयत्येतद्यक्ष्मिणः सप्तकं बलम् ॥ २१ ॥
पञ्चकोलयवक्षारषट्पलेन पचेद्घृतम् ॥
प्रस्थोन्मितं तुल्यपयः स्रोतसां तद्विशोधनम् ॥ २२ ॥
गुल्मज्वरोदरप्लीहग्रहणीपाण्डुपीनसान् ॥
श्वासकासाग्निसदनश्वयथूर्द्ध्वानिलाञ्जयेत् ॥ २३ ॥
रास्नाबलागोक्षुरकस्थिरावर्षाभुवारिणि ॥
जीवन्तीपिप्पलीगर्भं सक्षीरं शोषजिद्घृतम् ॥ २४ ॥
अश्वगन्धाच्छृतात्क्षीराद्घृतं च ससितं पयः ॥
साधारणामिषतुलां तोयद्रोणद्वये पचेत् ॥ २५ ॥
तेनाष्टभागशेषेण जीवनीयैः पलोन्मितैः ॥
साधयेत्सर्पिषः प्रस्थं वातपित्तामयापहम् ॥ २६ ॥
मांससर्पिरिदं पीतं युक्तं मांसरसेन वा ॥
कासश्वासस्वरभ्रंशशोषहृत्पार्श्वशूलजित् ॥ २७ ॥
एलाजमोदात्रिफलासौराष्ट्रीव्योषचित्रकान् ॥
सारानरिष्टगायत्रीशालबीजकसम्भवान् ॥ २८ ॥
भल्लातकं विडंगं च पृथगष्टपलोन्मितम् ॥
सलिले षोडशगुणे षोडशांशस्थिते पचेत् ॥ २९ ॥
पुनस्तेन घृतप्रस्थं सिद्धे चास्मिन्पलानि षट् ॥
तुगाक्षीर्याः क्षिपेत्त्रिंशत्सितायाः द्विगुणं मधु ॥ ३० ॥
घृतात्त्रिजातात्त्रिपलं ततो लीढं खजाहतम् ॥
पयोऽनुपानं तत्प्राह्णे रसायनमयन्त्रणम् ॥ ३१ ॥

मेध्यं चक्षुष्यमायुष्य दीपन हन्ति चाचिरात् ॥
मेहगुल्मक्षयव्याधिपाण्डुरोगभगन्दरान् ॥ ३२ ॥
ये च सर्पिर्गुडा प्रोक्ता. क्षते योज्याः क्षयेऽपि ते ॥
त्वगेलापिप्पलीक्षीरीशर्करा द्विगुणा. क्रमात् ॥ ३३ ॥
चूर्णिता भक्षिता' क्षौद्रसर्पिषा च वले हिता ॥
स्वर्य्या.कासक्षयश्वासपार्श्वरुक्कफनाशना ॥ ३४ ॥
विशेषात्स्वरसादस्य नस्यधूमादि योजयेत् ॥
तत्रापि वातजे कोष्ण पिवेदौत्तरभक्तिकम् ॥ ३५ ॥
कासमर्दकवार्त्ताकीमार्कवस्वरसैर्घृतम् ॥
साधित कासजित्स्वर्य्य सिद्धमार्तगलेन वा ॥ ३६ ॥
वदरीपत्रकल्क वा घृत भृष्ट ससैन्धवम् ॥
तेल वा मधुक द्राक्षापिप्पलीकृमिनुत्पलै ॥ ३७ ॥
हसपाद्याश्च मूलेन पक्व नस्तो निषेचयेत् ॥
सुखोदकानुपान च सर्पिष्क च गुडोदनम् ॥ ३८ ॥
अश्नीयात्पायस चैव स्निग्ध स्वेदं नियोजयेत् ॥
पित्तोद्भवे पिवेत्सर्पि.शृतशीतपयोऽनुप ॥ ३९ ॥
क्षीरिवृक्षाङ्कुरक्वाथकल्कसिद्ध समाक्षिकम् ॥
अश्नीयाच्च ससर्पिष्क यष्टीमधुकपायसम् ॥ ४० ॥
वलाविदारिगन्धाभ्या विदार्य्या मधुकेन च ॥
सिद्ध सलवण सर्पिर्नस्य स्वर्य्यमनुत्तमम् ॥ ४१ ॥
प्रपौण्डरीक मधुक पिप्पली वृहती वला ॥
साधित क्षीरसर्पिश्च तत्स्वर्य्य नावन परम् ॥ ४२ ॥

लिह्यान्मधुरकाणां च चूर्णं मधुघृताप्लुतम् ॥
पिबेत्कटूनि मूत्रेण कफजे रूक्षभोजनः॥ ४३ ॥
कट्फलामलकव्योषं लिह्यात्तैलमधुप्लुतम् ॥
व्योषक्षाराग्निचविकाभार्ङ्गीपथ्यामधूनि वा ॥ ४४ ॥
यवैर्य्यवागूं यमके कणाधात्रीकृतां पिबेत् ॥
भुक्त्वाद्यात्पिप्पलीं शुण्ठीं तीक्ष्णं वा वमनं भजेत्॥४५॥
शर्कराक्षौद्रमिश्राणि शतानि मधुरैः सह ॥
पिबेत्पयांसि यस्योच्चैर्वदतोऽभिहतःस्वरः ॥ ४६ ॥
विचित्रमन्नमरुचौ हितैरुपहितं हितम् ॥
बहिरन्तर्मृजाचित्तनिर्वाणं हृद्यमौषधम् ॥ ४७ ॥
द्वौ कालौ दन्तधवनं भक्षयेन्मुखधावनैः ॥
कषायैः क्षालयेदास्यं धूमं प्रायोगिकं पिबेत् ॥ ४८ ॥
तालीसचूर्णवटकाःसकर्पूरसितोपलाः ॥
शशाङ्ककिरणाख्याश्च भक्ष्या रुचिकरा भृशम् ॥ ४९ ॥
वातादरोचके तत्र पिबेच्चूर्णं प्रसन्नया ॥
हरेणुकृष्णाकृमिजि द्राक्षासैन्धवनागरान् ॥ ५० ॥
एलाभार्ङ्गीयवक्षारहिङ्गुयुक्ता घृतेन वा ॥
छर्दयेद्वा वचाम्भोभिः पित्ताच्च गुडवारिभिः॥५१॥
लिह्याद्वा शर्करासर्पिर्लवणोत्तममाक्षिकम् ॥
कफाद्वमेन्निम्बजलैर्दीप्यकारग्वधोदकम् ॥ ५२ ॥
पानं समध्वरिष्टाश्च तीक्ष्णाःसमधुमाधवाः ॥
पिबेच्चूर्णं च पूर्वोक्तं हरेण्वाद्युष्णवारिणा ॥ ५३ ॥

एलात्वङ्नागकुसुमतीक्ष्णकृष्णामहौषधम् ॥
भागवृद्ध क्रमाच्चूर्ण निहन्ति समशर्करम् ॥ ५४ ॥
प्रसेकारुचिहृत्पार्श्वकासश्वासगलामयान् ॥
यवानीतित्तिडीकाम्लवेतसौषधदाडिमम् ॥ ५५ ॥
कृत्वा कोल च कर्षांश सितायाश्च चतुष्पलम् ॥
धान्यसौवर्चलाजाजीवराङ्ग चार्द्धकार्षिकम् ॥ ५६ ॥
पिप्पलीना शत चैकं द्वे शते मरिचस्य च ॥
चूर्णमेतत्पर रुच्य ग्राहि हृद्य हिनस्ति च ॥ ५७ ॥
विवन्धकासहृत्पार्श्वप्लीहार्शोग्रहणीगदान् ॥
तालीसपत्र मरिच नागर पिप्पली कणा ॥ ५८ ॥
यथोत्तर भागवृद्ध्या त्वगेले चार्द्धभागिके ॥
तद्वृद्य दीपन चूर्ण कणाष्टगुणशर्करम् ॥ ५९ ॥
कासश्वासारुचिच्छर्दिप्लीहहृत्पार्श्वशूलनुत् ॥
पाण्डुज्वरातिसारघ्न मूढवातानुलोमनम् ॥ ६० ॥
अर्कामृताक्षीरजले शर्वरीमुषितैर्य्यवै. ॥
प्रसेके कल्पितान्सक्तून्भक्ष्याश्चाद्याश्चली वमेत् ॥ ६१ ॥
कटुतिक्तैस्तथा शूल्य भक्षयेज्जाङ्गल पलम् ॥
शुष्काश्च भक्ष्यान्सुलघूश्चणकादिरसानुप. ॥ ६२ ॥
श्लेष्मणोऽतिप्रसेकेन वायु' श्लेष्माणमस्यति ॥
कफप्रसेक त विद्वान्स्निग्धोष्णैरेव निर्जयेत् ॥ ६३ ॥
पीनसेऽपि क्रममिम वमथौ च प्रयोजयेत् ॥
विशेषात्पीनसेऽभ्यङ्गान्स्नेहस्वेदाश्च शीलयेत् ॥ ६४ ॥

स्निग्धानुत्कारिकापिण्डैः शिरःपार्श्वगलादिषु ॥
लवणाम्लकटूष्णांश्च रसान्स्नेहोपसंहितान् ॥ ६५ ॥
शिरोंसपार्श्वशूलेषु यथादोषं विधिं चरेत् ॥
औदकानूपपिशितैरुपनाहाः सुसंस्कृताः ॥ ६६ ॥
तत्रेष्टाः सचतुःस्नेहा दोषसंसर्ग इष्यते ॥
प्रलेपो नतयष्ट्याह्वशताह्वाकुष्टचन्दनैः ॥ ६७ ॥
बलारास्नातिलैस्तद्वत्ससर्पिर्मधुकोत्पलैः ॥
पुनर्नवाकृष्णगन्धाबलावरीविदारिभिः ॥ ६८ ॥
नावनं धूमपानानि स्नेहाश्चोत्तरभक्तिकाः ॥
तैलान्यभ्यङ्गयोगीनि बस्तिकर्म्म तथा परम् ॥ ६९ ॥
शृङ्गाद्यैर्वा यथादोषं दुष्टमेषां हरेदसृक् ॥
प्रदेहःसघृतैः श्रेष्ठः पद्मकोशीरचन्दनैः ॥ ७० ॥
दूर्वामधुकमञ्जिष्ठाकेसरैर्वा घृतप्लुतैः ॥
वटादिसिद्धतैलेन शतधौतेन सर्पिषा ॥ ७१ ॥
अभ्यङ्गः पयसा सेकः शस्तश्च मधुकाम्बुना ॥
प्रायेणोपहताग्नित्वात्सपिच्छमतिसार्य्यते ॥ ७२ ॥
तस्यातिसारग्रहणीविहितं हितमौषधम् ॥
पुरीषं यत्नतो रक्षेच्छुष्यतो राजयक्ष्मिणः ॥ ७३ ॥
सर्वधातुक्षयार्त्तस्य बलं तस्य हि विड्बलम् ॥
मासमेवाश्नतो युक्त्या मार्द्वीकं पिबतोऽनु च ॥ ७४ ॥
अविधारितवेगस्य यक्ष्मा न लभतेऽन्तरम् ॥
-सुरां समण्डां मार्द्वीकमरिष्टान्सीधुमाधवान् ॥ ७५ ॥

यथार्हमधुपानार्थं पिवेन्मासानि भक्षयन् ॥
स्रोतोविवन्धमोक्षार्थं वलौजःपुष्टये च तत् ॥ ७६ ॥
स्नेहक्षीराम्बुकोष्ठेषु स्वभ्यक्तमवगाहयेत् ॥
उत्तीर्णमिश्रकै स्नेहैर्भूयोऽभ्यक्तं सुखै. करैः ॥ ७७ ॥
मृद्गीयात्सुखमासीन सुखं चोद्वर्त्तयेत्परम् ॥
जीवन्ती शतवीर्य्यां च विकसां सपुनर्नवाम् ॥ ७८ ॥
अश्वगन्धामपामार्गं तर्कारी मधुकं वलाम् ॥
विदारी सर्षपान्कुष्ठं तण्डुलानतसीफलम् ॥ ७९ ॥
माषास्तिलाश्च किण्व च सर्वमेकत्र चूर्णयेत् ॥
यवचूर्णं त्रिगुणित दध्ना युक्तं समाक्षिकम् ॥ ८० ॥
एतदुद्वर्त्तन कार्य्यं पुष्टिवर्णवलप्रदम् ॥
गौरसर्षपकल्केन स्नानीयौषधिभिश्च स ॥ ८१ ॥
स्नानाद्दतुसुखैस्तोयैर्जीवनीयोपसाधितै. ॥
गन्धमाल्यादिक भूषामलक्ष्मीनाशनी भजेत् ॥ ८२ ॥
सुहृदा दर्शन गीतवादित्रोत्सवसश्रुति. ॥
वस्तय. क्षीरसर्पींषि मद्यमाससुशीलता ॥ ८३ ॥
दैवव्यपाश्रय तत्तदथर्वोक्तं च पूजितम्॥ ८४ ॥

इत्यष्टाङ्गहृदयसहिताया चिकित्सास्थाने पञ्चमोऽध्याय ॥ ५ ॥

# षष्ठोऽध्यायः ।



अथातश्छर्दिहृद्रोगतृष्णाचिकित्सितं व्याख्यास्यामः ।

आमाशयोत्क्लेशभवाः प्रायश्छर्द्यो हितं ततः ॥
लङ्घनं प्रागृते वायोर्वमनं तत्र योजयेत् ॥ १ ॥
बलिनो बहुदोषस्य वमतः प्रततं बहु ॥
ततो विरेकं क्रमशो हृद्यं मद्यैः फलाम्बुभिः ॥ २ ॥
क्षीरैर्वा सहसा ह्यूर्ध्वं गतं दोषं नयत्यधः ॥
शमनं चौषधं रूक्षं दुर्बलस्य तदेव तु ॥ ३ ॥
परिशुष्कं प्रियं सात्म्यमन्नं लघु च शस्यते ॥
उपवासस्तथा यूषा रसाः काम्बलिकाः खलाः ॥ ४ ॥
शाकानि लेहभोज्यानि रागखाण्डवपानकाः ॥
भक्ष्याः शुष्का विचित्राश्च फलानि स्नानघर्षणम् ॥ ५ ॥
गन्धाः सुगन्धयो गन्धफलपुष्पान्नपानजाः ॥
भुक्तमात्रस्य सहसा मुखे शीताम्बुसेचनम् ॥ ६ ॥
हन्ति मारुतजां छर्दिं सर्पिः पीतं ससैन्धवम् ॥
किञ्चिदुष्णं विशेषेण सकासहृद्द्रवाम् ॥ ७ ॥
व्योषत्रिलवणाद्यं वा सिद्धं वा दाडिमाम्बुना ॥
सशुण्ठीदधिधान्येन शृतं तुल्याम्बु वा पयः ॥ ८ ॥
व्यक्तसैन्धवसर्पिर्वा फलाम्लो वैष्किरो रसः ॥
स्निग्धं च भोजनं शुण्ठीदधिदाडिमसाधितम् ॥ ९ ॥

कोष्ण सलवणंचात्र हितं स्नेहविरेचनम् ॥
पित्तजाया विरेकार्थं द्राक्षेक्षुस्वरसैस्त्रिवृत् ॥ १० ॥
सर्पिर्वा तैल्वकं योज्यं वृद्ध च श्लेष्मधामगम् ॥
ऊर्ध्वमेव हरेत्पित्त स्वादुतिक्तैर्विशुद्धिमान् ॥ ११ ॥
पिबेन्मन्थं यवागूं वा लाजै‌ः समधु शर्कराम् ॥
मुद्गजाङ्गलजैरद्याद्व्यञ्जनै शालिषष्टिकम् ॥ १२ ॥
मृद्भृष्टलोष्टप्रभव सुशीत सलिल पिबेत् ॥
मुद्गोशीरकणाधान्यै. सह वा सस्थितं निशाम् ॥ १३ ॥
द्राक्षारस रसं वेक्षोर्गुडूच्यम्बु पयोऽपि वा ॥
जम्ब्वम्रपल्लवोशीरवटशृङ्गावरोहज. ॥ १४ ॥
क्वाथ. क्षौद्रयुत‌ः पीत शीतो वा विनियच्छति ॥
छर्दिज्वरमतीसारं मूर्च्छां तृष्णां च दुर्जयाम् ॥ १५ ॥
धात्रीरसेन वा शीत पिबेन्मुद्गदलाम्बुवा ॥
कोलमज्जसिताला जामाक्षिकाविट्कणाञ्जनम् ॥ १६ ॥
लिह्यात्क्षौद्रेण पथ्या वा द्राक्षां वा बदराणि वा ॥
कफजाया वमेन्निम्बकृष्णापीडितसर्षपै ॥ १७ ॥
युक्तेन कोष्णतोयेन दुर्बलं चोपवासयेत् ॥
आरग्वधादिनिर्यूह शीत क्षौद्रयुतं पिबेत् ॥ १८ ॥
मन्थान्यवैर्वा बहुशश्छर्दिघ्नौपधभावितैः॥
कफघ्नमन्न हृद्य च रागा. सार्जकभूस्तृणा ॥ १९ ॥
लीढं मन शिलाकृष्णामरीचं बीजपूरकात् ॥
स्वरसेन कपित्थाच्च सक्षौद्रेण वमि जयेत् ॥ २० ॥

खादेत्कपित्थं सव्योषं मधुना वा दुरालभाम् ॥
अनुकूलोपचारेण याति द्विष्टार्थजा शमम् ॥ २१ ॥
कृमिजा क्रिमिहृद्रोगगदितैश्च भिषग्जितैः ॥
यथास्वं परिशेषाश्च तत्कृताश्च तथामयाः ॥ २२ ॥

छर्दिप्रसङ्गेन हि मातरिश्वा
धातुक्षयात्कोपमुपैत्यवश्यम् ॥
कुर्य्यादतोऽस्मिन्धमनातियोग-
प्रोक्तं विधिं स्तम्भनबृंहणीयम् ॥ २३ ॥
सर्पिर्गुडा मांसरसा घृतानि
कल्याणकत्र्यूषणजीवनानि ॥
पयांसि पथ्योपहितानि लेहा-
श्छर्दिं प्रसक्तां प्रशमं नयन्ति ॥ २४ ॥

हृद्रोगे वातजे तैलं मस्तुसौवीरतक्रवत् ॥
पिबेत्सुखोष्णं सबिडं गुल्मानाहार्त्तिजिच्च तत् ॥ २५ ॥
तैलं च लवणैः सिद्धं समूत्राम्लं तथागुणम् ॥
बिल्वं रास्नां यवान्कोलं देवदारुं पुनर्नवाम् ॥ २६ ॥
कुलत्थान्पञ्चमूलं च पक्त्वा तस्मिन्पचेज्जले ॥
तैलं तन्नावने पाने बस्तौ च विनियोजयेत् ॥ २७ ॥
शुण्ठीवयस्थालवणकायस्थाहिंगुपौष्करैः ॥
पथ्यया च शृतं पार्श्वहृद्रुजागुल्मजिद्घृतम् ॥ २८ ॥
सौवर्चलस्य द्विपले पथ्या पञ्चाशदन्विते ॥
घृतस्य साधितः प्रस्थो हृद्रोगश्वासगुल्मजित् ॥ २९ ॥

पुष्कराह्वशठीशुण्ठीवीजपूरजटाभया.॥
पीता. कल्कीकृता. क्षारघृताम्ललवणैर्युता.॥ ३० ॥
विकर्त्तिकाशूलहरा'क्काथ. कोष्णश्चतद्गुण ॥
यवानीलवणक्षारवचाजाज्यौपधै. कृत ॥ ३१ ॥
सप्ततिर्दारुवीजाह्वविजयाशठिपौष्करै. ॥
पञ्चकोलशठीपथ्यागुडबीजाह्वपौष्करम् ॥ ३२ ॥
वारुणीकल्कितं भृष्ट यमके लवणान्वितम्॥ .
हृत्पार्श्वयोनिशूलेषु खादेद्गुल्मोदरेषु च ॥ ३३ ॥
स्निग्धाश्चेह हिता स्वेदा.सस्कृतानि घृतानि च ॥
लघुना पञ्चमूलेन शुण्ठ्या वा साधित जलम् ॥ ३४ ॥
वारुणी दधिमण्ड वा धान्याम्ल वा पिवेत्तृषी ॥
सायासस्तम्भशूलामे हृदि मारुतदूपिते ॥ ३५॥
क्रियैषा सद्रवायामप्रमोहे तु हिता रसा ॥
स्नेहाढ्यास्तित्तिरिक्रौञ्चशिखिवर्त्तकऋक्षजा. ॥ ३६ ॥
बलातैल सहृद्रोग पिवेद्वा सुकुमारकम् ॥
यष्ट्याह्वाशतपाक वा महास्नेह तथोत्तमम्॥ ३७ ॥
रास्नाजीवकजीवन्तीबलाव्याघ्री पुनर्नवै ॥
भार्ङ्गीस्थिरावचाव्योषैर्महास्नेह विपाचयेत् ॥ ३८ ॥
दधिपाद तथाम्लैश्च लाभत स निषेवित ॥
तर्पणो बृहणो बल्यो वातहृद्रोगनाशन ॥ ३९ ॥
दीप्तेऽग्नौ सद्रवायामे हृद्रोगे वातिके हितम्॥
क्षीर दधिगुड सर्पिरौदकानूपमामिषम् ॥ ४० ॥

एतान्येव च वर्ज्यानि हृद्रोगेषु चतुर्ष्वपि ॥
शेषेषु स्तम्भजाड्यामसंयुक्तेऽपि च वातिके ॥ ४१ ॥
कफानुबन्धे तस्मिंस्तु रूक्षोष्णामाचरेत्क्रियाम् ॥
पैत्ते द्राक्षेक्षुनिर्याससिताक्षौद्रपरूषकैः ॥ ४२ ॥
युक्तो विरेको हृद्यः स्यात्क्रमः शुद्धे च पित्तहा ॥
क्षतपित्तज्वरोक्तं च बाह्यान्तःपरिमार्जनम् ॥ ४३ ॥
कट्वीमधुककल्कं च पिबेत्ससितमम्भसा ॥
श्रेयसीशर्कराद्राक्षाजीवकर्षभकोत्पलैः ॥ ४४ ॥
बलाखर्जूरकाकोलीमेदायुग्मैश्च साधितम् ॥
सक्षीरं माहिषं सर्पिः पित्तहृद्रोगनाशनम् ॥ ४५ ॥
प्रपौण्डरीकमधुकबिसग्रन्थिकसेरुकाः ॥
सशुण्ठीशैवलास्ताभिः सक्षीरं विपचेद्घृतम् ॥ ४६ ॥
शीतं समधु तच्चेष्टं स्वादुवर्गकृतं च यत् ॥
बस्तिं च दद्यात्सक्षौद्रं तैलं मधुकसाधितम् ॥ ४७ ॥
कफोद्भवे वमेत्स्विन्नः पिचुमन्दवचाम्बुना ॥
कुलत्थधन्वोत्थरसतीक्ष्णमद्ययवाशनः ॥ ४८ ॥
पिबेच्चूर्णं वचाहिंगुलवणद्वयनागरान् ॥
सैलायवानीककणायवक्षारान्सुखाम्बुना ॥ ४९ ॥
फलं धान्याम्लकौलत्थयूषमूत्रासवैस्तथा ॥
पुष्कराह्वाभयाशुण्ठीशठीरास्नावचाकणाः ॥ ५० ॥
क्वाथं तथा भयाशुण्ठीमाद्रीपतिन्दुकट्फलात् ॥
क्वाथे रोहीतकाश्वत्थखदिरोदुम्बरार्जुने ॥ ५१ ॥

सपलाशवटे व्योपत्रिवृच्चूर्णान्विते कृत. ॥
सुखोदकानुपानस्य लेह' कफविकारहा ॥ ५२ ॥
श्लेष्मगुल्मोदिताज्यानि क्षाराश्चविविधान्पिवेत् ॥
प्रयोजयेच्छिलाह्वं वा ब्राह्म चात्र रसायनम् ॥ ५३ ॥
तथामलकलेहं वा प्राश्यं वागस्तिनिर्मितम् ॥
स्याच्छूल यस्य भुक्तेऽन्ने जीर्य्यत्यल्प जरां गते ॥ ५४ ॥
शाम्येत्सकुष्ठकृमिजिल्लवणद्वयतिल्वकै. ॥
सदेवदार्वातिविषैश्चूर्णमुष्णाम्बुना पिवेत् ॥ ५५ ॥
यस्य जीर्णेऽधिक स्नेहैः स विरेच्य.फलै'पुन. ॥
जीर्य्यत्यन्ने तथा मूलैस्तीक्ष्णै शूले सदाधिके ॥ ५६ ॥
प्रायोऽनिलो रुद्धगतिः कुप्यत्यामाशये गत' ॥
तस्यानुलोमनं कार्य्यं शुद्धिलघनपाचनै ॥ ५७ ॥
कृमिघ्नमौपध सर्वं कृमिजे हृदयामये ॥
तृष्णासु वातपित्तघ्नो विधि' प्रायेण युज्यते ॥ ५८ ॥
सर्वासु शीतो वाह्यान्तस्तथा शमनशोधनम् ॥
दिव्याम्बुशीत सक्षौद्रं तद्वद्भौम च तद्गुणम् ॥५९॥
निर्वापितं तप्तलोष्टकपालसिकतादिभि. ॥
सशर्कर वा क्वथित पञ्चमूलेन वा जलम् ॥ ६० ॥
दर्भपूर्वेण मन्थश्चप्रशस्तो लाजसक्तुभि. ॥
वाट्यश्चामयवै. शीत. शर्करामाक्षिकान्वितः ॥ ६१ ॥
यवागू शालिभिस्तद्वत्कोद्रवैश्च चिरन्तनैः ॥
शीतेन शीतवीर्य्यैश्च द्रव्यै.सिद्धेन भोजनम् ॥ ६२ ॥

हिमाम्बुपरिषिक्तस्य पयसा ससितामधु ॥
रसैश्चानम्ललवणैर्जाङ्गलैर्घृतभर्जितैः ॥ ६३ ॥
मुद्गादीनां तथा यूषैर्जीवनीयरसान्वितैः ॥
नस्यं क्षीरघृतं सिद्धं शीतैरिक्षोस्तथा रसैः ॥ ६४ ॥
निर्वापणाश्च गण्डूषाः सूत्रस्थानोदिता हिताः ॥
दाहज्वरोक्ता लेपाद्या निरीहत्वं मनोरतिः ॥ ६५ ॥
महासरिद्ध्रदादीनां दर्शनस्मरणादि च ॥
तृष्णायां पवनोत्थायां सगुडं दधि शस्यते ॥ ६६ ॥
रसाश्च बृंहणाः शीता विदार्य्यादिगणाम्बु वा ॥
पित्तजायां सितायुक्तः पक्वोदुम्बरजो रसः ॥ ६७ ॥
तत्क्वाथो वा हिमस्तद्वत्सारिवादिगणाम्बु वा ॥
तद्विधैश्च गणैः शीतकषायान्ससितामधून् ॥ ६८ ॥
मधुरैरौषधैस्तद्वत्क्षीरीवृक्षैश्चकल्पितान् ॥
बीजपूरकमृद्वीकावटवेतसपल्लवान् ॥ ६९ ॥
मूलानि कुशकाशानां यष्ट्याह्वं च जले शृतम् ॥
ज्वरोदितं वा द्राक्षादिपञ्चसाराम्बु वा पिबेत् ॥ ७० ॥
कफोद्भवायां वमनं निम्बप्रसववारिणा ॥
बिल्वाढकीपञ्चकोलदर्भपञ्चकसाधितम् ॥ ७१ ॥
जलं पिबेद्रजन्यां वा सिद्धं सक्षौद्रशार्करम् ॥
मुद्गयूषं च सव्योषपटोलीनिम्बपल्लवम् ॥ ७२ ॥
यवान्नं तीक्ष्णकवलनस्यलेहांश्च शीलयेत् ॥
सर्वैरामाच्च तद्धन्त्री क्रियेष्टा वमनं तथा ॥ ७३ ॥

त्र्यूषणारुष्करवचाफलाम्लोष्णाम्बुवस्तुभि. ॥
अन्नात्ययान्मण्डमुष्ण हिम मन्थ च कालवित् ॥ ७४ ॥
तृषि श्रमान्मासरस मद्य वा ससित पिबेत् ॥
आतपात्ससित मन्थं यवकोलाम्बुसक्तुभि· ॥ ७५ ॥
सर्वाण्यङ्गानि लिम्पेच्च तिलपिण्याककाञ्जिकै ॥
शीतस्नानात्तु मद्याम्बुपिबेत्तृष्णमान्गुडाम्बु वा ॥ ७६ ॥
मद्यादर्द्धजल मद्य स्नातोऽम्ल लवणैर्युतम् ॥
स्नेहतीक्ष्णतराग्निस्तु स्वभावशिशिर जलम् ॥ ७७ ॥
स्नेहादुष्णावुजीर्णात्तु जीर्णान्मण्ड पिपासित· ॥
पिबेत्स्निग्धान्नतृपितोहिमस्पर्द्धिगुडोदकम् ॥ ७८ ॥
गुर्वाद्यन्नेन तृपितः पीत्वोष्णाम्बु तदुल्लिखेत् ॥
क्षयजाया क्षयहित सर्वं बृहणमौपधम् ॥ ७९ ॥
कृशदुर्वलरूक्षाणा क्षीर छागो रसोऽथवा ॥
क्षौर च सोर्ध्ववाताया क्षयकासहरै श्रृतम् ॥ ८० ॥
रोगोपसर्गजाताया धान्याम्बुससितामधु ॥
पाने प्रशस्तं सर्वांश्च क्रिया रोगाद्यपेक्षया ॥ ८१ ॥
तृष्यन्पूर्वामयक्षीणो न लभेत जल यदि ॥
मरण दीर्घरोग वा प्राप्नुयात्त्वरित तत· ॥ ८२ ॥
सात्म्यान्नपानभैपज्यैस्तृष्णा तस्य जयेत्पुर ॥
तस्या जितायामन्योऽपिशक्यो व्याधिश्चिकित्सितुम् ॥ ८३ ॥

इत्यष्टाङ्गहृदयसहिताया चिकित्सास्थाने पष्ठोऽध्याय ॥ ६ ॥

# सप्तमोऽध्यायः ।



अथातो मदात्ययचिकित्सितं व्याख्यास्यामः ।
यं दोषमधिकं पश्येत्तस्यादौ प्रतिकारयेत् ॥
कफस्थानानुपूर्व्या वा तुल्यदोषे मदात्यये ॥ १ ॥
पित्तमारुतपर्य्यन्तः प्रायेण हि मदात्ययः ॥
हीनमिथ्यातिपीतेन यो व्याधिरुपजायते ॥ २ ॥
समपीतेन तेनैव स मद्येनोपशाम्यति ॥
मद्यस्य विषसादृश्याद्विषं तूत्कर्षवृत्तिभिः॥ ३ ॥
तीक्ष्णादिभिर्गुणैर्योगाद्विषान्तरमपेक्षते ॥
तीक्ष्णोष्णेनातिमात्रेण पीतेनाम्लविदाहिना ॥ ४ ॥
मद्येनान्नर सक्लेदोविदग्धःक्षारतां गतः ॥
यान्कुर्य्यान्मन्दतृणमोहज्वरान्तर्दाहविभ्रमान् ॥ ५ ॥
मद्योत्क्लिष्टेन दोषेण रुद्धः स्रोतस्सु मारुतः ॥
सुतीव्रा वेदनायाश्च शिरस्यस्थिषु सन्धिषु ॥ ६ ॥
जीर्णामद्यदोषस्यप्रकांक्षालाघवे सति ॥
यौगिकं विधिवद्युक्तंमद्यमेवं निहन्ति तान् ॥ ७ ॥
क्षारो हि याति माधुर्य्यं शीघ्रमम्लोपसंहिताः ॥
मद्यमम्लेषु च श्रेष्ठं दोषाविष्यन्दनादलम् ॥ ८ ॥
तीक्ष्णोष्णाद्यैःपुरा प्रोक्तैर्दीपनाद्यैस्तथा गुणैः ॥
सात्म्यत्वाच्च तदेवास्य धातुसाम्यकरं परम् ॥ ९ ॥

सप्ताहमष्टरात्रं वा कुर्य्यात्पानात्ययौषधम् ॥
जीर्य्यत्येतावता पानं कालेन विपथा श्रुतम् ॥ १० ॥
पर ततोऽनुबध्नाति योरोगस्तस्य भेषजम् ॥
यथायथ प्रयुञ्जीत कृतपानात्ययौषध ॥ ११ ॥
तत्र वातोल्वणे मद्यं दद्यात्पिष्टकृतं युतम् ॥
बीजपूरकवृक्षाम्लकोलदाडिमदीप्यकै. ॥ १२ ॥
यवानीहपुषाजाजीव्योषत्रिलवणार्द्रकैः ॥
शूल्यैर्मांसैर्हरितकैः स्नेहवद्भिश्च सक्तुभि. ॥ १३ ॥
उष्णा. स्निग्धाम्ललवणा मद्यमांसरसा हिता ॥
आम्राम्रातकपेशीभि संस्कृतारागखाण्डवा. ॥ १४ ॥
गोधूममाषविकृतीर्मृद्व्यश्चित्रामुखप्रिया. ॥
आर्द्रिकार्द्रककुल्माषसूक्तमांसादिगर्भिणीम् ॥ १५ ॥
सुरभिर्लवणाशीता निगदावा ऽच्छवारुणी ॥
स्वरसो दाडिमः क्वाथ पञ्चमूलात्कनीयस. ॥ १६ ॥
शुण्ठीधान्यात्तथा मस्तुसूक्ताम्भोऽथाम्लकाञ्जिकम् ॥
अभ्यङ्गोद्वर्त्तनस्नानमुष्ण प्रावरण घनम् ॥ १७ ॥
घनऽञ्चागुरुजो धूप. पङ्कश्चागुरुकुंकुम ॥
कुचोरुश्रोणिशालिन्यो यौवनोष्णाङ्गयष्टय.॥ १८ ॥
हर्षणालिङ्गनैर्युक्ताः प्रियाःसंवहनेषु च ॥
पित्तोल्बणे बहुजल शार्कर मधुना युतम् ॥ १९ ॥
रसैर्दाडिमखर्जूरभव्यद्राक्षापरूषकै. ॥
सुशीतंससितासक्तु योज्य तादृक्च पानकम् ॥ २० ॥

स्वादुवर्गकषायैर्वा युक्तं मद्यं समाक्षिकम् ॥
शालिषष्टिकमश्नीयाच्छशाजैणकपिञ्जलैः ॥ २१ ॥
सतीनमुद्गामलकपटोलीदाडिमैरपि ॥
कफपित्तं समुत्क्लिष्टमुल्लिखेत्तृड्विदाहवान् ॥ २२ ॥
पीत्वाम्बु शीतं मद्यं वा भूरीक्षुरससंयुतम् ॥
द्राक्षारसं वा संसर्गी तर्पणादिपरं हितम् ॥ २३ ॥
तथाग्निर्दीप्यते तस्य दोषशेषान्नपाचनः ॥
कासे सरक्तनिष्ठीवे पार्श्वस्तनरुजासु च॥ २४ ॥
तृष्णायां स विदाहायां सोत्क्लेशे हृदयोरसि ॥
गुडूचीभद्रमुस्तानां पटोलस्याथवा रसम् ॥ २५ ॥
सशृङ्गवेरं युंजीत तित्तिरिप्रतिभोजनम् ॥
तृष्यते चातिबलवद्वातपित्ते समुद्धते ॥ २६ ॥
दद्याद् द्राक्षारसं पानं शीतं दोषानुलोमनम् ॥
जीर्णेऽद्यान्मधुराम्लेन च्छागमांसरसेन वा ॥ २७ ॥
तृष्यल्पशः पिबेन्मद्यं मदं रक्षन्बहूदकम् ॥
मुस्तदाडिमलाजाम्बु जलं वा पर्णिनीशृतम् ॥ २८ ॥
पटोल्युत्पलकन्दैर्वा स्वभावादेव वा हिमम् ॥
मद्यातिपानादब्धातौ क्षीणे तेजसि चोद्धते॥२९ ॥
यः शुष्कगलताल्वोष्ठो जिह्वां निष्कृत्य चेष्टते ॥
पाययेत्कामतोऽम्भस्तं निशीथपवनाहतम् ॥ ३० ॥
कोलदाडिमवृक्षाम्लचुक्रिकाचुक्रिकारसः ॥
पञ्चाम्लको मुखालेपः सद्यस्तृष्णां नियच्छति ॥३१॥

खचं प्रासश्च पानोष्मा पित्तरक्ताभिमूर्च्छित ॥ ३२ ॥
दाहं प्रकुरते घोर तत्रातिशिशिरो विधि ॥
अशास्यति रसैस्तृसे रोहिणीव्यधयेच्छिराम् ॥ ३३ ॥
उल्लेखनोपवासाभ्या जयेच्छ्लेष्मोल्बण पिवेत् ॥ ३४ ॥
शीत शुण्ठीस्थिरोदीच्यदुःस्पर्शान्यतमोदकम् ॥
निराम क्षुधित काले पाययेद्बहुसाक्षिकम् ॥ ३५ ॥
शार्कर मधु वा जीर्णमरिष्टं सीधुमेव च ॥
रूक्षतर्पणसंयुक्त यवानीनागरान्वितम् ॥ ३६ ॥
यूपेण यवगोधूम तनुनाल्पेन भोजयेत् ॥
उष्णाम्लकटुतिक्तेन कौलत्थेनाल्पसर्पिषा ॥ ३७ ॥
शुष्कमूलकजेच्छागै रसैर्वा धन्वचारिणाम् ॥
साम्लवेतसवृक्षाम्लपटोलीव्योपदाडिमै ॥ ३८ ॥
प्रभूतशुण्ठीमरिचहरितार्द्रकपेशिकम् ॥
वीजपूररसाद्यम्लभृष्टनीरसवर्त्तितम् ॥ ३९ ॥
करीरकरमर्दादिरोचिष्णुवहुशालनम् ॥
प्रव्यक्ताष्टाङ्गलवणं विकल्पितानिमर्दकम् ॥ ४० ॥
यथाग्नि भक्षयन्मास माधव निगद पिवेत् ॥
सितासौवर्चलाजाजीतिन्तिडीकाम्लवेतसम् ॥४१॥
त्वगेलामरिचार्द्धांशमष्टाङ्गलवणं हितम् ॥
स्रोतोविशुद्ध्यग्निकर कफप्रायेमदात्यये ॥ ४२ ॥
रूक्षोष्णोद्वर्त्तनोद्धर्षस्नानभोजनलंघनै. ॥
सकामाभिः सह स्त्रीभिर्युक्त्या जागरणेन च ॥ ४३ ॥

मदात्ययःकफप्रायः शीघ्रं समुपशाम्यति ॥
यदिदं कर्म निर्दिष्टं पृथग्दोषबलं प्रति ॥ ४४ ॥
सन्निपाते दशविधे तच्छेषेऽपि विकल्पयेत् ॥
त्वङ्नागपुष्पमगधामरीचाजाजिधान्यकैः ॥ ४५ ॥
परूषकमधूकैलासुराह्वैश्च सितान्वितैः ॥
सकपित्थरसं हृद्यं पानकं शशिबोधितम् ॥ ४६ ॥
मदात्ययेषु सर्वेषु पेयं रुच्यग्निदीपनम् ॥
नाविक्षोभ्य मनो मद्यं शरीरमविहन्य वा ॥ ४७ ॥
कुर्य्यान्मदात्ययं तस्मादिष्यते हर्षणी क्रिया ॥
संशुद्धिशमनाद्येषु मददोषः कृतेष्वपि ॥ ४८ ॥
न चेच्छाम्येत्कफे क्षीणे जाते दौर्बल्यलाघवे ॥
तस्य मद्यविदग्धस्य वातपित्ताधिकस्य च ॥ ४९ ॥
ग्रीष्मोपतप्तस्य तरोर्यथा वर्षं तथा पयः ॥
मद्यक्षीणस्य हि क्षीणं क्षीरमाश्वेव पुष्यति ॥ ५० ॥
ओजस्तुल्यं गुणैः सर्वैर्विपरीतं च मद्यतः ॥
पयसा विजिते रोगे बले जाते निवर्त्तयेत् ॥ ५१ ॥
क्षीरप्रयोगं मद्यं च क्रमेणाल्पाल्पमाचरेत् ॥
न विट्क्षयध्वंसकोत्थैः स्पृश्येन्नोपद्रवैर्यथा ॥ ५२ ॥
तयोस्तु स्याद्घृतं क्षीरं बस्तयो बृंहणाःशिवाः ॥
अभ्यंगोद्वर्त्तनस्नानमन्नपानं च वातजित् ॥ ५३ ॥
युक्तमद्यस्य मद्योत्थो न व्याधिरुपजायते ॥
अतोऽस्य वक्ष्यते योगो यः सुखायैव केवलम् ॥५४॥

आश्विनं या महत्तेजो बलं सारस्वत च या ॥
दधात्यैन्द्र च या वीर्य्यं प्रभाव वैष्णवं च या ॥ ५५ ॥
अस्त्रं मकरकेतोर्या पुरुषार्थो वलस्य या ॥
सौत्रामण्या द्विजमुखे या हुताशे च हूयते ॥ ५६ ॥
या सर्वौषधिसपूर्णान्मथ्यमानात्सुरासुरै ॥
महोदधेः समुद्भूता श्रीशशाङ्कामृतै. सह ॥ ५७ ॥
मधुमाधवमैरेयसीधुगौडासवादिभिः ॥
मदशक्तिमनुघ्नन्ती या रूपैर्वहुभिः स्थिता ॥ ५८ ॥
यामासाद्य विलासिन्यो यथार्थं नाम बिभ्रति ॥
कलाङ्गनापि या पीत्वा नयत्युद्धतमानसा ॥ ५९ ॥
अनङ्गालिङ्गितैरङ्गै· कापि चेतो मुनेरपि ॥
तरङ्गभङ्गभृकुटीतर्जनैर्मानिनीमन. ॥ ६० ॥
एक प्रसाद्य कुरुते या द्वयोरपि निर्वृतिम् ॥
यथा कामं भटावाप्तिपरिहृष्टाप्सरोगणे ॥ ६१ ॥
तृणवत्पुरुषा युद्धे यामासाद्य त्यजन्त्यसून् ॥
या शीलयित्वापि चिर वहुधा वहु विग्रहाम् ॥ ६२ ॥
नित्य हर्षातिवेगेन तत्पूर्वमिव सेवते ॥
शोकोद्वेगारतिभयैर्यां दृष्ट्वा नाभिभूयते ॥ ६३ ॥
गोष्ठीमहोत्सवोद्यान न यस्या. शोभते विना ॥
स्मृत्वा स्मृत्वा च वहुशो वियुक्त. शोचते यथा ॥ ६४ ॥
अप्रसन्नापि या प्रीत्यै प्रसन्ना स्वर्गएव या ॥
अपीन्द्र मन्यते दु स्थ हृदयस्थित या यया ॥ ६५ ॥

अनिर्देश्यसुखास्वादा स्वयं वेद्यैव या परम् ॥
इति चित्रास्ववस्थासु प्रियामनुकरोति या ॥ ६६ ॥
प्रियातिप्रियतां याति यत्प्रियस्य विशेषतः ॥
या प्रीतिर्या रतिर्यावाग्या पुष्टिरिति च स्तुता ॥ ६७ ॥
देवदानवगन्धर्वयक्षराक्षसमानुषैः ॥
पानप्रवृत्तौ सत्यां तां सुरां तु विधिना पिबेत् ॥ ६८ ॥
सम्भवन्ति च ये रोगा मेदोऽनिलकफोद्भवाः ॥
विधियुक्तादृते मद्यात्ते न सिध्यन्ति दारुणाः ॥ ६९ ॥
अस्ति देहस्य सावस्था यस्यां पानं निवार्य्यते ॥
अन्यत्र मद्यान्निगदाद्विविधौषधसंभृतात् ॥ ७० ॥
अनूपं जाङ्गलं मांसं विधिनाप्युपकल्पितम् ॥
मद्यंसहायमप्राप्यं सम्यक्परिणमेत्कथम् ॥ ७१ ॥
सुतीव्रमारुतव्याधिघातिनो लशुनस्य च ॥
मद्यमांसवियुक्तस्य प्रयोगः स्यात्कियान्गुणः ॥ ७२ ॥
निगूढशल्याहरणे शस्त्रक्षाराग्निकर्मणि ॥
पीतमद्यो विसहतेसुखं वैद्यविकत्थनाम् ॥ ७३ ॥
अनलोत्तेजनं रुच्यं शोकश्रमविनोदकम् ॥
न चातः परमस्त्यन्यदारोग्यबलपुष्टिकृत् ॥ ७४ ॥
रक्षता जीवितं तस्मात्पेयमात्मवता सदा ॥
आश्रितोपाश्रितहितं परमं धर्म्मसाधनम् ॥ ७५ ॥

स्नात प्रणम्य सुरविप्रगुरून्यथास्व
वृत्ति विधाय च समस्तपरिग्रहस्य ॥
आपानभूमिमथ गन्धजलाभिषिक्ता-
माहारमण्डपसमीपगता श्रयेत ॥ ७६ ॥
स्वास्तृतेऽथ शयने कमनीये मित्रभृत्यरमणीसमवेत ॥
स्व यश. कथकचारणसघैरुद्धत निशमयन्नतिलोकम् ॥७७॥
विलासिनीना च विलासशोभि गीत सनृत्य कलतूर्य्यघोषै ॥
काञ्चीकलापैश्चलकिङ्किणीकै.क्रीडाविहङ्गैश्च कृतानुनादम् ७८
मणिकनकसमुत्थैराजतेयैर्विचित्रैः
सजलविविधलेखक्षौमवस्त्रावृताङ्गै. ॥
अपि मुनिजनचित्तक्षोभसम्पादिनीभि-
श्चकित हरिणलोलप्रेक्षणीभि प्रियाभि. ॥ ७९ ॥
स्तननितम्बकृतादतिगौरवा-
दलससाकुलसीश्वरसम्भ्रमात् ॥
इति गत दधतीभिरसस्थित
तरुणचित्तविलोभनकार्म्मणम् ॥ ८० ॥
यावनासवमत्ताभिर्विलासाधिष्ठितात्मभि ॥
सञ्चार्य्यमाण युगपत्तन्वङ्गीभिरितस्तत. ॥ ८१ ॥
तालवृन्तनलिनीदलानिलै. शीतलीकृतमतीव २ त
दर्शनेऽपि विदधद्दशानुग स्वादित किमुत चित्तजन्मनः।
चूतरसेन्दुमृगै.कृतवास मल्लिकयोज्ज्वलया च सनाथम्
स्फाटिकशुक्तिगतसतरङ्ग कान्तमनङ्गमिवोद्वहदङ्गम् ॥८२

तालीसाद्यं चूर्णमेलादिकं वा
हृद्यं प्राश्य प्राग्वयःस्थापनं वा ॥
तत्प्रार्थिभ्यो भूमिभागे समृद्धे
तोयोन्मिश्रं दापयित्वा ततश्च ॥ ८४ ॥
धृतिमान्स्मृतिमान्नित्यमन्यूनाधिकमाचरन् ॥
उचितेनोपचारेण सर्वमेवोपपादयन् ॥ ८५ ॥
जितविकसितसरोजनयनसंक्रान्तिवर्द्धितश्रीकम् ॥
कान्तामुखमिवसौरभहृतमधुपगणं पिबेन्मद्यम् ॥ ८६ ॥
पीत्वैवं चषकद्वयं परिजनं सम्मान्य सर्वं ततो
गत्वाहारभुवं पुरःसुभिषजो भुञ्जीत भूयोऽत्र च ॥
मांसापूपघृतार्किकादिहरितैर्युक्तं ससौवर्चलै
र्द्वित्रिर्वा निशि वाल्पमेव वनितासञ्चालनार्थं पिबेत्८७॥
रहसि दयितामङ्के कृत्वा भुजान्तरपीडना
त्पुलकिततनुं जातस्वेदां सकम्पपयोधराम् ॥
यदि सरभसं सीधूद्गारं न पाययते कृती
किमनुभवति क्लेशप्रायं ततो गृहतन्त्रताम् ॥ ८८ ॥
वरतनुवक्त्रासङ्गतिसुगन्धितरंसरकं
द्रुतमिव पद्मरागमणिमासवरूपधरम् ॥
भवति रतिश्रमेण च मदःपिबतोऽल्पमपि क्षय-
मतनुजौजसः परिहरन् स शयीत परम् ॥ ८९ ॥
इत्थं युक्त्या पिबेन्मद्यं न त्रिवर्गाद्धि हीयते ॥
असारसंसारसुखं परमेवाधिगच्छति ॥ ९० ॥

ऐश्वर्य्यस्योपभोगोऽयस्पृहणीय सुरैरपि ॥
अन्यथा हि विपत्सु स्यात्पश्चात्तापेन्धनं धनम् ॥ ९१ ॥
उपभोगेनरहितो भोगवानिति निन्द्यते ॥
निर्म्मितोऽतिकदर्योऽय विधिना निधिपालक. ॥ ९२ ॥
तस्माद्व्यवस्थया पानं पानस्य सतत हितम् ॥
जित्वा विषयलुब्धानामिन्द्रियाणा स्वतन्त्रताम् ॥ ९३ ॥
विधिर्वसुमतामेष भाविष्यद्वसवस्तु ये ॥
यथोपपत्ति तैर्मद्य पातव्य मात्रया हितम् ॥ ९४ ॥
यावद्दृष्टेर्न सम्भ्रान्तिर्य्यावन्न क्षोभते मन ॥
तावदेव विरन्तव्य मद्यादात्मवता सदा ॥ ९५ ॥
अभ्यङ्गोद्वर्त्तनस्नानवासधूपानुलेपनै ॥
स्निग्धोष्णैर्भावितश्चान्नै. पान वातोत्तर. पिबेत् ॥ ९६ ॥
शीतोपचारैर्विविधैर्मधुरस्निग्धशीतलै. ॥
पैत्तिको भावितश्चान्नै. पिबेन्मद्यं न सीदति ॥ ९७ ॥
उपचारैरशिशिरैर्यवगोधूमभुक्पिबेत् ॥
श्लैष्मिको जाङ्गलैर्मांसैर्मद्य मारिचकै सह ॥ ९८ ॥
तत्र वाते हितं मद्य प्राय' पैष्टिकगौडिकम् ॥
पित्ते साम्भो मधुकफे मार्द्वीकारिष्टमाधवम् ॥ ९९ ॥
प्राक्पिबेच्छ्लैष्मिको मद्यं भुक्तस्योपरि पैत्तिकः ॥
वातिकस्तु पिबेन्मध्ये समदोषो यथेच्छया ॥ १०० ॥
मदेषु वातपित्तञ्च प्रायो मूर्च्छासु चेष्टते ॥
सर्वत्रापि विशेषेण पित्तमेवोपलक्षयेत् ॥ १०१ ॥

शीताः प्रदेहा मणयः सेका व्यजनमारुताः ॥
सिताद्राक्षेक्षुखर्जूरकाश्मर्यैः स्वरसाः पयः ॥ १०२ ॥
सिद्धं मधुरवर्गेण रसा यूपाः सदाडिमाः ॥
षष्टिकाः शालयो रक्ता यवाः सर्पिश्च जीवनम् ॥ १०३ ॥
कल्याणकं महातिक्तं षट्पलं पयसाग्निकः ॥
पिप्पल्यो वा शिलाह्वं वा रसायनविधानतः ॥ १०४ ॥
त्रिफला वा प्रयोक्तव्या सघृतक्षौद्रशर्करा ॥
प्रसक्तवेगेषु हितं मुखनासावरोधनम् ॥ १०५ ॥
पिबेद्वा मानुषीक्षीरं तेन दद्याच्च नावनम् ॥
मृणालबिसकृष्णा वा लिह्यात्क्षौद्रेण साभयाः ॥ १०६ ॥
दुरालभा वा मुस्तां वा शीतेन सलिलेन वा ॥
पिबेन्मरिचकोलास्थिमज्जोशीराहिकेसरम् ॥१०७॥
धात्रीफलरसे सिद्धं पथ्याक्काथेन वा घृतम् ॥
कुर्य्यात्क्रियां यथोक्तां च यथादोषबलोदयम् ॥ १०८ ॥
पञ्चकर्म्माणिचेष्टानि सेचनं शोणितस्य च ॥
सत्त्वस्यालम्बनं ज्ञानमवृद्धिर्विषयेषु च ॥ १०९ ॥
मदेष्वतिप्रवृद्धेषु मूर्च्छायेषु च योजयेत् ॥
तीक्ष्णं संन्यासविहितं विषघ्नं विषजेषु च ॥ ११० ॥
आशु प्रयोज्यं संन्यासे सुतीक्ष्णं नस्यमञ्जनम् ॥
धूमप्रधमनं तोदः सूचिभिश्च नखान्तरे ॥ १११ ॥
केशानां लुञ्चनं दाहो दंशो दशनवृश्चिकैः ॥
कट्वम्लगालनं वक्त्रे कपिकच्छ्ववघर्षणम् ॥ ११२ ॥

उत्थितो लब्धसञ्ज्ञश्च लशुनस्वरस पिवेत् ॥
खादेत्सव्योषलवणंवीजपूरककेसरम् ॥ ११३ ॥
लब्धन्न प्रतितीक्ष्णोष्णमद्यात्स्रोतोविशुद्धये ॥
विस्मापनै. सस्मरणैः प्रियश्रवणदर्शनै ॥ ११४॥
पटुभिर्गीतवादित्रशब्दैर्व्यायामशीलनैः ॥
स्रसनोल्लेखनै र्धूमै शोणितस्यावसेचनैः ॥ ११५॥
उपाचरेत्त प्रततमनुवन्धभयात्पुन. ॥
तस्यसरक्षितव्य च मन प्रलयहेतुत. ॥ ११६ ॥

इत्यष्टाङ्गहृदयसहितायां चिकित्सास्थाने सप्तमोऽध्याय ॥ ७॥

## अष्टमोऽध्यायः ।

अथातोऽर्शसा चिकित्सित व्याख्यास्याम. ।
काले साधारणे व्यभ्रे नातिदुर्वलमर्शसम् ॥
विशुद्धकोष्ठ लघ्वल्पमनुलोमनमाशितम् ॥ १ ॥
शुचि कृतस्वस्त्ययन मुक्तविण्मूत्रमव्यथम् ॥
शयने फलके वान्यनरोत्सङ्गे व्यपाश्रितम् ॥ २ ॥
पूर्वेण कायेनोत्तान प्रत्यादित्यगुद समम् ॥
समुन्नतकटीदेशमथयन्त्रणवाससा ॥ ३ ॥
सक्थ्नो शिरोधराया च परिक्षिप्तमृजुस्थितम् ॥
आलम्बित परिचरै. सर्पिषाभ्यक्तपायवे ॥ ४ ॥

ततोऽस्मै सर्पिषाभ्यक्तं निदध्यादृजुयन्त्रकम् ॥
शनैरनुसुखंपायौततोदृष्ट्वा प्रवाहणात् ॥ ५ ॥
यन्त्रे प्रविष्टं दुर्नामप्लोतगुण्ठितयाऽनु च ॥
शलाकयोत्पीड्य भिषक् यथोक्तविधिना दहेत् ॥ ६ ॥
क्षारेणैवार्द्रमितरत्क्षारेण ज्वलनेन वा ॥
महद्वा बलिनश्छित्त्वा वीतयन्त्रमथातुरम् ॥ ७ ॥
स्वभ्यक्तपायुजघनमवगाहेनिधापयेत् ॥
निर्वातमन्दिरस्थस्य ततोऽस्याचारमादिशेत् ॥ ८ ॥
एकैकमितिसप्ताहात्सप्ताहात्समुपाचरेत् ॥
प्राग्दक्षिणं ततो वाममर्शंपृष्ठाग्रजं ततः ॥ ९ ॥
बह्वर्शसःसुदग्धस्य स्याद्वायोरनुलोमता ॥
रुचिरन्नेऽग्निपटुता स्वास्थ्यं वर्णबलोदयः ॥ १० ॥
बस्तिशूले त्वधो नाभेर्लेपयेत्श्लक्ष्णकल्कितैः ॥
वर्षाभूकुष्ठसुरभिमिशिलोहामराह्वयैः ॥ ११ ॥
शकृन्मूत्रप्रतीघाते परिषेकावगाहयोः ॥
वरणालम्बुषैरण्डगोकण्टकपुनर्नवैः ॥ १२ ॥
सुषवीसुरभीभ्यां च क्वाथमुष्णं प्रयोजयेत् ॥
सस्नेहमथवा क्षीरं तैलं वा वातनाशनम् ॥ १३ ॥
युञ्जीतान्नं शकृद्भेदि स्नेहान्वातप्रदीपनान् ॥
अथाप्रयोज्यदाहस्य निर्गतान्कफवातजान् ॥ १४ ॥
भूस्तम्भकण्डूरुक्छोफानभ्यज्य गुदकीलकान् ॥
केश‌ऽ‌ऽलाग्निकक्षारकुष्ठैः सिद्धेन सेचयेत् ॥ १५ ॥
कटुकलग

तैलेनाहिविडालोष्ट्रवराहवसयाथवा ॥
स्वेदयेदनुपिण्डेन द्रवस्वेदेन वा पुन ॥ १६ ॥
सक्तूनापिण्डिकाभिर्वा स्निग्धाना तैलसर्पिषा ॥
रास्नाया हपुषाया वा पिण्डैर्वा कार्ष्णगन्धिकै.॥ १७ ॥
अर्कमूल शमीपत्र नृकेशा. सर्पकञ्चुकम् ॥
मार्जारचर्म्मसर्पिश्च धूपन हितमर्शसाम् ॥ १८ ॥
तथाऽश्वगन्धा सुरसा बृहती पिप्पली घृतम् ॥
धान्याम्लपिष्टैर्जीमूतबीजैस्तज्जालक मृदु ॥ १९ ॥
लेपित छायया शुष्कं वर्तिर्गुदजशातनी ॥
सजालमूलजीमूतस्नेहे वा क्षारसयुते ॥ २० ॥
गुञ्जासूरणकूष्माण्डबीजैर्वर्तिस्तथागुणा ॥
स्नुक्क्षीरार्द्रनिशालेपस्तथागोमूत्रकल्कितै. ॥ २१ ॥
कृकवाकुसकृत्कृष्णानिशागुञ्जाफलैस्तथा ॥
स्नुक्क्षीरपिष्टै. षड्ग्रन्थाहलिनीवारणास्थिभि.॥ २२ ॥
कुलीरशृङ्गीविजयाकुष्ठारुष्करतुत्थकै. ॥
शिग्रुमूलकजैर्बीजै. पत्रैरश्वघ्ननिम्बजै ॥ २३ ॥
पीलुमूलेन बिल्वेन हिंगुना च समन्वितै. ॥
कुष्ठ शिरीषबीजानि पिप्पल्य सैन्धव गुड. ॥ २४ ॥
अर्कक्षीरसुधाक्षीर त्रिफला च प्रलेपनम् ॥
अर्क पय स्नुहीकाण्ड कटुकालाबुपल्लवा ॥ २५ ॥
करञ्जो वस्तमूत्र च लेपन श्रेष्ठमर्शसाम् ॥
आनुवासनिकैर्लेप पिप्पल्याद्यैश्च पूजित. ॥ २६ ॥

एभिरेवौषधैःकुर्य्यात्तैलान्यभ्यञ्जनानि च ॥
धूपनालेपनाभ्यङ्गैः प्रस्रवन्ति गुदाङ्कुराः ॥ २७ ॥
सञ्चितं दुष्टरुधिरं ततः सम्पद्यते सुखी ॥
आवर्तमानमुच्छूनकठिनेभ्यो हरेदसृक् ॥ २८ ॥
अर्शोभ्यो जलजाशस्त्रसूचीकूर्चैः पुनः पुनः ॥
शीतोष्णस्निग्धरूक्षाद्यैर्नव्याधिरुपशाम्यति ॥ २९ ॥
रक्ते दुष्टे भिषक्तस्माद्रक्तमेवावसेचयेत् ॥
यो जातो गोरसः क्षीराद्वह्निचूर्णावचूर्णितात् ॥ ३० ॥
पिबंस्तमेव तेनैव भुञ्जानो गुदजाञ्जयेत् ॥
कोविदारस्य मूलानां मथितेन रजः पिबेत् ॥ ३१ ॥
अन्नञ्जीर्णे च पथ्यानि मुच्यते हतनामभिः ॥
गुदश्वयथुशूलार्तो मन्दाग्निर्गौल्मिकान्पिबेत् ॥ ३२ ॥
हिंग्वादीननुतक्रं वा खादेद्गुडहरीतकीम् ॥
तक्रेण वा पिबेत्पथ्यावेल्लाग्निकुटजत्वचः ॥ ३३ ॥
कलिङ्गमगधाज्योतिःसूरणान्वांशवर्द्धितान् ॥
कोष्णाम्बुना वा त्रिकटुव्योषहिंग्वम्लवेतसम् ॥ ३४ ॥
युक्तं बिल्वकपित्थाभ्यां महौषधविडेन वा ॥
आरुष्करैर्यवान्या वा प्रदद्यात्तक्रतर्पणम् ॥ ३५ ॥
दद्याद्वा हपुषा हिंगु चित्रकं तक्रसंयुतम् ॥
मांसं तक्रानुपानानि खादेत्पीलुफलानि वा ॥ ३६ ॥
पिबेदहरहस्तक्रं निरन्नो वा प्रकामतः ॥
अत्यर्थं मन्दकायाग्नेस्तक्रमेवावचारयेत् ॥ ३७ ॥

सप्ताह वा दशाह वा मासार्धं मासमेव वा ॥
बलकालविकारज्ञो भिषक्तक्र प्रयोजयेत् ॥ ३८ ॥
सायं वा लाजसक्तूना दद्यात्तक्रावलेहिकाम् ॥
जीर्णे तक्रे प्रदद्याद्वा तक्रपेया ससैन्धवाम् ॥ ३९ ॥
तक्रानुपान सस्नेह तक्रौदनमत' परम् ॥
यूषै रसैर्वा तक्राढ्यै. शालीन्भुञ्जीत मात्रया ॥ ४० ॥
रूक्षमर्द्धोद्धृतस्नेह यतश्चानुद्धृत घृतम् ॥
तक्र दोषाग्निबलवत्त्रिविध तत्प्रयोजयेत् ॥ ४१ ॥
न विरोहन्ति गुदजा पुनस्तक्रसमाहता ॥
निषिक्त तद्विध हन्ति भूमावपि तृणोलुपम् ॥ ४२ ॥
स्रोतस्सु तक्रशुद्धेषु रसो धातूनुपैति य ॥
तेन पुष्टिर्बल वर्ण पर तुष्टिश्च जायते ॥ ४३ ॥
वातश्लेष्मविकाराणा शत च विनिवर्त्तते ॥
मथित भाजने क्षुद्रबृहतीफललेपिते ॥ ४४ ॥
निशा पर्य्युषित पेयमिच्छद्भिर्गुदजक्षयम् ॥
धान्योपकुञ्चिकाजाजीहपुषापिप्पलीद्वयैः ॥ ४५ ॥
कारवीग्रन्थिकशटीयवान्यग्नियवानकैः ॥
चूर्णितैर्घृतपात्रस्थ नात्यम्लतक्रमासुतम् ॥ ४६ ॥
तक्रारिष्ट पिबेज्जात व्यक्ताम्लकटुकामत ॥
दीपन रोचनं वर्ण्यं कफवातानुलोमनम् ॥ ४७ ॥
गुदश्वयथुकण्ड्वार्त्तिनाशन बलवर्द्धनम् ॥
त्वचं चित्रकमूलस्य पिष्ट्वा कुम्भ प्रलेपयेत ॥ ४८ ॥

तक्रं वा दधि वा तत्र जातमर्शोहरं पिबेत् ॥
भार्ङ्ग्यास्फोतामृतापञ्चकोलेष्वप्येष संविधिः ॥ ४९ ॥
पिष्टैर्गजकणापाठाकारवीपञ्चकोलकैः ॥
तुम्बर्यजाजीधनिकाबिल्वमध्यैश्च कल्पयेत् ॥ ५० ॥
फलाम्लान्यमकस्नेहान्पेयायूषरसादिकान् ॥
एभिरेवौषधैः साध्यं वारि सर्पिश्च दीपनम् ॥ ५१ ॥
क्रमोऽयं भिन्नशकृतां वक्ष्यते गाढवर्चसाम् ॥
स्नेहाद्यैःसक्तुभिर्युक्तां लवणां वारुणीं पिबेत् ॥ ५२ ॥
लवणा एव वा तक्रसीधुधान्याम्लवारुणीः ॥
प्राग्भक्तयमके भृष्टान्सक्तुभिश्चावचूर्णितान् ॥ ५३ ॥
करञ्जपल्लवान्खादेद्वातवर्चोऽनुलोमनान् ॥
सगुडं नागरं पाठां गुडक्षारघृतानि वा ॥ ५४ ॥
गोमूत्राध्युषितामद्यात्सगुडां वा हरीतकीम् ॥
पथ्याशतद्वयं मूत्रद्रोणेनामूत्रसंक्षयात् ॥ ५५ ॥
पक्वान्खादेत्समधुना द्वे द्वे हन्ति कफोद्भवान् ॥
दुर्नामकुष्ठश्वयथुगुल्ममेहोदरक्रिमीन् ॥ ५६ ॥
ग्रन्थ्यर्बुदापचीस्थौल्यपाण्डुरोगाढ्यमारुतान् ॥
अजशृंगीजटाकल्कमजामूत्रेण यः पिबेत् ॥ ५७ ॥
गुडवार्ताकभुक्तस्य नश्यन्त्याशु गुदांकुराः ॥
श्रेष्ठारसेन त्रिवृतां पथ्यां तक्रेण वा सह ॥ ५८ ॥
पथ्यां वा पिप्पलीयुक्तां घृतभृष्टां गुडान्विताम् ॥
अथवा सत्रिवृद्दन्तीं भक्षयेदनुलोमनीम् ॥ ५९ ॥

हते गुदाश्रये दोषे गुदजा यान्ति संक्षयम् ॥
दाडिमस्वरसाजाजीयवानीगुडनागरैः ॥ ६० ॥
पाठया वा युतं तक्रं वातवर्चोऽनुलोमनम् ॥
सीधुं वा गौडमथवा सचित्रकमहौषधम् ॥ ६१ ॥
पिबेत्सुरां वा हपुषापाठासौवर्चलान्विताम् ॥
दशाद्दिदशकैर्वृद्ध्या पिप्पलीर्द्वीपिचुं तिलान् ॥ ६२ ॥
पीत्वा क्षीरेण लभते बलं देहहुताशयोः ॥
दुस्पर्शकेन बिल्वेन यवान्या नागरेण वा ॥ ६३ ॥
एकैकेनापि संयुक्ता पाठा हन्त्यर्शसां रुजम् ॥
सलिलस्य वहे पक्त्वा प्रस्थार्द्धमभयात्वचम् ॥ ६४ ॥
प्रस्थं धात्र्या दशपलं कपित्थानां ततोऽर्द्धतः ॥
विशालारोध्रमरिचकृष्णवेल्लैरवालुकम् ॥ ६५ ॥
द्विपलांश पृथक्पादशेषे पूते गुडात्तुले ॥
दत्त्वा प्रस्थं च धातक्या स्थापयेद्घृतभाजने ॥ ६६ ॥
पक्षात्स शीलितोऽरिष्टः करोत्यग्निं निहन्ति च ॥
गुदजग्रहणीपाण्डुकुष्ठोदरगरज्वरान् ॥ ६७ ॥
श्वयथुप्लीहहृद्रोगगुल्मयक्ष्मवमीकृमीन् ॥
जलद्रोणे पचेद्दन्तीदशमूलावराग्निकान् ॥ ६८ ॥
पालिकान्पादशेषे तु क्षिपेद्गुडतुलां पराम् ॥
पूर्ववत्सर्वमस्य स्यादनुलोमितरस्त्वयम् ॥ ६९ ॥
पचेद्दुरालभाप्रस्थं द्रोणेऽपां प्रासृतैः सह ॥
दन्तीपाठाग्निविजयावासामलकनागरैः ॥ ७० ॥

तस्मिन्सिताशतं दद्यात्पादस्थेऽन्यच्च पूर्ववत् ॥
लिम्पेत्कुम्भं तु फलिनीकृष्णाचव्याज्यमाक्षिकैः ॥७१॥
प्राग्भक्तमानुलोम्याय फलाम्लं वा पिबेद् घृतम् ॥
चव्यचित्रकसिद्धं वा यवक्षारगुडान्वितम् ॥ ७२ ॥
पिप्पलीमूलसिद्धं वासगुडक्षारनागरम् ॥
पिप्पलीपिप्पलीमूलधान्यकादाडिमैर्घृतम् ॥ ७३ ॥
दध्ना च साधितं वातशकृन्मूत्रविबन्धहृत् ॥
पलाशक्षारतोयेन त्रिगुणेन पचेद् घृतम् ॥७४॥
वत्सकादिप्रतीवापमर्शोघ्नं दीपनं परम् ॥
पञ्चकोलाभयाक्षीरयवानीविडसैन्धवैः ॥ ७५ ॥
सपाठाधान्यमरिचैः सबिल्वैर्दधिमद् घृतम् ॥
साधयेत्तज्जयत्याशु गुदवंक्षणवेदनाम् ॥ ७६ ॥
प्रवाहिकां गुदभ्रंशं मूत्रकृच्छ्रं परिस्रवम् ॥
पाठाजमोदधनिकाश्वदंष्ट्रापञ्चकोलकैः ॥ ७७ ॥
सबिल्वैर्दधि चाङ्गेरीस्वरसे च चतुर्गुणे ॥
हन्त्याज्यं सिद्धमानाहं मूत्रकृच्छ्रं प्रवाहिकाम् ॥ ७८ ॥
गदभ्रंशार्तिगुदजग्रहणीगदमारुतान् ॥
शिखितित्तिरिलावानां रसानम्लान्सुसंस्कृतान् ॥ ७९ ॥
दक्षाणां वर्त्तकानां वा दद्याद्विड्वातसंग्रहे ॥
वास्तुकामितिवृद्दन्तीपाठाम्लीकादिपल्लवान् ॥ ८० ॥
अन्यच्च कफवातघ्नं शाकं च लघुभेदि च ॥
सहिङ्गुयमके भृष्टं सिद्धं दधिरसैः सह ॥ ८१ ॥

धनिकापञ्चकोलाभ्या पिष्टाभ्या दाडिमाम्बुना ॥
आर्द्रिकाया किसलयै शकलैरार्द्रकस्य च ॥ ८२ ॥
युक्तमङ्गारधूपेन हृद्येन सुरभीकृतम् ॥
म्जीरकं समरिच विडसौवर्चलोत्कटम् ॥ ८३ ॥
वातोत्तरस्य रूक्षस्य मन्दाग्नेर्बद्धवर्चस ॥
कल्पयेद्रक्तशाल्यन्नव्यञ्जन शाकवद्रसान् ॥ ८४ ॥
गोगोधाच्छगलोष्ट्राणा विशेषात्क्रव्यभोजिनाम् ॥
मदिरा शार्कर गोड सीधु तक्र तुषोदकम् ॥ ८५ ॥
अरिष्टमस्तुपानीयपानीय चाल्पक शृतम् ॥
धान्येन धान्यशुण्ठीभ्याकण्टकारिकयाऽथवा ॥ ८६ ॥
अन्ते भक्तस्य मध्ये वा वातवर्चोऽनुलोमनम् ॥
विड्वातकफपित्तानामानुलोम्ये हि निर्मले ॥ ॥ ८७ ॥
गुदे शाम्यन्ति गुदजा पावकश्चाभिवर्द्धते. ॥
उदावर्त्तपरीता ये ये चात्यर्थ विरूक्षिता. ॥ ८८ ॥
विलोमवाता. शूलार्तास्तेष्विष्टमनुवासनम् ॥
पिप्पली मदनं विल्व शताह्वा मधुकं वचाम् ॥ ८९ ॥
कुष्ट शुण्ठी पुष्कराख्य चित्रक देवदारु च ॥
पिष्ट्वा तैल विपक्तव्य द्विगुणक्षीरसंयुतम् ॥ ९० ॥
अर्शसा मूढवाताना तच्छ्रेष्ठमनुवासनम् ॥
गुदनि.सरण शूलं मूत्रकृच्छ्र प्रवाहिकाम् ॥ ९१ ॥
कटयूरुपृष्ठदौर्बल्यमानाह वक्षणाश्रयम् ॥
पिच्छास्राव गुदे शोफवातवर्चोविनिग्रहम् ॥ ९२ ॥

उत्थानं बहुशो यच्च जयेत्तच्चानुवासनात् ॥
निरूहं वा प्रयुञ्जीत सक्षीरं पञ्चमूलिकम् ॥ ९३ ॥
समूत्रस्नेहलवणं कल्कैर्युक्तं फलादिभिः ॥
अथ रक्तार्शसां वीक्ष्य मारुतस्य कफस्य वा ॥ ९४ ॥
अनुबन्धं ततः स्निग्धं रूक्षं वा योजयेद्विधिम् ॥
शकृच्छ्यावं खरं रूक्षमधो निर्याति नानिलः ॥ ९५ ॥
कट्यूरुगुदशूलं च हेतुर्यदि च रूक्षणम् ॥
तत्रानुबन्धो वातस्य श्लेष्मणो यदि विट्श्लथा ॥ ९६ ॥
श्वेतापीतागुरुस्निग्धा सपिच्छस्तिमितोगुदः ॥
हेतुस्निग्धगुरुर्विद्याद्यथास्वं चास्रलक्षणात् ॥ ९७ ॥
दुष्टेऽस्रे शोधनं कार्य्यं लङ्घनं च यथाबलम् ॥
यावच्च दोषैः कालुष्यं स्रुतेस्तावदुपेक्षणम् ॥ ९८ ॥
दोषाणां पाचनार्थं च वह्निसन्धुक्षणाय च ॥
संग्रहार्थं च रक्तस्य परं तिक्तैरुपाचरेत् ॥ ९९ ॥
यत्तु प्रक्षीणदोषस्यरक्तं वातोल्बणस्य वा ॥
स्नेहैस्तच्छोधयेद्युक्तैः पानाभ्यंजनबस्तिषु ॥ १०० ॥
यत्तु पित्तोल्बणं रक्तं घर्मकाले प्रवर्त्तते ॥
स्तम्भनीयं तदेकान्तान्न चेद्वातकफानुगम् ॥ १०१ ॥
सकफेऽस्रे पिबेत्पाक्यं शुण्ठीकुटजवल्कलम् ॥
किराततिक्तकं शुण्ठीं धन्वयासं कुचन्दनम् ॥ १०२ ॥
दार्वीत्वङ्निम्बसेव्यानि त्वचं वा दाडिमोद्भवाम् ॥
कुटजत्वक्पलं तार्क्ष्यं माक्षिकं घुणवल्लभाम् ॥ १०३ ॥

पिबेत्तण्डुलतोयेन कल्कितं वा मयूरकम् ॥
तुला दिव्याम्भसि पचेदार्द्राया कुटजत्वच. ॥ १०४ ॥
नीरसाया त्वचि क्वाथे दद्यात्सूक्ष्मरजीकृतान् ॥
समङ्गाफलिनीमोचरसान्मुष्टयंशकान्समान् ॥ १०५ ॥
तैश्च शक्रयवान्पूते ततो दर्वीप्रलेपनम् ॥
पक्त्वावलेहं लीढ्वा च तं यथाग्निवल पिबेत् ॥ १०६ ॥
पेया मण्ड पयश्छागं गव्य वा छागदुग्धभुक् ॥
लेहोऽय शमयत्याशु रक्तातीसारपायुजान् ॥ १०७ ॥
वलवद्रक्तपित्तं च स्रवदूर्ध्वमधोऽपि वा ॥
कुटजत्वक्तुला द्रोणे पचेदष्टांशशेषिताम् ॥ १०८ ॥
कल्कीकृत्य क्षिपेत्तत्र तार्क्ष्यशैल कटुत्रयम् ॥
रोध्रद्वयं मोचरसं वला दाडिम जात्वचम् ॥ १०९ ॥
विल्वकर्कटिकां मुस्त समङ्गा धातकीफलम् ॥
पलोन्मितं दशपल कुटजस्यैव च त्वच ॥ ११० ॥
त्रिंशत्पलानि गुडतो घृतात्पूते च विंशति ॥
तत्पक्वं लेहतां यात धान्ये पक्षस्थित लिहन् ॥ १११ ॥
सर्वार्शोग्रहणीदोपश्वासकासान्नियच्छति ॥
रोध्रं तिलान्मोचरस समङ्गा चन्दनोत्पलम् ॥ ११२ ॥
पाययित्वाजदुग्धेन शालीस्तेनैव भोजयेत् ॥
यष्ट्याह्वपद्मकानन्तापयस्याक्षीरमोरटम् ॥ ११३ ॥
ससितामधु पातव्य शीततोयेन तेन वा ॥
रोध्रकट्वङ्गकुटजसमङ्गाशाल्मलीत्वचम् ॥ ११४ ॥

हिमकेसरयष्ट्याह्वं सेव्यं वा तण्डुलाम्बुना ॥
यवानीन्द्रयवाः पाठा विल्वं शुण्ठीरसांजनम् ॥ ११५ ॥
चूर्णश्च लेहितं शूले प्रवृत्ते चातिशोणिते ॥
दुग्धिकाकण्टकारीभ्यां सिद्धं सर्पिः प्रशस्यते ॥ ११६ ॥
अथवा धातकीरोध्रकुटजत्वक्फलोत्पलैः ॥
सकेसरैर्य्यवक्षारदाडिमस्वरसेन वा ॥ ११७ ॥
शर्कराम्भोजकिंजल्कसहितं सह वा तिलैः ॥
अभ्यस्तं रक्तगुदजान्नवनीतं नियच्छति ॥ ११८ ॥
छागादिनवनीताज्यक्षीरमांसानि जांगलः ॥
अनम्लो वा कदम्लो वा सवास्तुकरसो रसः ॥ ११९ ॥
रक्तशालिः सरो दध्नःषष्टिकस्तरुणी सुरा ॥
तरुणश्च सुरामण्डः शोणितस्यौषधं परम् ॥ १२० ॥
पेयायूषरसाद्येषु पलाण्डुः केवलोऽपि वा ॥
स जयत्युल्बणं रक्तं मारुतं च प्रयोजितः ॥ १२१ ॥
वातोल्बणानि प्रायेण भवन्त्यस्रेऽतिनिःसृते ॥
अर्शांसि तस्मादधिकं तज्जये यत्नमाचरेत् ॥ १२२ ॥
दृष्ट्वास्रपित्तं प्रबलमबलौ च कफानिलौ ॥
शीतोपचारः कर्त्तव्यः सर्वथा तत्प्रशान्तये ॥ १२३ ॥
तावदेवं समस्तस्य स्निग्धोष्णैस्तर्पयेत्ततः ॥
रसैः कोष्णैश्च सर्पिर्भिरवपीडकयोजितैः ॥ १२४ ॥
सेचयेत्तं कवोष्णैश्च कामं तैलपयोघृतैः ॥
यवासकुशकाशानां मूलं पुष्पं च शाल्मलेः ॥ १२५ ॥

न्यग्रोधोदुम्बराश्वत्थशुङ्गाश्च द्विपलोन्मिता॰ ॥
त्रिप्रस्थे सलिलस्यैतत्क्षीरप्रस्थे च साधयेत् ॥ १२६ ॥
क्षीरशेषे कषाये च तस्मिन्पूते विमिश्रयेत् ॥
कल्कीकृत मोचरसं समगा चन्दनोत्पलम् ॥ १२७ ॥
प्रियङ्गु कौटजं वीज कमलस्य च केसरम् ॥
पिच्छावस्तिरय सिद्धः सघृतक्षौद्रशर्कर॰ ॥ १२८ ॥
प्रवाहिकागुदभ्रंशरक्तस्रावज्वरापह॰ ॥
यष्ट्याह्वपुण्डरीकेण तथा मोचरसादिभि ॥ १२९ ॥
क्षीरद्विगुणित. पक्वो देय. स्नेहोऽनुवासनम् ॥
मधुकोत्पलरोध्राम्बुसमगाबिल्वचन्दनम् ॥ १३० ॥
चविकातिविषा मुस्तं पाठा क्षारो यवाग्रज ॥
दार्वीत्वङ्नागरं मासी चित्रको देवदारु च ॥ १३१ ॥
चागेरीस्वरसे सर्पि. साधित तैस्त्रिदोषजित् ॥
अर्शोऽतिसारग्रहणीपाण्डुरोगज्वरारुचौ ॥ १३२ ॥
मूत्रकृच्छ्रे गुदभ्रंशे वस्त्यानाहे प्रवाहणे ॥
पिच्छास्रावेऽर्शसा शूले देय तत्परमौषधम् ॥ १३३ ॥
व्यत्यासान्मधुराम्लानि शीतोष्णानि च योजयेत् ॥
नित्यमग्निबलापेक्षी जयत्यर्शःकृतान्गदान् ॥ १३४ ॥
उदावर्त्तात्तमभ्यज्य तैलै. शीतज्वरापहैः ॥
सुस्निग्धै स्वेदयेत्पिण्डैर्वर्त्तिमस्मै गुदे ततः ॥ १३५ ॥
अभ्यक्ता तत्कराङ्गुष्ठसन्निभामनुलोमनीम् ॥
दद्याच्छ्यामात्रिवृद्दन्तीपिप्पलीनीलिनीफलै. ॥ १३६ ॥

विचूर्णितैर्द्विलवणैर्गुडगोमूत्रसंयुतैः ॥
तद्वन्मागधिकाराठगृहधूमैः ससर्षपैः ॥ १३७ ॥
एतेषामेव वा चूर्णं गुदे नाड्या विनिर्धमेत् ॥
तद्विघाते सुतीक्ष्णं तु वस्तिं स्निग्धं प्रपीडयेत् ॥ १३८ ॥
ऋजूकुर्याद्गुदशिरो विण्मूत्रमरुतोऽस्य सः ॥
भूयोऽनुबन्धे वातघ्नैर्विरेच्यः स्नेहरेचनैः ॥ १३९ ॥
अनुवास्यश्च रौक्ष्याद्धि सङ्गो मारुतवर्चसोः ॥
त्रिकटुत्रिपटुश्रेष्ठादन्त्यरुष्करचित्रकम् ॥ १४० ॥
जर्जरं स्नेहमूत्राक्तमन्तर्धूमं विपाचयेत् ॥
शरावसन्धौ मृल्लिप्ते क्षारः कल्याणकाह्वयः ॥ १४१ ॥
स पीतः सर्पिषा युक्तो भक्ते वा स्निग्धभोजिना ॥
उदावर्तविबन्धार्शोगुल्मपाण्डूदरकृमीन् ॥ १४२ ॥
मूत्रसङ्गाश्मरीशोफहृद्रोगग्रहणीगदान् ॥
मेहप्लीहरुजानाहश्वासकासांश्च नाशयेत् ॥
सर्वं च कुर्याद्यत्प्रोक्तमर्शसां गाढवर्चसाम् ॥ १४३ ॥
द्रोणेऽपां पूतिवल्काद्द्वितुलमथ पचेत्पादशेषे च तस्मिन्दे-
याशीतिर्गुडस्य प्रतनुकरजसो व्योषतोऽष्टौ पलानि ॥
एतन्मासेन जातं जनयति परमामूष्मणःपंक्तिशक्तिंशुक्तं
कृत्वानुलोम्यं प्रजयति गुदजप्लीहगुल्मोदराणि ॥ १४४ ॥
पचेत्तुलां पूतिकरंजफल्कात् मूलतश्चित्रककण्टकार्य्योः ॥
द्रोणत्रयेऽपां चरणावशेषे पूते शतं तत्र गुडस्य दद्यात् ॥ १४५ ॥

पलिकश्च सुचूर्णित त्रिजातत्रिकटुग्रन्थिकदाडिमाश्मभेदम्॥
परपुष्करमूलधान्यचव्य हपुषामार्द्रकमम्लवेतसं च॥ १४६ ॥

शीतीभूत क्षौद्रविशत्युपे-
तमार्द्रद्राक्षावीजपूरार्द्रकैश्च ॥
युक्तं कामं गण्डिकाभिस्तथेक्षोः सर्पि पात्रे
मासमात्रेण जातम् ॥ १४७ ॥

चुक्र क्रकचमिवेद दुर्नाम्ना वह्निदीपन परमम् ॥
पाण्डुगरोदरगुल्मप्लीहानाहाश्मकृच्छ्रघ्नम् ॥ १४८ ॥

द्रोणं पीलुरसस्य वस्त्रगलित न्यस्तं हविर्भाजने
युंजीत द्विपलैर्मदामधुफलाखर्जूरधात्रीफलै ॥
पाठामाद्रिदुरालभाम्लविदुलव्योपत्वगलोह्लकै
स्पृक्काकोलल्वङ्गवेल्लचपलामूलाग्निकै पालिकै. ॥ १४९ ॥

गुडपलशतयोजित निवाते
निहितमिद प्रपिवश्च पक्षमात्रात् ॥
निशमयतिगुदाकुरान्सगुल्माननल-
वल प्रवलं करोति चाशु ॥ १५० ॥

एकैकशो दशपले दशमूलकुम्भपाठा-
द्व्यार्कघुणवल्लभकट्फलानाम् ॥
दग्धे श्रुतेऽनु कलशेन जलेन पक्के
पादस्थिते गुडतुलापलपञ्चकञ्च ॥ १५१ ॥

दद्यात्प्रत्येकं व्योषचव्याभयानां

वह्नेर्मुष्टी द्वे यवक्षारतश्च ॥

दर्वीमालिंपन्हन्ति लीढो गुडोऽयं

गुल्मप्लीहार्शःकुष्ठमेहाग्निसादान् ॥ १५२ ॥

तोयद्रोणे चित्रकमूलतुलार्द्धं

साध्यं यावत्पादजलस्थमपीदम् ॥

अष्टौ दत्त्वा जीर्णगुडस्य फलानि

क्वाथ्यम्भूयः सान्द्रतया सममेतत् ॥ १५३ ॥

त्रिकटुमिसिपथ्याकुष्ठमुस्तावराङ्गक्रु-

मिरिपुदहनैलाचूर्णकीर्णोऽवलेहः ॥

जयति गुदजकुष्ठप्लीहगुल्मोदराणि

प्रबलयति हुताशं शश्वदभ्यस्यमानः ॥१५४॥

गुडव्योषवरावेल्लतिलारुष्करचित्रकैः ॥

अर्शांसि हन्ति गुटिका त्वग्विकारं च शीलिता ॥१५५॥

मृल्लिप्तं सौरणं कन्दं त्यक्त्वाग्नौ पुटपाकवत् ॥

अद्यात्सतैललवणं दुर्नामविनिवृत्तये ॥ १५६ ॥

मरिचपिप्पलिनागरचित्रका-

न्क्रमविवर्द्धितभागसमाहृतान् ॥

पचेत्तुला शिखिचतुर्गुणसूरणयोजितान्कु-

द्रोणत्रयेऽपां पिण्डेन गुडान्गुदजच्छिदः॥ १५७ ॥

चूर्णीकृता. षोडशसूरणस्य भागास्ततोऽर्द्धेन च चित्रकस्य॥
महौषधाद् द्वौ मरिचस्य चैको गुडेन दुर्नामजयायपिण्डी१५८
पथ्यानागरकृष्णाकरञ्जवेल्लाग्निभि. सितातुल्यैः ॥
वडवामुखइवजरयति वहुगुर्वपि भोजन चूर्णम् ॥१५९॥
कलिङ्गलाङ्गलीकृष्णावह्न्यपामार्गतण्डुलै ॥
भूनिम्बसैन्धवगुडैर्गुडागुदजनाशनाः ॥ १६० ॥

लवणोत्तमवह्निकलिंगयवाश्चिर-
विल्वमहापिचुमन्दयुतान् ॥
पिवसप्तदिन मथिताल्लुडितान्यदि
मर्दितुमिच्छसि पायुरुहान् ॥ १६१ ॥

शुष्केषु भल्लातकमग्र्यमुक्त भैपज्यमार्द्रेषु तु वत्सकत्वक्॥
सर्वेषु सर्वर्तुषु कालशेयमर्श'सुवल्य च मलापहञ्च ॥१६२॥
भित्त्वाविवन्धाननुलोमनाय यन्मारुतस्याग्निवलाय यच्च ॥
तदन्नपानौषधमर्शसेन सेव्य विवर्ज्यं विपरीतमस्मात्॥१६३॥
अर्शोऽतिसारग्रहणीविकारा प्रायेणचान्योऽन्यनिदानभूता॥
सन्नेऽनले सन्ति न सन्ति दीप्तेरक्षेदतस्तेषु विशेषतोऽग्निम्१६४

इत्यष्टाङ्गहृदयसहिताया चिकित्सास्थाने अष्टमोऽध्याय ॥ ८॥

# नवमोऽध्यायः ।



अथातोऽतीसारचिकित्सित व्याख्यास्याम. ।
अतीसारो हि भूयिष्ठं भवत्यामाशयान्वय' ॥
हत्वाग्नि वातजेप्यस्मात्प्राक्तस्मिल्लँघनं हितम् ॥ १॥

शूलानाहप्रसेकार्त्तं वासयेदतिसारिणम् ॥
दोषाः सन्निचिता ये च विदग्धाहारमूर्च्छिताः ॥ २ ॥
अतिसाराय कल्प्यन्ते तेषूपेक्षैव भेषजम् ॥
भृशोत्क्लेशप्रवृत्तेषु स्वयमेवचलात्मसु ॥ ३ ॥
प्रयोज्यं नतु संग्राहि पूर्वमामातिसारिणि ॥
अपि चाध्मानगुरुताशूलस्तैमित्यकारिणि ॥ ४ ॥
प्राणदा प्राणदा दोषे विबद्धे संप्रवर्तिनी ॥
पिबेत्प्रकथितांस्तोये मध्यदोषो विशोषयन् ॥ ५ ॥
भूतीकपिप्पलीशुण्ठीवचाधान्यहरीतकीः ॥
अथवा बिल्वधनिकामुस्तानागरवालकम् ॥ ६ ॥
विडपाठावचापथ्याकृमिजिन्नागराणि वा ॥
शुण्ठीघनवचामाद्रीबिल्ववत्सकहिङ्गु वा ॥ ७ ॥
शस्यते त्वल्पदोषाणामुपवासोऽतिसारिणाम् ॥
वचाप्रतिविषाभ्यां वा मुस्तापर्पटकेन वा ॥ ८ ॥
ह्रीबेरनागराभ्यां वा विपक्वं पाययेज्जलम् ॥
युक्तेऽन्नकाले क्षुत्क्षामं लघ्वन्नं प्रतिभोजयेत् ॥
तथा स शीघ्रं प्राप्नोति रुचिमग्निबलं बलम् ॥ ९ ॥
तक्रेणावन्तिसोमेन यवाग्वा तर्पणेन वा ॥ १० ॥
सुरया मधुना चाथ यथासात्म्यमुपाचरेत् ॥
भोज्यानि कल्पयेदूर्ध्वं ग्राहिदीपनपाचनैः ॥ ११ ॥
बालबिल्वशठीधान्यहिंगुवृक्षाम्लदाडिमैः ॥
पलाशहपुषाजाजीयवानीविडसैन्धवैः ॥ १२ ॥

लघुना पञ्चमूलेन पञ्चकोलेन पाठया ॥
शालिपर्णीबलाबिल्वैः पृश्निपर्ण्या च साधिता ॥ १३ ॥
दाडिमाम्ला हिता पेया कफपित्ते समुल्बणे ॥
अभयापिप्पलीमूलबिल्वैर्वातानुलोमनी ॥ १४ ॥
विबद्ध दोषबहुलो दीप्ताग्निर्योऽतिसार्यते ॥
कृष्णाविडङ्गत्रिफलाकषायैस्त विरेचयेत् ॥१५॥
पेया युज्याद्विरिक्तस्य वातघ्नैर्दीपनैः कृताम् ॥
आमे परिणते यस्तु दीप्तेऽग्नावुपवेश्यते ॥ १६ ॥
सफेनापिच्छं सरुजं सविबन्धं पुनः पुनः ॥
अल्पाल्पमल्पं समलं निर्विड्गं सप्रवाहिकम् ॥ १७ ॥
दधितैलघृतक्षौद्रैः सशुण्ठीं सगुडां पिबेत् ॥
स्विन्नानि गुडतैलेन भक्षयेद्बदराणि वा ॥ १८ ॥
गाढविड्हिते शाकैर्बहुस्नेहैस्तथा रसैः ॥
क्षुधितं भोजयेदेनं दधिदाडिमसाधितैः ॥ १९ ॥
शाल्योदनं तिलैर्माषैर्मुद्गैर्वा साधु साधितम् ॥
शठ्या मूलकपोताया पाठायाः स्वस्तिकस्य वा ॥ २० ॥
स्नुषायवानिकर्कारुक्षीरिणीचिर्भटस्य वा ॥
उपोदिकाया जीवन्त्या वाकुच्या वास्तुकस्य वा ॥२१॥
सुवर्चलायाश्चञ्चोर्वा लोणिकाया रसैरपि ॥
कूर्म्मवर्त्तकलोपाकशिखितित्तिरिकौक्कुटैः ॥ २२ ॥
बिल्वमुस्ताक्षिभैषज्यधातकीपुष्पनागरैः ॥
पक्वातिसाराजित्तक्रे यवागूर्दधिकी तथा ॥ २३ ॥

कपित्थकच्छुराफञ्जीयूथिकावटशैलुजैः ॥
दाडिमाशणकार्पासीशाल्मलीमोचपल्लवैः ॥ २४ ॥
कल्को बिल्वशलाटूनां तिलकल्कश्च तत्समः ॥
दध्नः सरोऽम्लःसस्नेहः खलो हन्ति प्रवाहिकाम् ॥ २५ ॥
मरिचं धनिकाजाजीतिन्तिडीकशटीविडम् ॥
दाडिमं धातकी पाठा त्रिफला पञ्चकोलकम् ॥ २६ ॥
यावशूकं कपित्थाम्रजम्बुमध्यं सदीप्यकम् ॥
पिष्टैः षड्गुणबिल्वैस्तैर्दध्नि मुद्गरसे गुडे ॥ २७ ॥
स्नेहे च यमके सिद्धःखलोऽयमपराजितः ॥
दीपनःपाचनो ग्राही रुच्यो बिम्बिशिनाशनः ॥ २८ ॥
कोलानां बालबिल्वानां कल्कैः शालियवस्य च ॥
मुद्गमाषतिलानां च धान्ययूषं प्रकल्पयेत् ॥ २९ ॥
ऐकध्यं यमके भृष्टं दधिदाडिमसारिकम् ॥
वर्चःक्षये शुष्कमुखं शाल्यन्नं तेन भोजयेत् ॥ ३० ॥
दध्नः सरं वा यमके भृष्टं सगुडनागरम् ॥
सुरां वा यमके भृष्टां व्यञ्जनार्थं प्रयोजयेत् ॥ ३१ ॥
फलाम्लं यमके भृष्टं यूषं गृञ्जनकस्य वा ॥
भृष्टान्वा यमके सक्तून्खादेद्व्योषावचूर्णितान् ॥ ३२ ॥
माषान्सुसिद्धांस्तद्वद्वा घृतमण्डोपसेवनान् ॥
रसं सुसिद्धं पूतं वा छागमेषान्तराधिजम् ॥ ३३ ॥
बालमूलसाराम्लं सधान्यस्नेहनागरम् ॥
पलाशहपुषं तेन भुंजानः प्रपिवंश्च तम् ॥ ३४ ॥

वर्चःक्षयकृतैराशु विकारैः परिमुच्यते ॥
वालबिल्वं गुडं तैलं पिप्पलीविश्वभेषजम् ॥ ३५ ॥
लिह्याद्वाते प्रतिहते सशूलः सप्रवाहिकः ॥
वल्कलं शावरं पुष्पं धातक्या बदरीदलम् ॥ ३६ ॥
पिबेद्दधिसरक्षौद्रकपित्थस्वरसाप्लुतम् ॥
विबद्धवातवर्चास्तु बहुशूलप्रवाहिकः ॥ ३७ ॥
सरक्तपिच्छस्तृष्णार्तः क्षीरसौहित्यमर्हति ॥
यमकस्योपरि क्षीरं धारोष्णं वा प्रयोजयेत् ॥ ३८ ॥
शृतमेरण्डमूलेन बालबिल्वेन वा पुनः ॥
पयस्युत्क्वाथ्य मुस्तानां विंशतिं त्रिगुणेऽम्भसि ॥ ३९ ॥
क्षीरावशिष्टं तत्पीतं हन्यादामं सवेदनम् ॥
पिप्पल्याः पिबतः सूक्ष्मं रजो मरिचजन्म वा ॥ ४० ॥
चिरकालानुपक्तापि नश्यत्याशु प्रवाहिका ॥
निरामरूपं शूलार्तं लघनाद्यैश्च कर्षितम् ॥ ४१ ॥
रूक्षकोष्ठमपेक्ष्याग्निं सक्षारं पाययेद्घृतम् ॥
सिद्धं दधिसुरामण्डे दशमूलस्य चाम्भसि ॥ ४२ ॥
सिन्धूत्थपञ्चकोलाभ्यां तैलं सद्योऽर्तिनाशनम् ॥
पड्भिः शुण्ठ्याः पलैर्द्वाभ्यां द्वाभ्यां ग्रन्थ्यग्निसैन्धवात् ४३
तैलप्रस्थं पचेद्दध्ना निःसारकरुजापहम् ॥
एकतो मासदुग्धाज्यं पुरीषग्रहशूलजित् ॥ ४४ ॥
पानानुवासनाभ्यङ्गप्रयुक्तं तैलमेकतः ॥
तद्धि वातजितामग्र्यं शूलं च विगुणोऽनिलः ॥ ४५ ॥

धान्वन्तरोपमर्दाद्धि चलो व्यापी स्वधामगः ॥
तैलं मन्दानलस्यापि युक्त्या शर्म्मकरं परम् ॥
वाय्वाशये सतैले हि विम्बिशी नावतिष्ठते ॥ ४६ ॥
क्षीणे मले स्वायतनच्युतेषु दोषान्तरेष्वीरण एकवीरे ॥
को निष्टनन्प्राणिति कोष्ठशूली नान्तर्बहिस्तैलपरो दि स्यात् ४७
गुदरुग्भ्रंशयोर्युञ्ज्यात्सक्षीरं साधितं हविः ॥
रसे कोलाम्लचाङ्गेर्य्योर्दध्नि पिष्टे च नागरे ॥ ४८ ॥
तैरेव चाम्लैः संयोज्य सिद्धं सुश्लक्ष्णकल्कितैः ॥
धान्योषणबिडाजाजीपाठाकोलकदाडिमैः ॥ ४९ ॥
योजयेत्स्नेहबस्तिं वा दशमूलेन साधितम् ॥
शठीशताह्वाकुष्ठैर्वा वचया चित्रकेण वा ॥ ५० ॥
प्रवाहणे गुदभ्रंशे मूत्राघाते कटिग्रहे ॥
मधुराम्लैः शृतं तैलं घृतं वाप्यनुवासनम् ॥ ५१ ॥
प्रवेशयेद्गुदं ध्वस्तमभ्यक्तं स्वेदितं मृदु ॥
कुर्य्याच्च गोःफणाबन्धं मध्यच्छिद्रेण चर्म्मणा ॥ ५२ ॥
पंचमूलस्य महतः क्वाथं क्षीरे विपाचयेत् ॥
उन्दुरुं चान्त्ररहितं तेन वातघ्नकल्कवत् ॥ ५३ ॥
तैलं पचेद्गुदभ्रंशं पानाभ्यङ्गेन तज्जयेत् ॥
पैत्ते तु सामे तीक्ष्णोष्णवर्ज्यं प्रागिव लंघनम् ॥ ५४ ॥
तृड्वान्पिबेत्षडङ्गाम्बु सभूनिम्बं ससारिवम् ॥
पेयादि क्षुधितस्यान्नमग्निसन्धुक्षणं हितम् ॥ ५५ ॥

बृहत्यादिगणाभीरुद्विबलासूर्पपर्णिभि ॥
पाययेदनुबन्धे तु सक्षौद्र तण्डुलाम्भसा ॥ ५६ ॥
पाठा वत्सकबीजत्वग्दार्वी ग्रन्थिकशुण्ठि वा ॥
वत्सकस्य फल पिष्टं सवल्कं सघुणप्रियम् ॥ ५७ ॥
क्वाथं चातिविषाबिल्ववत्सकोदीच्यमुस्तजम् ॥
अथवातिविषामूर्वानिशेन्द्रयवताक्ष्यर्जम् ॥ ५८ ॥
समध्वातिविषाशुण्ठीमुस्तेन्द्रयवकट्फलम् ॥
फल वत्सकबीजस्य श्रपयित्वा रस पिबेत् ॥ ५९ ॥
यो रसाशी जयेच्छीघ्रं सपैत्तं जठरामयम् ॥
मुस्ताकषायमेव वा पिबेन्मधुसमायुतम् ॥ ६० ॥
सक्षौद्रं शाल्मलीवृन्तकषाय वा हिमाह्वयम् ॥
किराततिक्तकं मुस्तं वत्सकं सुरसाजनम् ॥ ६१ ॥
कटङ्कटेरी ह्रीवेर बिल्वमध्य दुरालभाम् ॥
तिलान्मोचरसं रोध्र समगा कमलोत्पलाम् ॥ ६२ ॥
नागर धातकीपुष्प दाडिमस्य त्वगुत्पलम् ॥
अर्द्धश्लोकै. स्मृता योगा. सक्षौद्रास्तण्डुलाम्बुना ॥६३॥
निशेन्द्रयवरोध्रैलाक्वाथ. पक्वातिसारनुत् ॥
रोध्राम्बष्ठाप्रियङ्ग्वादिगणास्तद्वत्पृथक्पिबेत् ॥ ६४ ॥
कट्वङ्गवल्कयष्ट्याह्वाफलिनीदाडिमाङ्कुरै. ॥
पेयाविलेपीखलकान्कुर्य्यात्सदधिदाडिमान् ॥ ६५ ॥
तद्वद्दधित्थबिल्वाम्रजम्बुमध्यै. प्रकल्पयेत् ॥
अजापय. प्रयोक्तव्य निरामे तेन चेच्छम ॥ ६६ ॥

दोपाधिक्यान्न जायेत बलिनं तं विरेचयेत् ॥
व्यत्यासेन शकृद्रक्तमुपवेश्येत योऽपिवा ॥ ६७ ॥
पलाशफलनिर्यूहं युक्तं वा पयसा पिवेत् ॥
ततोऽनु कोष्णं पातव्यं क्षीरमेव यथावलम् ॥ ६८ ॥
प्रवाहिते तेन मले प्रशाम्यत्युदरामयः ॥
पलाशवत्प्रयोज्या वा त्रायमाणा विशोधनी ॥ ६९ ॥
संसर्ग्यां क्रियमाणायां शूलं यद्यनुवर्तते ॥
स्रुतदोपस्य तं शीघ्रं यथावह्न्यनुवासयेत् ॥ ७० ॥
शतपुष्पावरीभ्यां च विल्वेन मधुकेन च ॥
तैलपादं पयोयुक्तं पक्वमन्वासनं घृतम् ॥ ७१ ॥
अशान्तावित्यतीसारे पिच्छावस्तिः परं हितः ॥
परिवेष्ट्य कुशैरार्द्रैरार्द्रवृन्तातिशाल्मलेः ॥ ७२ ॥
कृष्णमृत्तिकया लिप्य स्वेदयेद्गोमयाग्निना ॥
मृच्छोपे तानि संचुद्य तत्पिण्डं मुष्टिसम्मितम् ॥ ७३ ॥
मर्दयेत्पयसःप्रस्थे पूतेनास्थापयेत्ततः ॥
नतयष्ट्याह्वकल्काज्यक्षौद्रतैलवतानु च ॥ ७४ ॥
स्नातो भुञ्जीतपयसा जांगलेन रसेन वा॥७५॥
पित्तातिसारज्वरशोफगुल्मसमीरणास्रग्रहणीविकारान् ॥
जयत्ययं शीघ्रमतिप्रवृत्तिंविरेचनास्थापनयोश्च वस्तिः॥७६॥
फाणितं कुटजोत्थं च सर्वातीसारनाशनम् ॥
वत्सकादिसमायुक्तं साम्वष्टादिसमाक्षिकम् ॥ ७७ ॥

निरग्निराम दीप्ताग्नेरपि सास्र चिरोत्थितम् ॥
नानावर्णमतीसारं पुटपाकैरुपाचरेत् ॥ ७८ ॥
त्वक्पिण्डाद्दीर्घवृन्तस्य श्रीपर्णीपत्रसवृतात् ॥
मृल्लिप्तादग्निना स्विन्नाद्रसं निष्पीडितं हिमम् ॥
अतीसारी पिबेद्युक्त मधुना सितयाऽथवा ॥ ७९ ॥
एवं क्षीरद्रुमत्वग्भिस्तत्प्ररोहैश्च कल्पयेत् ॥
कट्वङ्गत्वग्घृतयुता स्वेदिता सलिलोष्मणा ॥ ८० ॥
सक्षौद्रा हन्त्यतीसार वलवन्तमपि द्रुतम् ॥
पित्तातिसारी सेवेत पित्तलान्येव वा पुन' ॥ ८१ ॥
रक्तातिसारं कुरुते तस्य पित्त सतृड्ज्वरम् ॥
दारुण गुदपाकश्च तत्रच्छाग पयो हितम् ॥ ८२ ॥
पद्मोत्पलसमङ्गाभि• शृतं मोचरसेन वा ॥
सारिवायष्टिरोध्रैर्वा प्रसवैर्वा वटादिजे ॥ ८३ ॥
सक्षौद्रशर्कर पाने भोजने गुदसेचने ॥
तद्वद्रसादयोऽनम्ला• साज्या• पानान्नयोर्हिता• ॥ ८४ ॥
काश्मर्य्यफलयूपश्च किंचिदम्लः सशर्करः ॥
पयस्यर्द्धोदके छागे ह्रीबेरोत्पलनागरैः ॥ ८५ ॥
पेया रक्तातिसारघ्नी पृश्निपर्णीरसान्विता ॥
प्राग्भक्त नवनीत वा लिह्यान्मधुसितायुतम् ॥ ८६ ॥
बलिन्यस्त्रेस्रमेवाजं मार्ग वा घृतभर्जितम् ॥
क्षीरानुपान क्षीराशी त्र्यहं क्षीरोद्भव घृतम् ॥ ८७ ॥

कपिञ्जलरसाशी वा लिहन्नारोग्यमश्नुते ॥
पीत्वा शतावरीकल्कं क्षीरेण क्षीरभोजनः ॥ ८८ ॥
रक्तातिसारं हन्त्याशु तया वा साधितं घृतम् ॥
लाक्षानागरवैदेहीकटुकादार्विवल्कलैः ॥ ८९ ॥
सर्पिः सेन्द्रयवैः सिद्धं पेयामण्डावचारितम् ॥
अतिसारं जयेच्छीघ्रं त्रिदोषमपि दारुणम् ॥ ९० ॥
कृष्णमृच्छंखयष्ट्याह्वक्षौद्रासृक्तण्डुलोदकम् ॥
जयत्यस्रं प्रियंगुश्च तण्डुलाम्बुमधुप्लुता ॥ ९१ ॥
कल्कस्तिलानां कृष्णानां शर्करापञ्चभागिकः ॥
आजेन पयसा पीतः सद्यो रक्तं नियच्छति ॥ ९२ ॥
पीत्वा सशर्कराक्षौद्रं चन्दनं तण्डुलाम्बुना ॥
दाहतृष्णाप्रमेहेभ्यो रक्तस्रावाच्च मुच्यते ॥ ९३ ॥
गुदस्य दाहे पाके वा सेकलेपा हिता हिमाः ॥
अल्पाल्पं बहुशो रक्तं सशूलमुपवेश्यते ॥ ९४ ॥
यदा विबद्धो वायुश्च कृच्छ्राच्चरति वा न वा ॥
पिच्छाबस्तिं तदा तस्य पूर्वोक्तमुपकल्पयेत् ॥ ९५ ॥
पल्लवाञ्जर्जरीकृत्य शिंशिपाकोविदारयोः ॥
पचेद्यवांश्च स क्वाथो घृतक्षीरसमन्वितः ॥ ९६ ॥
पिच्छास्रुतौ गुदभ्रंशे प्रवाहणरुजासु च ॥
पिच्छाबस्तिः प्रयोक्तव्यः क्षतक्षीणबलावहः ॥ ९७ ॥
प्रपौण्डरीकसिद्धेन सर्पिषा चानुवासनम् ॥
रक्तं विड्सहितं पूर्वं पश्चाद्वा योऽतिसार्यते ॥ ९८ ॥

शतावरी घृत तस्य लेहार्थमुपकल्पयेत् ॥
शर्कराद्धांशकं लीढ नवनीत नवोद्धृतम् ॥ ९९ ॥
क्षौद्रपादं जयेच्छीघ्रं त विकारं हिताशिन ॥
न्यग्रोधोदुम्बराश्वत्थशुङ्गानापोथ्य वासयेत् ॥ १०० ॥
अहोरात्र जले तप्ते घृत तेनाम्भसा पचेत् ॥
तदर्द्धशर्करायुक्त लेहयेत्क्षौद्रपादिकम् ॥ १०१ ॥
अधो वा यदि वाप्यूर्ध्व यस्य रक्त प्रवर्त्तते ॥
श्लेष्मातिसारे वातोक्त विशेषादामपाचनम् ॥ १०२ ॥
कर्तव्यमनुवन्धस्य पिवेत्पक्त्वाग्निदीपनम् ॥
विल्वकर्कटिकामुस्तप्राणदा विश्वभेषजम् ॥ १०३ ॥
वचाविडङ्गभूतीकधानकामरदारु वा ॥
अथवा पिप्पलीमूलपिप्पलीद्वयचित्रका ॥ १०४ ॥
पाठाग्निवत्सकग्रन्थितिक्ताशुण्ठीवचाभया ॥
क्वथिता यदि वा पिष्टा श्लेष्मातीसारभेषजम ॥ १०५॥
सौवर्चलावचाव्योषहिंगुप्रतिविषाभया. ॥
पिवेच्छ्लेष्मातिसारार्त्तश्चूर्णिता. कोष्णवारिणा ॥ १०६ ॥
मध्य लीढ्वा कपित्थस्य सव्योषक्षौद्रशर्करम् ॥
कट्फल मधुयुक्त वा मुच्यते जठरामयात् ॥ १०७ ॥
कणां मधुयुता लीढ्वा तक्र पीत्वा सचित्रकम् ॥
भुक्त्वा वा वालविल्वानि व्यपोहत्युदरामयम् ॥ १०८ ॥
पाठामोचरसाम्भोदधातकीविल्वनागरम् ॥
सुकृच्छ्रमप्यतीसार गुडतक्रेण नाशयेत् ॥ १०९ ॥

यवानीपिप्पलीमूलचातुर्जातकनागरैः ॥
मरिचाग्निजलाजाजी धान्यसौवर्चलैः समैः ॥ ११० ॥
वृक्षाम्लधातकीकृष्णाबिल्वदाडिमदीप्यकैः ॥
त्रिगुणैः षड्गुणसितैः कपित्थाष्टगुणैः कृतः ॥ १११ ॥
चूर्णोऽतीसारग्रहणीक्षयगुल्मोदरामयान् ॥
कासश्वासाग्निसादार्शःपीनसारोचकाञ्जयेत् ॥ ११२ ॥
कर्षोन्मिता तुगाक्षीरी चातुर्जातं द्विकार्षिकम्
यवानीधान्य काजाजीग्रन्थिव्योषं पलांशकम् ॥ ११३ ॥
पलानि दाडिमादष्टौ सितायाश्चैकतः कृतः ॥
गुणैः कपित्थाष्टकवच्चूर्णोऽयं दाडिमाष्टकः ॥ ११४ ॥
भोज्यो वातातिसारोक्तैर्यथावस्थं खलादिभिः ॥
सविडङ्गः समरिचः सकपित्थः सनागरः ॥ ११५ ॥
चाङ्गेरीतक्रकोलाम्लः खलः श्लेष्मातिसारजित् ॥
क्षीणे श्लेष्मणि पूर्वोक्तमम्लं लाक्षादिषट्पलम् ॥ ११६ ॥
पुराणं वा घृतं दद्याद्यवागूं मण्डमिश्रिताम् ॥
वातश्लेष्मविबन्धे च स्रवत्यतिकफेऽपि वा ॥ ११७ ॥
शूले प्रवाहिकायां वा पिच्छाबस्तिः प्रशस्यते ॥
वचाबिल्वकणाकुष्ठशताह्वालवणान्वितः ॥ ११८ ॥
बिल्वतैलेन तैलेन वचाद्यैः साधितेन वा ।
बहुशः कफवातार्ते कोष्णेनान्वासनं हितम् ॥ ११९ ॥
क्षीणे कफे गुदे दीर्घकालातीसारदुर्बले ।
अनिलः प्रबलोऽवश्यं स्वस्थानस्थः प्रजायते ॥ १२० ॥

स वली सहसा हन्यात्तस्मात्त त्वरया जयेत् ॥
वायोरनन्तर पित्त पित्तस्यानन्तर कफम् ॥ १२१ ॥
जयेत्पूर्व त्रयाणा वा भवेद्यो वलवत्तमः ।
भीशोकाभ्यामपि चल' शीघ्र कुप्यत्यतस्तयो ॥ १२२ ॥
कार्य्या क्रिया वातहरा हर्षणाश्वासनानि च ॥ १२३ ॥
यस्योच्चाराद्विना मूत्र पवनो वा प्रवर्तते ।
दीप्ताग्नेर्लघुकोष्ठस्य शान्तस्तस्योदरामय ॥ १२४ ॥

इत्यष्टाङ्गहृदयसहिताया चिकित्सास्थाने नवमोऽध्याय. ॥ ९ ॥

## दशमोऽध्यायः ।

ग्रहणीमाश्रित दोपमजीर्णवदुपाचरेत् ॥
अतीसारोक्तविधिना तस्यामश्च विपाचयेत् ॥ १ ॥
अन्नकाले यवाग्वादि पञ्चकोलादिभिर्युतम् ॥
वितरेत्पटुलघ्वन्न पुनर्योगाश्च दीपनान् ॥ २ ॥
दद्यात्सातिविपा पेयामामे साम्ला सनागराम् ॥
पानेऽतिसारविहित वारि तक्र सुरादि च ॥ ३ ॥
ग्रहणीदोपिणा तक्र दीपनग्राहिलाघवात् ॥
पथ्य मधुरपाकित्वान्न च पित्तप्रदूपणम् ॥ ४ ॥
कपायोष्णविकाशित्वाद्रूक्षत्वाच्च कफेहितम् ॥
वाते स्वाद्वम्लसान्द्रत्वात्सद्यस्कमविदाहितत् ॥ ५ ॥
चतुर्णा प्रस्थमम्लाना त्र्यूपणाच्च पलत्रयम् ॥
लवणाना च चत्वारि शर्कराया. पलाष्टकम् ॥ ६ ॥

तच्चूर्णं शाकसूपान्नरागादिष्ववचारयेत् ॥
कासाजीर्णारुचिश्वासहृत्पार्श्वामयशूलनुत् ॥ ७ ॥
नागरातिविषामुस्तं पाक्यमामहरं पिबेत् ॥
उष्णाम्बुना वा तत्कल्कं नागरं वाथ वाभयाम् ॥ ८ ॥
ससैन्धवं वचादिं वा तद्वन्मादिरयाऽथ वा ॥
वर्चस्यामे सप्रवाहे पिबेद्वा दाडिमाम्बुना ॥ ९ ॥
बिडेन लवणं पिष्टं बिल्वचित्रकनागरम् ॥
सामे कफानिले कोष्ठारुक्करे कोष्णवारिणा ॥ १० ॥
कलिङ्गहिंग्वतिविषावचासौवर्चलाभयम् ॥
छर्दिहृद्रोगशूलेषु पेयमुष्णेन वारिणा ॥ ११ ॥
पथ्यासौवर्चलाजाजीचूर्णं मरिचसंयुतम् ॥
पिप्पलीं नागरं पाठां सारिवां बृहतीद्वयम् ॥ १२ ॥
चित्रकं कौटजं क्षारं तथा लवणपञ्चकम् ॥
चूर्णीकृतं दधिसुरातन्मण्डोष्णाम्बुकाञ्जिकैः ॥ १३ ॥
पिबेदग्निविवृद्ध्यर्थं कोष्ठवातहरं परम् ॥
पटूनि पञ्च द्वौ क्षारौ मरिचं पञ्चकोलकम् ॥ १४ ॥
दीप्यकं हिंगुगुलिका बीजपूररसे कृता ॥
कोलदाडिमतोये वा परं पाचनदीपनी ॥ १५ ॥
तालीसपत्रचविकामरिचाना पलं-पलम् ॥
कृष्णातन्मूलयोर्द्वे द्वे पले शुण्ठीपलत्रयम् ॥ १६ ॥
चातुर्जातमुशीरं च कर्षांशं श्लक्ष्णचूर्णितम् ॥
गुडेन वटकान्कृत्वा त्रिगुणेन सदा भजेत् ॥ १७ ॥

मद्ययूपरसारिष्टमस्तुपेयापयोऽनुप ॥
वातश्लेष्मात्मना छर्दिग्रहणीपार्श्वहृद्रुजाम्॥ १८ ॥
ज्वरश्वयथुपाण्डुत्वगुल्मपानात्ययार्शसाम्॥
प्रसेकपीनसश्वासकासानाञ्च निवृत्तये ॥ १९ ॥
अभया नागरस्थाने दद्यादत्रैव विड्ग्रहे ॥
छर्द्यादिषु च पैत्तेषु चतुर्गुणसितान्विता ॥ २० ॥
पक्केन वटकाः कार्या गुडेन सितयापि वा ॥
पर हि वह्निसम्पर्काल्लघिमान भजन्ति ते ॥ २१ ॥
अथैन परिपक्वाममारुतग्रहणीगदम् ॥
दीपनीययुत सर्पि पाययेदल्पशो भिषक्॥ २२ ॥
किञ्चित्सन्धुक्षिते त्वग्नौ सक्तविण्मूत्रमारुतम् ॥
द्व्यह त्र्यह वा सस्नेह्य स्विन्नाभ्यक्त निरूहयेत्॥ २३॥
तत एरण्डतैलेन सर्पिषा तैल्वकेन वा ॥
सक्षारेणानिले शान्ते स्रस्तदोष विरेचयेत्॥ २४ ॥
शुद्धरूक्षाशय बद्धवर्चस्कं चानुवासयेत्॥
दीपनीयाम्लवातघ्नसिद्धतैलेन त तत.॥ २५ ॥
निरूढ च विरिक्तं च सम्यक्चाप्यनुवासितम्॥
लघ्वन्नप्रतिसंयुक्त सर्पिरभ्यासयेत्पुनः॥ २६ ॥
पञ्चमूलाभयाव्योषपिप्पलीमूलसैन्धवै.॥
रास्नाक्षीरहयाजाजीविडङ्गशठिभिर्घृतम् ॥ २७ ॥
शुक्तेन मातुलुङ्गस्य स्वरसेनार्द्रकस्य वा ॥
शुष्कमूलककोलाम्लचुक्रिकादाडिमस्य च ॥ २८ ॥

तक्रमस्तुसुरामण्डसौवीरकतुषोदकैः ॥
काञ्जिकेन चतत्पक्वमग्निदीप्तिकरं परम् ॥ २९ ॥
शूलगुल्मोदरश्वासकासानिलकफापहम् ॥
सबीजपूरकरसे सिद्धं वा पाययेद्घृतम् ॥ ३० ॥
तैलमभ्यञ्जनार्थं च सिद्धमेभिश्चलापहम् ॥
एतेषामौषधानां वा पिबेच्चूर्णं सुखाम्बुना ॥ ३१ ॥
वातश्लेष्मावृते सामे कफे वा वायुनोद्धृते ॥
अग्नेर्निर्वापकं पित्तं रेकेण वमनेन वा ॥ ३२ ॥
हृत्वा तिक्तलघुग्राहिदीपनैरविदाहिभिः ॥
अम्लैः सन्धुक्षयेदग्निं चूर्णैः स्नेहैश्च तिक्तकैः ॥ ३३ ॥
पटोलनिम्बत्रायन्तीतिक्तातिक्तकपर्पटम् ॥
कुटजत्वक्फलं मूर्वा मधुशिग्रुफलं वचा ॥ ३४ ॥
दार्वीत्वक्पद्मकोशीरयवानीमुस्तचन्दनम् ॥
सौराष्ट्र्यतिविषाव्योषत्वगेलापत्रदारु च ॥ ३५ ॥
चूर्णितं मधुना लेह्यं पेयं मद्यैर्जलेन वा ॥
हृत्पाण्डुग्रहणीरोगगुल्मशूलारुचिज्वरान् ॥ ३६ ॥
कामलां सन्निपातं च मुखरोगांश्च नाशयेत् ॥
भूनिम्बकटुकामुस्तात्र्यूषणेन्द्रयवान्समान् ॥ ३७ ॥
द्वौ चित्रकात्कुटजत्वग्भागान्षोडश चूर्णयेत् ॥
गुडशीताम्बुना पीतं ग्रहणीदोषगुल्मनुत् ॥ ३८ ॥
कामलाज्वरपाण्डुत्वमेहारुच्यातिसारजित् ॥
नागरातिविषा मुस्ता पाठा बिल्वं रसाञ्जनम् ॥ ३९ ॥

कुटजत्वक्फलं तिक्ता धातकी च कृतं रजः ॥
क्षौद्रतण्डुलवारिभ्यां पैत्तिके ग्रहणीगदे ॥ ४० ॥
प्रवाहिकार्शोगुदरुग्रक्तोत्थानेषु चेष्यते ॥
चन्दनं पद्मकोशीरं पाठां मूर्वां कुटन्नटम् ॥ ४१ ॥
षड्ग्रन्थासारिवाऽऽस्फोटासप्तपर्णाटरूपकान् ॥
पटोलोदुम्बराश्वत्थवटप्लक्षकपीतनम् ॥ ४२ ॥
कटुकां रोहिणीं मुस्तां निम्बं च द्विपलांशकान् ॥
द्रोणेऽपां साधयेत्तेन पचेत्सर्पिः पिचून्मितैः ॥ ४३ ॥
किराततिक्तेन्द्रयववीरामागधिकोत्पलैः ॥
पित्तग्रहण्यां तत्पेयं कुष्ठोक्तं तिक्तकं च यत् ॥ ४४ ॥
ग्रहण्यां श्लेष्मदुष्टायां तीक्ष्णैः प्रच्छर्दने कृते ॥
कट्वम्ललवणक्षारैः क्रमादग्निं विवर्द्धयेत् ॥ ४५ ॥
पञ्चकोलाभयाधान्यपाठागन्धपलाशकैः ॥
बीजपूरप्रवालैश्च सिद्धैः पेयादि कल्पयेत् ॥ ४६ ॥
द्रोणं मधूकपुष्पाणां विडङ्गं च ततोऽर्द्धतः ॥
चित्रकस्य ततोऽर्द्धं च तथा भल्लातकाढकम् ॥ ४७ ॥
मञ्जिष्ठाऽष्टपलं चैतज्जलद्रोणत्रये पचेत् ॥
द्रोणशेषं शृतं शीतं मध्वर्धाढकसंयुतम् ॥ ४८ ॥
एलामृणालागुरुभिश्चन्दनेन च रूपिते ॥
कुम्भे मासं स्थितं जातमासवं तं प्रयोजयेत् ॥ ४९ ॥
ग्रहणीं दीपयत्येष बृंहणः पित्तरक्तनुत् ॥
शोषकुष्ठकिलासानां प्रमेहाणां च नाशनः ॥ ५० ॥

मधूकपुष्पस्वरसं शृतमर्द्धक्षयीकृतम् ॥
क्षौद्रपादयुतं शीतं पूर्ववत्सन्निधापयेत् ॥ ५१ ॥
तत्पिबन्ग्रहणीदोषाञ्जयेत्सर्वान्हिताशनः ॥
तद्वद्द्राक्षेक्षुखर्जूरस्वरसानासवान्पिबेत् ॥ ५२ ॥
हिंगुतिक्तावचामाद्रीपाठेन्द्रयवगोक्षुरम् ॥
पञ्चकोलं च कर्षांशं पलांशं पटुपञ्चकम् ॥ ५३ ॥
घृततैलद्विकुडवे दध्नः प्रस्थद्वये च तत् ॥
आपोथ्य क्वाथयेदग्नौ मृदावनुगते रसे ॥ ५४ ॥
अन्तर्धूमं ततो दग्ध्वा चूर्णीकृत्य घृताप्लुतम् ॥
पिबेत्पाणितलं तस्मिञ्जीर्णे स्यान्मधुराशनः ॥ ५५ ॥
वातश्लेष्मामयान्सर्वान्हन्त्याद्विषगरांश्च सः ॥
भूनिम्बं रोहिणीं तिक्तां पटोलं निम्बपर्पटम् ॥ ५६ ॥
दग्ध्वा माहिषमूत्रेण पिबेदग्निविवर्द्धनम् ॥
द्वे हरिद्रे वचा कुष्ठं चित्रकः कटुरोहिणी ॥ ५७ ॥
मुस्ता च छागमूत्रेण सिद्धः क्षारोऽग्निवर्द्धनः ॥
चतुष्पलं सुधाकाण्डात्त्रिपलं लवणत्रयात् ॥ ५८ ॥
वार्ताककुडवं चार्कादष्टौ द्वे चित्रकात्पले ॥
दग्ध्वा रसेन वार्ताकाद्गुटिका भोजनोत्तराः ॥ ५९ ॥
भुक्तमन्नं पचन्त्याशु कासश्वासार्शसां हिताः ॥
विषूचिकाप्रतिश्यायहृद्रोगशमनाश्च ताः ॥ ६० ॥
मातुलुङ्गशठी रास्ना कटुत्रयहरीतकी ॥
स्वर्जिकायावशूकाख्यौ क्षारौ पञ्च पटूनि च ॥ ६१ ॥

सुखाम्बुपीतं तच्चूर्णं वलवर्णाग्निवर्द्धनम् ॥
श्लैष्मिके ग्रहणीदोष सवाते तैर्घृत पचेत् ॥ ६२ ॥
धान्वन्तर षट्पलं च भल्लातकघृताभयम् ॥
विड कालोपलवणस्वर्जिकायावशूकजान् ॥ ६३ ॥
ससला कण्टकारी च चित्रक चैकतो दहेत् ॥
सप्तकृत्व. शृतस्यास्य क्षारस्याढ्कके पचेत् ॥ ६४ ॥
आढक सर्पिष. पेय तदग्निवलवृद्धये ॥
निचये पञ्चकर्माणि युञ्ज्याच्चैतद्यथावलम् ॥ ६५ ॥
प्रसेके श्लैष्मिकेऽल्पग्नेर्दीपन रूक्षतिक्तकम् ॥
योज्यकृशस्य व्यत्यासात्स्निग्धरूक्ष कफोदये ॥ ६६ ॥
क्षीणक्षामशरीरस्य दीपन स्नेहसयुतम् ॥
दीपन वहुपित्तस्य तिक्त मधुरकैर्युतम् ॥ ६७ ॥
स्नेहोऽम्ललवणैर्युक्तो वहुवातस्य शस्यते ॥
स्नेहमेव पर विद्याद्दुर्वलानलदीपनम् ॥ ६८ ॥
नाल स्नेहसमिद्धस्य शमायान्न सुगुर्वपि ॥
योऽल्पाग्नित्वात्कफे क्षीणेवर्च पक्कमपि श्लथम् ॥ ६९ ॥
मुञ्चेच्चद्यौपधयुत स पिवेदल्पशो घृतम् ॥
तेन स्वमार्गमानीत. स्वकर्म्मणि नियोजितः ॥ ७० ॥
समानो दीपयत्यग्निमग्ने. सन्धुक्षको हि स ॥
पुरीष यश्च कृच्छ्रेण कठिनत्वाद्विमुञ्चति ॥ ७१ ॥
स घृत लवणैर्युक्त नरोऽनावग्रहं पिवेत् ॥
रौक्ष्यान्मन्देऽनले सर्पिस्तैल वा दीपनै पिवेत् ॥ ७२ ॥

क्षारचूर्णासवारिष्टान्मन्दे स्नेहातिपानतः ॥
उदावर्त्तात्प्रयोक्तव्या निरूहस्नेहबस्तयः ॥ ७३ ॥
दोषाऽतिवृद्धयाऽमन्देऽग्नौ संशुद्धोऽन्नविधिं चरेत् ॥
व्याधिमुक्तस्य मन्देऽग्नौ सर्पिरेव तु दीपनम् ॥ ७४ ॥
अध्वोपवासक्षामत्वैर्यवाग्वा पाययेद्धृतम् ॥
अन्नावपीडितं बल्यं दीपनं बृंहणं च तत् ॥ ७५ ॥
दीर्घकालप्रसङ्गात्तु क्षामक्षीणकृशान्नरान् ॥
प्रसहानां रसैःसाम्लैर्भोजयेत्पिशिताशिनाम् ॥ ७६ ॥
लघूष्णकटुशोधित्वाद्दीपयन्त्याशु तेऽनलम् ॥
मांसोपचितमांसत्वात्परं च बलवर्द्धनम् ॥ ७७ ॥
स्नेहासवसुरारिष्टचूर्णक्वाथहिताशनैः॥
सम्यक्प्रयुक्तैर्देहस्य बलमग्नेश्च वर्द्धते ॥ ७८ ॥
दीप्तो यथैव स्थाणुश्च बाह्योऽग्निः सारदारुभिः ॥
सस्नेहैर्जायते तद्वदाहारैः कोष्ठिकोऽनलः ॥ ७९ ॥
नाभोजनेन कायाग्निर्दीप्यते नातिभोजनात् ॥
यथा निरिन्धनो वह्निरल्पो वाऽतीन्धनान्वितः ॥ ८० ॥
यदा क्षीणे कफे पित्तं स्वस्थाने पवनानुगम् ॥
प्रवृद्धं वर्द्धयत्यग्निंतदाऽसौ सानिलाऽनलः ॥ ८१ ॥
पक्त्वान्नमाशु धातूंश्च सर्वानोजश्चसंक्षिपन् ॥
मारयेत्स्याशनात्स्वस्थो भुक्ते जीर्णे तु ताम्यति ॥ ८२ ॥
तृट्कासदाहमूर्च्छाद्याव्याधयोऽत्यग्निसम्भवाः ॥
तमत्यग्निं गुरुस्निग्धमन्दसान्द्रहिमस्थिरैः ॥ ८३ ॥

अन्नपानैर्नयेच्छान्ति दीप्तमग्निमिवाम्बुभिः ॥
मुहुर्मुहुरजीर्णेऽपि भोज्यान्यस्योपहारयेत् ॥ ८४ ॥
निरिन्धनोऽन्तर लब्ध्वा यथैन न विपादयेत् ॥
कृशरा पायस स्निग्धं पैष्टिकं गुडवैकृतम् ॥ ८५ ॥
अश्नीयादौदकानूपपिशितानि भृतानि च ॥
मत्स्यान्विशेषत. श्लक्ष्णान्स्थिरतोयचराश्रये ॥ ८६ ॥
आविक सुभृत मासमद्यादत्यग्निवारणम् ॥
पय. सहमधूच्छिष्ट घृत वा तृपित पिवेत् ॥ ८७ ॥
गोधूमचूर्णपयसावहुसर्पि.परिप्लुतम् ॥
आनूपरसयुक्तान्वा स्नेहास्तैलविवर्जितान् ॥ ८८ ॥
श्यामात्रिवृद्विपक वा पयो दद्याद्विरेचनम् ॥
असकृत्पित्तहरण पायस प्रतिभोजनम् ॥ ८९ ॥
यत्किञ्चिद्गुरुमेध्य च श्लेष्मकारि च भोजनम् ॥
सर्व तदत्यग्निहित्त भुक्त्वा च स्वपन दिना ॥ ९० ॥
आहारमग्नि पचति दोपानाहारवर्जित. ॥
धातून्क्षीणेषु दोपेपु जीवित धातुसक्षये ॥ ९१ ॥
एतत्प्रकृत्यैव विरुद्धमन्न सयोगसंस्कारवशेन चेदम् ॥
इत्याद्यविज्ञाय यथेष्टचेष्टाश्चरन्ति यत्साग्निवलस्य शक्ति' ९२
तस्मादग्नि पालयेत्सर्वयत्नैस्तस्मिन्नष्टे-याति ना नाशमेव ॥
दोषैर्ग्रस्ते ग्रस्यते रोगसघैर्युक्ते तु स्यान्नीरुजो दीर्घजीवी॥९३॥

इत्यष्टाङ्गहृदयसहिताया चिकित्सास्थाने दशमोऽध्याय ॥ १० ॥

# एकादशोऽध्यायः ।



अथातो मूत्राघातचिकित्सितं व्याख्यास्यामः ।

कृच्छ्रे वातघ्नतैलाक्तमधोनाभेः समीरजे ॥

सुस्निग्धैः स्वेदयेदंगं पिण्डसेकावगाहनैः ॥ १ ॥

दशमूलबलैरण्डयवाभीरुपुनर्नवैः ॥

कुलत्थकोलपत्तूरवृश्चीवोपलभेदकैः ॥ २ ॥

तैलसर्पिर्वराहर्क्षवसाःक्वथितकल्कितैः ॥

सपञ्चलवणाः सिद्धाः पीताः शूलहराः परम् ॥ ३ ॥

द्रव्याण्येतानि पानान्ने तथा पिण्डोपनाहने ॥

सह तैलफलैर्युञ्ज्यात्साम्लानि स्नेहवन्ति च ॥ ४ ॥

सौवर्चलाढ्यां मदिरां पिबेन्मूत्ररुजापहाम् ॥

पैत्ते युञ्जीत शिशिरं सेकलेपावगाहनम् ॥ ५ ॥

पिबेद्वरीं गोक्षुरकं विदारीं सकसेरुकाम् ॥

तृणाख्यं पञ्चमूलञ्च पाक्यं समधुशर्करम् ॥ ६ ॥

वृषकं त्रपुसैर्वारुलट्वाबीजानि कुंकुमम् ॥

द्राक्षाम्भोभिः पिबेत्सर्वान्मूत्राघातानपोहति ॥ ७ ॥

एर्वारुबीजयष्ट्याह्वदार्वीर्वातण्डुलाम्बुना ॥

तोयेन कल्कं द्राक्षायाः पिबेत्पर्य्युषितेन वा ॥ ८ ॥

कफजे वमनं स्वेदं तीक्ष्णोष्णकटुभोजनम् ॥

यवानां विकृतीः क्षारं कालशेयञ्च शीलयेत् ॥ ९ ॥

पिबेन्मद्येन सूक्ष्मैला धात्रीफलरसेन वा ॥
सारसास्थिश्वदंष्ट्रैलाव्योषवा मधुमूत्रवत् ॥ १० ॥
स्वरसं कण्टकार्य्या वा पाययेन्माक्षिकान्वितम् ॥
शितिवारकबीज वा तक्रेण श्लक्ष्णचूर्णितम् ॥ ११ ॥
धवसप्ताह्वकुटज गुडूची चतुरङ्गुलम् ॥
कुटकैलाकरञ्ज च पाक्य समधुसाधितम् ॥ १२ ॥
तैर्वा पेया प्रवाल वा चूर्णित तण्डुलाम्बुना॥
सतैलं पाटलाक्षार सप्तकृत्वोऽथवा श्रृतम् ॥ १३ ॥
पाटलीयावशूकाभ्या पारिभद्रन्तिलादपि ॥
क्षारोदकेन मदिरा त्वगेलोषकसयुताम् ॥ १४ ॥
पिबेद्गुडोपदशान्वा लिह्यादेतान्पृथक्पृथक् ॥
सन्निपातात्मके सर्व यथावस्थमिद हितम् ॥ १५ ॥
अश्मन्यथ चिरोत्थाने वातबस्त्यादिकेषु च ॥
अश्मरी दारुणो व्याधिरन्तकप्रातिमो मत ॥ १६ ॥
तरुणो भेषजै. साध्य. प्रवृद्धश्छेदमर्हति ॥
तस्य पूर्वेषु रूपेषु स्नेहादिक्रम इष्यते ॥ १७ ॥
पाषाणभेदो वसुको वशिरोऽश्मन्तको वरी ॥
कपोतवङ्कातिबलाभल्लुकोशीरकन्तकम् ॥ १८ ॥
वृक्षादनी शाकफल व्याघ्रीगुण्ठत्रिकण्टकम् ॥
यवा. कुलत्था कोलानि वरुण. कतकात्फलम् ॥ १९ ॥
उषकादिप्रतीवापमेषा क्वाथे श्रृत घृतम् ॥
भिनत्ति वातसम्भूता तत्पीत शीघ्रमश्मरीम् ॥ २० ॥

गन्धर्वहस्तबृहतीव्याघ्रीगोक्षुरकेक्षुरात् ॥
मूलकल्कं पिबेद्दध्ना मधुरेणाश्मभेदनम् ॥ २१ ॥
कुशः काशः शरो गुण्ठ इत्कटो मोरटोऽश्मभित् ॥
दर्भो विदारी वाराही शाली मूलं त्रिकण्टका ॥ २२ ॥
भल्लुकः पाटली पाठा पत्तूरः सकुरण्टकः ॥
पुनर्नवा शिरीषश्च तेषां क्वाथे पचेद्घृतम् ॥ २३ ॥
पिष्टेन त्रपुसादीनां बीजेनेन्दीवरेण वा ॥
मधुकेन शिलाजेन तत्पित्ताश्मरिभेदनम् ॥ २४ ॥
वरुणादिः समीरघ्नो गुणावेलाहरेणुका ॥
गुग्गुलुर्मरिचं कुष्ठं चित्रकः ससुराह्वयः ॥ २५ ॥
तैः कल्कितैः कृतावापमूषकादिगणेन च ॥
भिनत्ति कफजामाशु साधितं घृतमश्मरीम् ॥ २६ ॥
क्षारक्षीरयवाग्वादिद्रव्यैः स्वैः स्वैश्च कल्पयेत् ॥
पिचुकङ्कोल्लकतकशाकेन्दीवरजैः फलैः॥ २७ ॥
पीतमुष्णाम्बु सगुडं शर्करापातनं परम् ॥
क्रौञ्चोष्ट्ररासभास्थीनि श्वदंष्ट्रा तालपत्रिका ॥ २८ ॥
अजमोदाकदम्बस्य मूलं बिल्वस्यचौषधम् ॥
पीतानि शर्करां भिद्युः सुरयोष्णोदकेन वा ॥ २९ ॥
नृत्यकुण्डलबीजानां चूर्णं माक्षिकसंयुतम् ॥
आविक्षीरेण सप्ताहं पीतमश्मरिपातनम् ॥ ३० ॥
क्वाथश्च शिग्रुमूलोत्थः कटूष्णोऽश्मरिपातनः ॥
तिलापामार्गकदलीपलाशयवसम्भवः॥ ३१ ॥

क्षार. पेयोऽविमूत्रेण शर्करास्वश्मरीषु च ॥
कपोतवङ्कामूलं वा पिबेदेक सुरादिभि ॥ ३२ ॥
तत्सिद्ध वा पिबेत्क्षीरं वेदनाभिरुपद्रुत ॥
हरीतक्यस्थिसिद्ध वा साधित वा पुनर्नवे ॥ ३३ ॥
क्षीरान्नभुग्बर्हिशिखामूल वा तण्डुलाम्बुना ॥
मूत्राघातेषु विभजेदत शेषेष्वपि क्रियाम् ॥ ३४ ॥
बृहत्यादिगणे सिद्ध द्विगुणीकृतगोक्षुरे ॥
तोय पयो वा सर्पिर्वा सर्वमूत्रविकारजित् ॥ ३५ ॥
देवदारु घनं मूर्वा यष्टी मधु हरीतकीम् ॥
मूत्राघातेषु सर्वेषु सुराक्षीरजलै पिबेत् ॥ ३६ ॥
रस वा धन्वयासस्य कषाय ककुभस्य वा ॥
सुखाम्भसा वा त्रिफला पिष्टा सैन्धवसंयुताम् ॥ ३७ ॥
व्याघ्रीगोक्षुरकक्काथे यवागू वा सफाणिताम् ॥
क्काथे वीरतरादेर्वा ताम्रचूडरसेऽपि वा ॥ ३८ ॥
अद्याद्वीरतराद्येन भावित वा शिलाजतु ॥
मद्य वा निगद पीत्वा रथेनाश्वेन वा व्रजन् ॥ ३९ ॥
शीघ्रवेगेन सक्षोभात्तथास्यच्यवतेऽश्मरी ॥
सर्वथा चोपयोक्तव्यो वर्गो वीरतरादिक ॥ ४० ॥
रेकार्थं तैल्वक सर्पिर्बस्तिकर्म्म च शीलयेत् ॥
विशेषादुत्तरान्बस्तीञ्छुक्राश्मर्याञ्चशोधिते ॥ ४१ ॥
तैर्मूत्रमार्गे बलवाञ्छुक्राशयविशुद्धये ॥
पुमान्सुतृप्तो वृष्याणा मासाना कुक्कुटस्य च ॥ ४२ ॥

कामं सकामाः सेवेत प्रमदा मददायिनीः ॥
सिद्धैरुपक्रमैरेभिर्न चेच्छान्तिस्तदा भिषक् ॥ ४३ ॥
इति राजानमापृच्छ्य शस्त्रं साध्ववचारयेत् ॥
अक्रियायां ध्रुवो मृत्युः क्रियायां संशयो भवेत् ॥ ४४ ॥
निश्चितस्यापि वैद्यस्य बहुशः सिद्धकर्म्मणः ॥
अथातुरमुपस्निग्धं शुद्धमीषच्च कर्शितम् ॥ ४५ ॥
अभ्यक्तस्विन्नवपुषमभुक्तं कृतमङ्गलम् ॥
आजानुफलकस्थस्य नरस्याङ्के व्यपाश्रितम् ॥ ४६ ॥
पूर्वेण कायेनोत्तानं निषण्णं वस्त्रचुम्भले ॥
ततोऽस्याकुञ्चिते जानुकूर्परे वाससा दृढम् ॥ ४७ ॥
सहाश्रयमनुष्येण बद्धस्याश्वासितस्य च ॥
नाभेः समन्तादभ्यज्यादधस्तस्याश्च वामतः ॥ ४८ ॥
मृदित्वा मुष्टिना कामं यावदश्मर्य्यधोगता ॥
तैलाक्ते वर्द्धितनखे तर्जनीमध्यमे ततः ॥ ४९ ॥
अदक्षिणे गुदेऽगुल्यौ प्रणिधायानुसेवनीम् ॥
आसाद्य वलयं नाभ्यामश्मरीं गुदमेढ्रयोः ॥ ५० ॥
कृत्वान्तरे तथा वस्तिं निर्वलीकामनायतम् ॥
उत्पीडयेदंगुलिभ्यां यावद्ग्रन्थिरिवोन्नतम् ॥ ५१ ॥
शल्यं स्यात्सेवनीं मुक्त्वा यवमात्रेण पाटयेत् ॥
अश्ममानेन न यथा भिद्यते सा तथा हरेत् ॥ ५२ ॥
समग्रं सर्पवक्त्रेण स्त्रीणां बस्तिस्तु पार्श्वगः ॥
गर्भाशयाश्रयस्तासां शस्त्रमुत्सङ्गवत्ततः ॥ ५३ ॥

न्यसेदतोऽन्यथा ह्यासा मूत्रस्रावी व्रणो भवेत् ॥
मूत्रप्रसेकक्षरणान्नरस्याप्यपि चैकधा ॥ ५४ ॥
वस्तिभेदोऽश्मरीहेतू सिद्धिं याति न तु द्विधा ॥
विशल्यमुष्णपानीयद्रोण्यातमवगाहयेत्॥ ५५ ॥
तथा न पूर्य्यतेऽस्त्रेण वस्तिं पूर्णे तु पीडयेत् ॥
मेद्रूत क्षीरिवृक्षाम्बु मूत्र संशोधयेत्तत ॥ ५६ ॥
कुर्य्याद्गुडस्य सौहित्य मध्वाज्याक्तव्रण. पिबेत् ॥
द्वौ कालौ सघृता कोष्णा यवागू मूत्रशोधनै ॥५७ ॥
त्र्यह दशाह पयसा गुडाढ्येनाल्पमोदनम् ॥
भुञ्जीतोर्ध्व फलाम्लैश्चरसैर्जाङ्गलचारिणाम् ॥ ५८ ॥
क्षीरिवृक्षकषायेण व्रण प्रक्षाल्य लेपयेत् ॥
प्रपौण्डरीकमञ्जिष्ठा यष्ट्याह्वनयनौषधै. ॥ ५९ ॥
व्रणाभ्यङ्ग पचेत्तैलमेभिरेव निशान्वितै ॥
दशाह स्वेदयेच्चैन स्वमार्गं सप्तरात्रत ॥ ६० ॥
मूत्रे त्वगच्छति दहेदश्मरीव्रणमग्निना ॥
स्वमार्गप्रतिपत्तौ तु स्वादुप्रायैरुपाचरेत् ॥ ६१ ॥
त वस्तिभिर्न चारोहेद्वर्षं रूढव्रणोऽपि स. ॥
नगनागाश्ववृक्षस्त्रीरथान्नाशु प्लवेत स ॥ ६२ ॥
मूत्रशुक्रवहौ वस्तिवृषणौ सेवनी गुदम् ॥
मूत्रप्रसेक योनि च शस्त्रेणाष्टौ विवर्जयेत् ॥ ६३ ॥

इत्यष्टाङ्गहृदयसहितायां चिकित्सास्थाने एकादशोऽध्याय ॥ ११ ॥

# द्वादशोऽध्यायः ।



अथातःप्रमेहचिकित्सितं व्याख्यास्यामः ।

मेहिनो वलिनः कुर्य्यादादौ वमनरेचने ॥

स्निग्धस्य सर्षपारिष्टनिकुम्भाक्षकरंजकैः ॥ १ ॥

तैलैस्त्रिकण्टकाद्येन यथास्वंसाधितेन वा ॥

स्नेहेन मुस्तदेवाह्वनागरप्रतिवापवत् ॥ २ ॥

सुरसादिकषायेण दद्यादास्थापनं ततः ॥

न्यग्रोधादेस्तु पित्तार्त्तं रसैः शुद्धं च तर्पयेत् ॥ ३ ॥

मूत्रग्रहरुजागुल्मक्षयाद्यास्त्वपतर्पणात् ॥

ततोऽनुवन्धरक्षार्थं शमनानि प्रयोजयेत् ॥ ४ ॥

असंशोध्यस्य तान्येव सर्वमेहेषु पाययेत् ॥

धात्रीरसप्लुतां प्राह्ने हरिद्रां माक्षिकान्विताम् ॥ ५ ॥

दार्वीसुराह्वात्रिफला मुस्ता वा कथिता जले ॥

चित्रकत्रिफलादार्वी कलिङ्गान्वा समाक्षिकान् ॥ ६ ॥

मधुयुक्तं गुडूच्या वा रसमामलकस्य वा ॥ ७ ॥

रोध्राभयातोयदकट्फलाना

पाठाविडङ्गार्जुनधान्यकानाम् ॥

गायत्रिदार्वीकृमिहृद्वचानां

कफे त्रयः क्षौद्रयुताः कषायाः ॥ ८ ॥

उशीररोध्रार्जुनचन्दनानां
पटोलनिम्बामलकामृतानाम् ॥
रोध्राम्बुकालीयकधातकीनां
पित्ते त्रयः क्षौद्रयुताः कषायाः ॥ ९ ॥
यवास्त्वसेभि पानान्न यवगोधूमभावनाः ॥
वातोल्वणेषु स्नेहाश्च प्रमेहेषु प्रकल्पयेत् ॥ १० ॥
अपूपसक्तुवाट्यादिर्यवानां विकृतिर्हिता ॥
गवाश्वखरगुदमुक्तानामथवा वेणुजन्मनाम् ॥ ११ ॥
तृणधान्यानि मुद्गाद्याः शालिजीर्णः सषष्टिकः ॥
श्रीकुक्कुटोऽम्लः खलकस्तिलसर्षपकिट्टजः ॥ १२ ॥
कपित्थं तिन्दुकं जम्बुस्तत्कृता रागखाण्डवाः ॥
तिक्तं शाकं मधु श्रेष्ठा भक्ष्याः शुष्का ससक्तवः ॥ १३ ॥
धन्वमांसानिशूल्यानि परिशुष्काण्ययस्कृति ॥
मध्वरिष्टासवाजीर्णाः सीधुः पक्करसोद्भवः ॥ १४ ॥
तथासनादिसाराम्बु दर्भाम्भो माक्षिकोदकम् ॥
वासितेषु वराक्वाथेशर्वरीं शोषितेष्वहः ॥ १५ ॥
यवेषु सुकृतान्सक्तून्सक्षौद्रान्सीधुना पिबेत् ॥
शालसप्ताह्वकम्पिल्लवृक्षकाक्षकपित्थजम् ॥ १६ ॥
रोहीतकं च कुसुमं मधुनाऽद्यात्सुचूर्णितम् ॥
कफपित्तप्रमेहेषु पिबेद्धात्रीरसेन वा ॥ १७ ॥
त्रिकण्टकनिशारोध्रसोमवल्कवचार्जुनैः ॥
पद्मकाश्मन्तकारिष्टचन्दनागुरुदीप्यकैः ॥ १८ ॥

पटोलमुस्तमञ्जिष्ठाब्राह्मीभल्लातकैः पचेत् ॥
तैलं वातकफे पित्ते घृतं मिश्रेषु मिश्रकम् ॥ १९ ॥
दशमूलं शठीं दन्तीं सुराह्वं द्विपुनर्नवम् ॥
मूलं स्नुगर्कयोः पथ्यां भूकदम्बमरुष्करम् ॥ २० ॥
करञ्जवरुणान्मूलं पिप्पल्याः पौष्करं च यत् ॥
पृथग्दशपलं प्रस्थान्यवकोलकुलत्थतः ॥ २१ ॥
त्रींश्चाष्टगुणिते तोये विपचेत्पादवर्तिना ॥
तेन द्विपिप्पलीचव्यवचानिचुलरोहिषैः ॥ २२ ॥
त्रिवृद्विडङ्गकम्पिल्लभार्ङ्गीबिल्वैश्च साधयेत् ॥
प्रस्थं घृताज्जयेत्सर्वांस्तन्मेहान्पिटिका विषम् ॥ २३ ॥
पाण्डुविद्रधिगुल्मार्शःशोफशोषगरोदरम् ॥
श्वासं कासं वमिं वृद्धिं प्लीहानं वातशोणितम् ॥ २४ ॥
कुष्ठोन्मादावपस्मारं धान्वन्तरमिदं घृतम् ॥
रोध्रमूर्वाशठीवेल्लभार्ङ्गीनतनखप्लवान् ॥ २५ ॥
कलिङ्गकुष्ठक्रमुकप्रियङ्ग्वातिविषाग्निकान् ॥
द्वे विशाले चतुर्जातं भूनिम्बकटुरोहिणीम् ॥ २६ ॥
यवानीं पौष्करं पाठां ग्रन्थिं चव्यं फलत्रयम् ॥
कर्षांशमम्बुकलशे पादशेषे स्रुते हिमे ॥ २७ ॥
द्वौ प्रस्थौ माक्षिकात्क्षिप्त्वा रक्षेत्पक्षमुपेक्षया ॥
रोध्रासवोऽयं मेहार्शःश्वित्रकुष्ठारुचिक्रिमीन् ॥ २८ ॥
पाण्डुत्वग्ग्रहणीदोषं स्थूलतां च नियच्छति ॥
साधयेदसनादीनां पलानां विंशतिं पृथक् ॥ २९ ॥

द्विवहेऽपा क्षिपेत्तत्र पादस्थे द्वे शते गुडात् ॥
क्षौद्राढकार्द्धं पलिकं वत्सकादि च कल्कितम् ॥ ३० ॥
तत्क्षौद्रपिप्पलीचूर्णं प्रदिग्धे घृतभाजने ॥
स्थितं दृढे जतुसृते यवराशौ निधापयेत् ॥ ३१ ॥
खदिराङ्गारतप्तानि बहुशोऽत्र निमज्जयेत् ॥
तनूनि तीक्ष्णलोहस्य पत्राण्यालोहसंक्षयात् ॥ ३२ ॥
अयस्कृतिः स्थिता पीता पूर्वस्मादधिकागुणैः ॥
रूक्षमुद्वर्त्तनं गाढं व्यायामो निशि जागरः ॥ ३३ ॥
यच्चान्यच्छ्लेष्ममेदोघ्नं बहिरन्तश्च तद्धितम् ॥
सुभाविता सारजलैस्तुलां पीत्वा शिलोद्भवात् ॥ ३४ ॥
साराम्बुनैव भुञ्जानः शालिजाङ्गलजै रसैः ॥
सर्वानभिभवेन्मेहान्सुबहूपद्रवानपि ॥ ३५ ॥
गण्डमालार्बुदग्रन्थिस्थौल्यकुष्ठभगन्दरान् ॥
कृमिश्लीपदशोफांश्च परं चैतद्रसायनम् ॥ ३६ ॥
अधनश्छत्रपादत्ररहितो मुनिवर्तनः ॥
योजनानां शतं यायात्खनेद्वा सलिलाशयान् ॥ ३७ ॥
गोशकृन्मूत्रवृत्तिर्वा गोभिरेव सह भ्रमेत् ॥
बृंहयेदौषधाहारैरमेदोमूत्रलैः कृशम् ॥ ३८ ॥
शराविकाद्याः पिटिकाः शोफवत्समुपाचरेत् ॥
अपक्वा व्रणवत्पक्वास्तासां प्रागूप एव च ॥ ३९ ॥
क्षीरिवृक्षाम्बुपानाय बस्तमूत्रं च शस्यते ॥
तीक्ष्णं च शोधनं प्रायो दुर्विरेच्या हि मेहिनः ॥ ४० ॥

तैलमेलादिना कुर्याद्व्रणेन व्रणरोपणम् ॥
उद्वर्त्तने कषायं तु वर्गेणारग्वधादिना ॥ ४१ ॥
परिषेकोऽसनाद्येन पानान्ने वत्सकादिना ॥
पाठाचित्रकशार्ङ्गष्टा सारिवा कण्टकारिका ॥ ४२ ॥
सप्ताह्वं कौटजं मूलं सोमवल्कं नृपद्रुमम् ॥
संचूर्ण्य मधुना लिह्यात्तद्वच्चूर्णं नवायसम् ॥ ४३ ॥
मधुमेहित्वमापन्नो भिषग्भिः परिवर्जितः ॥
शिलाजतुतुलामद्यात्प्रमेहार्त्तः पुनर्नवः ॥ ४४ ॥

इत्यष्टाङ्गहृदयसंहितायां चिकित्सास्थाने द्वादशोऽध्यायः ॥ १२ ॥

## त्रयोदशोऽध्यायः ।

अथातो विद्रधिवृद्धिचिकित्सितं व्याख्यास्यामः ।
विद्रधिं सर्वमेवामं शोफवत्समुपाचरेत् ॥
प्रततं च हरेद्रक्तं पक्वे तु व्रणवत्क्रिया ॥ १ ॥
पञ्चमूलजलैर्धौतं वातिकं लवणोत्तरैः ॥
भद्रादिवर्गयष्ट्याह्वतिलैरालेपयेद्व्रणम् ॥ २ ॥
वैरेचनिकयुक्तेन त्रैवृतेन विशोध्य च ॥
विदारीवर्गसिद्धेन त्रैवृतेनैव रोपयेत् ॥ ३ ॥
क्षालितं क्षीरितोयेन लिम्पेद्यष्टयमृतातिलैः ॥
पैत्तं घृतेन सिद्धेन मञ्जिष्ठोशीरपद्मकैः ॥ ४ ॥

पयस्याद्विनिशाश्रेष्ठायष्टीदुग्धैश्च रोपयेत् ॥
न्यग्रोधादिप्रवालत्वक्फलैर्वा कफज पुन ॥ ५ ॥
आरग्वधाम्बुना धौत सक्तुकुम्भनिशातिलैः ॥
लिम्पेत्कुलत्थिकादन्तीत्रिवृच्छ्यामाग्नितिल्वकै. ॥ ६ ॥
ससैन्धवै सगोमूत्रैस्तैल कुर्वीतरोपणम् ॥
रक्तागन्तूद्भवे कार्य्या पित्तविद्रधिवत्क्रिया ॥ ७ ॥
वरुणादिगणक्वाथमपक्केऽभ्यन्तरे स्थिते ॥
ऊपकादिप्रतीवाप पूर्वाह्णे विद्रधौ पिबेत् ॥ ८ ॥
घृत विरेचनद्रव्यै. सिद्ध ताभ्या च पाययेत् ॥
निरूह स्नेहवस्ति च ताभ्यामेव प्रकल्पयेत् ॥ ९ ॥
पानभोजनलेपेपु मधुशिग्रु प्रयोजित ॥
दत्तावापो यथादोपमपक्क हन्ति विद्रधिम् ॥ १० ॥
त्रायन्ती त्रिफलानिम्बकटुकामधुक समम् ॥
त्रिवृत्पटोलकाभ्या च चत्वारोऽशा.पृथक्पृथक् ॥ ११ ॥
मसूरानिस्तुपादष्टौ तत्क्वाथ सघृतो जयेत् ॥
विद्रधौ गुल्मवीसर्पदाहमोहमदज्वरान् ॥ १२ ॥
तृण्मूर्च्छाच्छर्दिहृद्रोगपित्तासृक्कुष्ठकामला ॥
कुडव त्रायमाणाया. साध्यमष्टगुणेऽम्भसि ॥ १३ ॥
कुडवं तद्रसाद्धात्रीस्वरसात्क्षीरतो घृतात् ॥
कर्षांश कल्कित तिक्तात्रायन्तीधन्वयासकम् ॥ १४ ॥
मुस्तातामलकी वीरा जीवन्ती चन्दनोत्पलम् ॥
पचेदेकत्र सयोज्य तद्घृत पूर्ववद्गुणै· ॥ १५ ॥

द्राक्षा मधूकं खर्जूरं विदारी सशतावरी ॥
परूषकाणि त्रिफला तत्क्वाथे पाचयेद्घृतम् ॥ १६ ॥
क्षीरेक्षुधात्रीनिर्य्यासे प्राणदा कल्कसंयुतम् ॥
तच्छीतं शर्कराक्षौद्रपादिकं पूर्ववद्गुणेः ॥ १७ ॥
हरेच्छृङ्गादिभिरसृक्सिरया वा यथान्तिकम् ॥
विद्रधिं पच्यमानं च कोष्ठस्थं वाहिरुन्नतम् ॥ १८ ॥
ज्ञात्वोपनाहयेच्छूले स्थिते तत्रैव पिण्डिते ॥
हत्पार्श्वऽपीडनात्सुप्तौ दाहादिष्वल्पकेषुच ॥ १९ ॥
पक्वः स्याद्विद्रधिं भित्त्वा व्रणवत्तमुपाचरेत् ॥
अन्तर्भागस्य चाप्येतच्चिह्नं पक्वस्य विद्रधेः ॥ २० ॥
पक्वः स्रोतांसि सम्पूर्य्य स यात्यूर्ध्वमधोऽथवा ॥
स्वयं प्रवृत्तं तं दोषमुपेक्षेत हिताशिनः ॥ २१ ॥
दशाहं द्वादशाहं वा रक्षन्भिषगुपद्रवान् ॥
असम्यग्वहति क्लेदे वरणादिसुखाम्भसा ॥ २२ ॥
पाययेन्मधुशिग्रुं वा यवागूं तेन वा कृताम् ॥
यवकोलकुलत्थोत्थयूषैरन्नं च शस्यते ॥ २३ ॥
ऊर्ध्वं दशाहात्त्रायन्तीसर्पिषा तैल्वकेन वा ॥ ॥
शोधयेद्बलतः शुद्धः सक्षौद्रं तिक्तकं पिबेत् ॥ २४ ॥
सर्वशो गुल्मवच्चैनं यथादोषमुपाचरेत् ॥
सर्वावस्थासु सर्वासु गुग्गुलं विद्रधीषु च ॥ २५ ॥
कषायैर्य्यौगिकैर्य्युञ्ज्यात्स्वैः स्वैस्तद्वच्छिलाजतु ॥
पाकं च वारयेद्यत्नात्सिद्धिः पक्वे हि दैविकी ॥ २६ ॥

अपि चाशु विदाहित्वाद्विद्रधिः सोऽभिधीयते ॥
सति चालोचयेन्मेहे प्रमेहाणां चिकित्सितम् ॥ २७ ॥
स्तनजे व्रणवत्सर्वं नत्वेनमुपनाहयेत् ॥
पाटयेत्पालयन्स्तन्य वाहिनीः कृष्णचूचुकौ ॥ २८ ॥
सर्वास्वामाद्यवस्थासु निर्दुहीत च तत्स्तनम् ॥
शोधयेत्त्रिवृतास्निग्धं वृद्धौ स्नेहैश्चलात्मके ॥ २९ ॥
कोशाम्रतिल्वकैरण्डसुकुमारकमिश्रकैः ॥
ततोऽनिलघ्ननिर्यूहकल्कस्नेहैर्निरूहयेत् ॥ ३० ॥
रसेन भोजितं यष्टितैलेनान्वासयेदनु ॥
स्वेदप्रलेपा वातघ्नाः पक्के भित्त्वा व्रणक्रिया ॥ ३१ ॥
पित्तरक्तोद्भवे वृद्धावामपक्वे यथायथम् ॥
शोफव्रणक्रियां कुर्यात्प्रततं च हरेदसृक् ॥ ३२ ॥
गोमूत्रेण पिबेत्कल्कं श्लैष्मिके पीतदारुजम् ॥
विम्लापनादृते चात्र श्लेष्मग्रन्थिक्रमो हितः ॥ ३३ ॥
पक्के च पाटिते तैलमिष्यते व्रणशोधनम् ॥
सुमनोरुष्कराङ्कोल्लसप्तपर्णेषु साधितम् ॥ ३४ ॥
पटोलनिम्बरजनीविडङ्गकुटजेषु च ॥
मेदोजं मूत्रपिष्टेन सुस्विन्नं सुरसादिना ॥ ३५ ॥
शिरोविरेकद्रव्यैर्वावर्जयन्फलसेवनीम् ॥
दारयेद्वृद्धिपत्रेण सम्यङ्मेदसि सूद्धृते ॥ ३६ ॥
व्रणं माक्षीककासीससैन्धवप्रतिसारितम् ॥
सीव्येदभ्यञ्जनं चास्य योज्यं मेदोविशुद्धये ॥ ३७ ॥

मनःशिलैलासुमनोग्रन्थिभल्लातकैः कृतम् ॥
तैलमाव्रणसन्धानात्स्नेहस्वेदौ च शीलयेत् ॥ ३८ ॥
मूत्रजं स्वेदितं स्निग्धैर्वस्त्रपट्टेन वेष्टितम् ॥
विध्येदधस्तात्सीवन्याः स्नावयेच्च यथोदरम् ॥ ३९ ॥
व्रणञ्च स्थगिकाबद्धं रोपयेदन्त्रहेतुके ॥
फलकोशमसम्प्राप्ते चिकित्सा वातवृद्धिवत् ॥ ४० ॥
पचेत्पुनर्नवतुलां तथा दशपलाः पृथक् ॥
दशमूलपयस्याश्व गन्धैरण्डशतावरीः ॥ ४१ ॥
द्विदर्भशरकाशेक्षुमूलपोटगलान्विताः ॥
वहेपामष्टभागस्थे तत्र त्रिंशत्पलं गुडात् ॥ ४२ ॥
प्रस्थमेरण्डतैलस्य द्वौ घृतात्पयसस्तथा ॥
आवपेद्विपलांशंच कृष्णातन्मूलसैन्धवम् ॥ ४३ ॥
यष्टीमधुकमृद्वीकायवानीनागराणि च ॥
तत्सिद्धं सुकुमाराख्यं सुकुमारं रसायनम् ॥ ४४ ॥
वातातपाध्वयानादिपरीहार्य्येष्वयन्त्रणम् ॥
प्रयोज्यं सुकुमाराणामीश्वराणां सुखात्मनाम् ॥ ४५ ॥
नृणां स्त्रीवृन्दभर्तृणामलक्ष्मीकलिनाशनम् ॥
सर्वकालोपयोगेन कान्तिलावण्यपुष्टिदम् ॥ ४६ ॥
वर्ध्मविद्रधिगुल्मार्शोयोनिमेढ्रानिलार्तिषु ॥
शोफोदरखुडप्लीहविड्विबन्धेषु चोत्तमम् ॥ ४७ ॥
यायाद्वर्ध्म न चेच्छांतिं स्नेहरेकानुवासनैः ॥
वस्तिकर्म्म पुरःकृत्वा वङ्क्षणस्थं ततो दहेत् ॥ ४८ ॥

अग्निना मार्गरोधार्थं मरुतोऽर्द्धेन्दुवक्रया ॥
अगुष्ठस्योपरिस्नावपीतं तन्तुसमञ्च यत् ॥ ४९ ॥
उत्क्षिप्य सूच्या तत्तिर्य्यग्दहेच्छित्त्वा यतो गदः ॥
ततोऽन्यपार्श्वेऽन्ये त्वाहुर्दहेद्वानामिकागुले ॥ ५० ॥
गुल्मेन्यैर्वातकफजे प्लीह्नि चायं विधिः स्मृतः ॥
कनिष्ठिकानामिकयोर्विश्वाच्या च यतो गदः ॥ ५१ ॥

इत्यष्टाङ्गहृदयसंहितायां चिकित्सास्थाने त्रयोदशोऽध्यायः ॥ १३ ॥

## चतुर्दशोऽध्यायः।

अथातो गुल्मचिकित्सितं व्याख्यास्यामः ।
गुल्मं बद्धशकृद्वातं वातिकं तीव्रवेदनम् ॥
रूक्षशीतोद्भवं तैलैः साधयेद्वातरोगिकैः ॥ १ ॥
पानान्नान्वासनाभ्यङ्गैः स्निग्धस्य स्वेदमाचरेत् ॥
आनाहवेदनास्तम्भविबन्धेषु विशेषतः ॥ २॥
स्रोतसां मार्दवं कृत्वा जित्वा मारुतमुल्बणम् ॥
भित्त्वा विबन्धं स्निग्धस्य स्वेदो गुल्ममपोहति ॥ ३ ॥
स्नेहपानं हितं गुल्मे विशेषेणोर्ध्वनाभिजे ॥
पक्वाशयगते बस्तिरुभयं जठराश्रये ॥ ४ ॥
दीप्तेऽग्नौ वातिकेगुल्मे विबन्धेऽनिलवर्चसोः ॥
बृंहणान्यन्नपानानि स्निग्धोष्णानि प्रदापयेत् ॥ ५ ॥

पुनःपुनः स्नेहपानं निरूहाः सानुवासनाः ॥
प्रयोज्या वातजे गुल्मे कफपित्तानुरक्षिणः ॥ ६ ॥
बस्तिकर्म्म परं विद्याद्गुल्मघ्नं तद्धि मारुतम् ॥
स्वस्थाने प्रथमं जित्वा सद्यो गुल्ममपोहति ॥ ७ ॥
तस्मादभीक्ष्णशो गुल्मान्निरूहैःसानुवासनैः ॥
प्रयुज्यमानैःशाम्यन्ति वातपित्तकफात्मकाः ॥ ८ ॥
हिङ्गुसौवर्चलव्योषबिडदाडिमदीप्यकैः ॥
पुष्कराजाजिधान्याम्लवेतसक्षारचित्रकैः ॥ ९ ॥
शठीवचाजगन्धैलासुरसैर्दधिसंयुतैः ॥
शूलानाहहरं सर्पिः साधयेद्वातगुल्मिनाम् ॥ १० ॥
हपुषोषणपृथ्वीकापञ्चकोलकदीप्यकैः ॥
साजाजिसैन्धवैर्दध्नादुग्धेन च रसेन च ॥ ११ ॥
दाडिमान्मूलकात्कोलात्पचेत्सर्पिर्निहन्ति तत् ॥
वातगुल्मोदरानाहपार्श्वहृत्कोष्ठवेदनाः ॥ १२ ॥
योन्यर्शोग्रहणीदोषकासश्वासारुचिज्वरान् ॥
दशमूलं बलां कालां सुषवीं द्वौ पुनर्नवौ ॥ १३ ॥
पौष्करैरण्डरास्नाश्वगन्धभार्ङ्ग्यमृताशठीः ॥
पचेद्गन्धपलाशं च द्रोणेऽपां द्विपलोन्मितम् ॥ १४ ॥
यवैः कोलैः कुलत्थैश्च माषैश्च प्रास्थिकैः सह ॥
क्वाथेऽस्मिन्दधिपात्रे च घृतप्रस्थं विपाचयेत् ॥ १५ ॥
स्वरसैर्दाडिमाम्रातमातुलुंगोद्भवैर्युतम् ॥
तथा तुषाम्बुधान्याम्लयुतैःश्लक्ष्णैश्च कल्कितैः ॥ १६ ॥

भार्ङ्गीतुम्बुरुषड्ग्रन्थाग्रन्थिरास्नाग्निः धान्यकैः ॥
यवानकयवान्यम्लवेतसासितजीरकैः ॥ १७ ॥
अजाजीहिङ्गुहपुषाकारवीवृषकोषकैः ॥
निकुम्भकुम्भमूर्वेभापिप्पलीवेल्लदाडिमैः ॥ १८ ॥
श्वदंष्ट्रात्रपुसैर्वारुबीजहिस्राश्मभेदकैः ॥
मिसिद्विक्षारसुरससारिवानीलिनीफलैः ॥ १९ ॥
त्रिकटुत्रिपटूपेतैर्दाधिकं तद्व्यपोहति ॥
रोगानाशुतरान्पूर्वान्कष्टानपि च शीलितम् ॥ २० ॥
अपस्मारगरोन्मादमूत्राघातानिलामयान् ॥
त्र्यूषणत्रिफलाधान्यचविकावेल्लचित्रकैः ॥ २१ ॥
कल्कीकृतैर्घृतं पक्वं सक्षीरं वातगुल्मनुत् ॥
तुलां लशुनकन्दानां पृथक्पञ्चपलांशकम् ॥ २२ ॥
पञ्चमूलं महच्चाम्बुभारार्द्धे तद्विपाचयेत् ॥
पादशेषं तदर्द्धेन दाडिमस्व रसंसुराम् ॥ २३ ॥
धान्याम्लं दधि चादाय पिष्टाश्चार्द्धपलांशकान् ॥
त्र्यूषणत्रिफलाहिङ्गुयवानीचव्यदीप्यकान् ॥ २४ ॥
साम्लवेतससिन्धूत्थदेवदारून्पचेद्घृतात् ॥
तैः प्रस्थं तत्परं सर्ववातगुल्मविकारजित् ॥ २५ ॥
षट्पलं वा पिबेत्सर्पिर्यदुक्तं राजयक्ष्मणि ॥
प्रसन्नया वा क्षीरार्थं सुरया दाडिमेन वा ॥ २६ ॥
घृते मारुतगुल्मघ्नः कार्य्यो दध्नः सरेण वा ॥
वातगुल्मे कफो वृद्धो हत्वाग्निमरुचिं यदि ॥ २७ ॥

हृल्लासं गौरवं तन्द्रां जनयेदुल्लिखेत्तु तम् ।
शूलानाहविबन्धेषु ज्ञात्वा सस्नेहमाशयम् ॥ २८ ॥
निर्यूहचूर्णवटकाः प्रयोज्या घृतभेषजैः ॥
कोलदाडिमघर्म्माम्बुतक्रमद्याम्लकाञ्जिकैः ॥ २९ ॥
मण्डेन वा पिबेत्प्रातश्चूर्णान्यन्नस्य वा पुरः ॥
चूर्णानि मातुलुङ्गस्य भावितान्यसकृद्रसे ॥
कुर्वीत कार्मुकतरान्वटकान्कफवातयोः ॥ ३० ॥
हिङ्गुवचाविजयापशुगन्धादाडिमदीप्यकधान्यकपाठाः ॥
पुष्करमूलशठीहपुषाग्निक्षारयुगाग्निपटुत्रिकटूनि ॥ ३१ ॥

साजाजिचव्यंसहतिन्तिडीकं
सवेतसाम्लं विनिहन्ति चूर्णम् ॥
हृत्पार्श्वबस्तित्रिकयोनिपायु
शूलानिवाय्वासकफोद्भवानि ॥ ३२ ॥
कृच्छ्रान्गुल्मान्वातविण्मूत्रसंगं
कण्ठे बन्धं हृद्ग्रहं पाण्डुरोगम् ॥
अन्नाश्रद्धाप्लीहदुर्नामहिध्मा
वर्ध्माध्मानश्वासकासाग्निसादान् ॥ ३३ ॥

लवणयवानीदीप्यककणनागरमुत्तरोत्तरं वृद्धम् ॥
सर्वसमांशहरीतकिचूर्णं वैश्वानरः साक्षात् ॥ ३४ ॥

त्रिकटुकमजमोदा सैन्धवं जीरके द्वे
समधरणधृतानामष्टमो हिङ्गुभागः ॥
प्रथमकवलभोज्यः सर्पिषा चूर्णकोऽयं
जनयति भृशमग्निं वातगुल्मं निहन्ति ॥ ३५ ॥

हिङ्गुग्राविडशुण्ठ्यजाजिविजयावाट्याभिधानामयै
श्चूर्णं कुम्भनिकुम्भमूलसहितैर्भागोत्तर वर्द्धितैः ॥
पीतः कोष्णजलेन कोष्ठजरुजो गुल्मोदरादीनय
शार्दूलः प्रसभ प्रमथ्य हरति व्याधीन्मृगौघानिव॥३६॥
सिन्धूत्थपथ्याकणदीप्यकानाचूर्णानि तोये पिवता कवोष्णे॥
प्रयाति नाश कफवातजन्मा नाराचनिर्भिन्न इवामयौघः॥३७॥

पूतीकपत्रगजचिर्भटचव्यवह्नि
व्योष च सस्तरचित लवणोपधानम् ॥
दग्ध्वा विचूर्ण्य दधिमस्तुयुत प्रयोज्य
गुल्मोदरश्वयथुपाण्डुगदोद्भवेषु ॥ ३८ ॥

हिङ्गु त्रिगुण सैन्धवमस्मात्त्रिगुण तु तैलमैरण्डम् ॥
तत्त्रिगुणरसोनरस गुल्मोदरवर्ध्मशूलघ्नम् ॥ ३९ ॥
मातुलुङ्गरसो हिङ्गु दाडिम विडसैन्धवम् ॥
सुरामण्डेन पातव्य वातगुल्मरुजापहम् ॥ ४० ॥
शुण्ठ्या कर्षं गुडस्य द्वौ धौतात्कृष्णतिलात्पलम् ॥
खादन्नेकत्र सचूर्ण्य कोष्णक्षीरानुयोजयेत् ॥ ४१ ॥
वातहृद्रोगगुल्मार्शोयोनिशूलशकृद्ग्रहान् ॥
पिबेदेरण्डतैल तु वातगुल्मी प्रसन्नया ॥ ४२ ॥
श्लेष्मण्यनुबले वायौ पित्ते तु पयसा सह ॥
विबृद्धे यदि वा पित्त सन्ताप वातगुल्मिन ॥ ४३ ॥
कुर्य्याद्विरेचनीयोऽसौ सस्नेहैरानुलोमिकैः ॥
तापानुवृत्तावेव च रक्त तस्याऽवसेचयेत् ॥ ४४ ॥

साधयेच्छुद्धशुष्कस्य लशुनस्य चतुःपलम् ॥
क्षीरोदकेऽष्टगुणिते क्षीरशेषं च पाचयेत् ॥ ४५ ॥
वातगुल्ममुदावर्तं गृध्रसीं विषमज्वरम् ॥
हृद्रोगं विद्रधिं शोषं साधयत्याशु तत्पयः ॥ ४६ ॥
तैलं प्रसन्नागोमूत्रमारनालं यवाग्रजः ॥
गुल्मं जठरमानाहं पीतमेकत्र साधयेत् ॥ ४७ ॥
चित्रकग्रन्थिकैरण्डशुण्ठीक्काथः परं हितः ॥
शूलानाहविबन्धेषु सहिङ्गुबिडसैन्धवः ॥ ४८ ॥
पुष्करैरण्डयोर्मूलं यवधन्वयवासकम् ॥
जलेन क्वथितं पीतं कोष्ठदाहरुजापहम् ॥ ४९ ॥
वाट्याह्वैरण्डदर्भाणां मूलं दारु महौषधम् ॥
पीतं निःक्वाथ्य तोयेन कोष्ठपृष्ठांसशूलजित् ॥ ५० ॥
शिलाजं पयसाऽनल्पपञ्चमूलशृतेन वा ॥
वातगुल्मी पिबेद्वाट्यमुदावर्ते तु भोजयेत् ॥ ५१ ॥
स्निग्धं पैप्पलिकैर्यूषैर्मूलकानां रसेन वा ॥
बद्धविण्मारुतोऽश्नीयात्क्षीरेणोष्णेन यावकम् ॥ ५२ ॥
कुल्माषान्वा बहुस्नेहान्भक्षयेल्लवणोत्तरान् ॥
नीलिनीत्रिवृतादन्तीपथ्याकम्पिल्लकैःसह ॥ ५३ ॥
समलायघृतं देयं सबिडक्षारनागरम् ॥
नीलिनीं त्रिफलां रास्नां बलां कटुकरोहिणीम् ॥ ५४ ॥
पचेद्विडङ्गं व्याघ्रीं च पालिकानि जलाढके ॥
रसेऽष्टभागशेषे तु घृतप्रस्थं विपाचयेत् ॥ ५५ ॥

दध्न प्रस्थेन सयोज्य सुधाक्षीरपलेन च ॥
ततो घृतपलं दद्याद्यवागूमण्डमिश्रितम् ॥ ५६ ॥
जीर्णे सम्यग्विरिक्तच भोजयेद्रसभोजनम् ॥
गुल्मकुष्ठोदरव्यङ्गशोफपाण्ड्वामयज्वरान् ॥ ५७ ॥
श्वित्र प्लीहानमुन्माद हन्त्येतन्नीलिनीघृतम् ॥
कुक्कुटाश्च मयूराश्च तित्तिरिक्रौञ्चवर्त्तकाः॥ ५८ ॥
शालयो मदिरा सर्पिर्वातगुल्मचिकित्सितम् ॥
मितमुष्ण द्रव स्निग्ध भोजन वातगुल्मिनाम् ॥ ५९ ॥
समण्डावारुणीपानं तप्त वा धान्यकैर्जलम् ॥
स्निग्धोष्णे नोदिते गुल्मे पैत्तिके स्रसन हितम् ॥ ६० ॥
द्राक्षाभयागुडरसं कम्पिल्लं वा मधुद्रुतम् ॥
कल्पोक्त रक्तपित्तोक्तं गुल्मे रूक्षोष्णजे पुन. ॥ ६१ ॥
पर सशमन सर्पिस्तिक्त वासाघृतं श्रृतम् ॥
तृणाख्यपञ्चकक्काथे जीवनीयगणेन वा ॥ ६२ ॥
श्रृत तेनैव वा क्षीर न्यग्रोधादिगणेन वा ॥
तत्रापि स्रसन युञ्ज्याच्छीघ्रमात्ययिके भिषक् ॥ ६३ ॥
वैरेचनिकसिद्धेन सर्पिषा पयसाऽपि वा ॥
रसेनामलकेक्ष्वूणा घृतप्रस्थं विपाचयेत् ॥ ६४ ॥
पथ्यापाद पिवेत्सर्पिस्तत्सिद्ध पित्तगुल्मनुत् ॥
पिवेद्वा तैल्वक सर्पिर्यच्चोक्त पित्तविद्रधौ ॥ ६५ ॥
द्राक्षा पयस्या मधुक चन्दनं पद्मक मधु ॥
पिवेत्तण्डुलतोयेन पित्तगुल्मोपशान्तये ॥ ६६ ॥

द्विपलं त्रायमाणाया जलद्विप्रस्थसाधितम् ॥
अष्टभागस्थितं पूतं कोष्णं क्षीरसमं पिबेत् ॥ ६७ ॥
पिबेदुपरि तस्योष्णं क्षीरमेव यथाबलम् ॥
तेन निर्हृतदोषस्य गुल्मः शाम्यति पैत्तिकः ॥ ६८ ॥
दाहेऽभ्यंगो घृतैः शीतैः साज्यैर्लेपो हिमौषधैः ॥
स्पर्शः सरोरुहां पत्रैः पात्रैश्च प्रचलज्जलैः ॥ ६९ ॥
विदाहपूर्वरूपेषु शूले वह्नेश्च मार्दवे ॥
बहुशोऽपहरेद्रक्तं पित्तगुल्मे विशेषतः ॥ ७० ॥
छिन्नमूला विदह्यन्ते न गुल्मा यान्ति च क्षयम् ॥
रक्तं हि व्यम्लतां याति तच्च नास्ति नचाऽस्ति रुक् ॥ ७१ ॥
हृतदोषं परिम्लानं जांगलैस्तर्पितं रसैः ॥
समाश्वस्तं सशेषार्तिं सर्पिरभ्यासयेत्पुनः ॥ ७२ ॥
रक्तपित्तातिवृद्धत्वात्क्रियामनुपलभ्य वा ॥
गुल्मे पाकोन्मुखे सर्वा पित्तविद्रधिवत्क्रिया ॥ ७३ ॥
शालिर्गव्याजपयसा पटोलीजाङ्गलं घृतम् ॥
धात्री परूषकं द्राक्षा खर्जूरं दाडिमं सिताम् ॥ ७४ ॥
भोज्यं पानेऽम्बुबलया बृहत्याद्यैश्च साधितम् ॥
श्लेष्मजे वामयेत्पूर्वमवम्यमुपवासयेत् ॥ ७५ ॥
तिक्तोष्णकटु संसर्ग्या वह्निं सन्धुक्षयेत्ततः ॥
हिंग्वादिमिश्च द्विगुणक्षाराहिंग्वम्लवेतसैः ॥ ७६ ॥
निगूढं यदि वोन्नद्धं स्तिमितं कठिनं स्थिरम् ॥
आनाहादियुतं गुल्मं संशोध्य विनयेदनु ॥ ७७ ॥

घृतं सक्षारकटुकं पातव्यं कफगुल्मिना ॥
सव्योषक्षारलवण सहिगुविडदाडिमम् ॥ ७८ ॥
कफगुल्मं जयत्याशु दशमूलशृत घृतम् ॥
भल्लातकाना द्विपल पञ्चमूल पलोन्मितम् ॥ ७९ ॥
अल्प तोयाढके साध्यं पादशेषेण तेन च ॥
तुल्यंघृत तुल्यपयो विपचेदक्ष सम्मितैः ॥ ८० ॥
विडगहिङ्गुसिन्धूत्थयावशूकशठीविडै ॥
सद्वीपिरास्नायष्ट्याह्वपड्ग्रन्थाकणनागरै ॥ ८१ ॥
एतद्भल्लातकघृत कफगुल्महर परम् ॥
प्लीहपाण्ड्वामयश्वासग्रहणीरोगकासनुत् ॥ ८२ ॥
ततोऽस्य गुल्मे देहे च समस्ते स्वेदमाचरेत् ॥
सर्वत्र गुल्मे प्रथम स्नेहस्वेदोपपादिते ॥ ८३ ॥
या क्रिया क्रियते याति सा सिद्धि न विरूक्षिते ॥
स्निग्धस्विन्नशरीरस्य गुल्मे शैथिल्यमागते ॥ ८४ ॥
यथोक्ता घटिका न्यस्येद्गृहीतेऽपनयेच्च ताम् ॥
वस्त्रान्तर तत.कृत्वा छिन्द्याद्गुल्म प्रमाणवित् ॥ ८५ ॥
विमार्गाजपदादर्शैर्यथालाभं प्रपीडयेत् ॥
प्रमृज्याद्गुल्ममेवैकं न त्वन्त्रहृदय स्पृशेत् ॥८६॥
तिलैरण्डातसीवीजसर्षपै परिलिप्य च ॥
श्लेष्मगुल्ममयस्पात्रे. सुखोष्णे स्वेदयेत्तत. ॥ ८७ ॥
एव च विसृत स्थानात्कफगुल्मं विरेचनैः ॥
सस्नेहैर्वस्तिभिश्चैनं शोधयेद्दशमूलकैः ॥ ८८ ॥

पिप्पल्यामलकद्राक्षाश्यामाद्यैः पालिकैः पचेत् ॥
एरण्डतैलहविषोः प्रस्थौ पयसि शङ्गुणे ॥ ८९ ॥
सिद्धोऽयं मिश्रकः स्नेहो गुल्मिनां स्रंसनं हितम् ॥
वृद्धिविद्रधिशूलेषु वातव्याधिषु चामृतम् ॥ ९० ॥
पिवेद्वा नीलिनीसर्पिर्मात्रया द्विपलीकया ॥
तथैव सुकुमाराख्यं घृतान्यौदरिकाणिवा ॥ ९१ ॥
द्रोणेऽम्भसः पचेद्दन्त्याः पलानां पञ्चविंशतिम् ॥
चित्रकस्य तथा पथ्यास्तावतीस्तद्रसे स्नुते ॥ ९२ ॥
द्विप्रस्थे साधयेत्पूते क्षिपेद्दन्तीसमं गुडम् ॥
तैलात्पलानि चत्वारि त्रिवृतायाश्च चूर्णतः ॥ ॥ ९३ ॥
कणाकर्षौ तथा शुण्ठ्याः सिद्धे लेहे तु शीतले ॥
मधुतैलं समं दद्याच्चतुर्जाताच्चतुर्थिकाम् ॥ ९४ ॥
अतो हरीतकीमेकां सावलेहपलामदन् ॥
सुखं विरिच्यते स्निग्धो दोषप्रस्थमनामयः ॥ ९५ ॥
गुल्महृद्रोगदुर्नामशोफानाहगरोदरान् ॥
कुष्ठोत्क्लेशारुचिप्लीहग्रहणीविषमज्वरान् ॥ ९६ ॥
घ्नन्ति दन्तीहरीतक्यःपाण्डुतां च सकामलाम् ॥
सुधाक्षीरद्रवं चूर्णं त्रिवृतायाः सुभावितम् ॥ ९७ ॥
कार्षिकं मधुसर्पिर्भ्यां लीढ्वा साधु विरिच्यते ॥
कुष्ठश्यामात्रिवृद्दन्तीविजयाक्षारगुग्गुलुम् ॥ ९८ ॥
गोमूत्रेण पिवेदेकं तेन गुग्गुलुमेव वा ॥
निरूहान्कल्पसिद्धयुक्तान्योजयेद्गुल्मनाशनान् ॥ ९९ ॥

कृतमूल महावास्तु कठिनं स्तिमितं गुरुम्॥
गूढमासं जयेद्गुल्म क्षारारिष्टाग्निकर्म्मभि ॥ १०० ॥
एकान्तर द्व्यन्तर वा विश्रमय्याथवा त्र्यहम्॥
शरीरदोषवलयोर्वर्द्धनक्षपणोद्यत ॥ १०१ ॥
अर्शोऽश्मरीग्रहण्युक्ता. क्षारा योज्या कफोल्वणे ॥
देवदारुत्रिवृद्दन्तीकटुकापञ्चकोलकम्॥ १०२ ॥
स्वर्जिकायावशूकाख्यौ श्रेष्ठापाठोपकुञ्चिका ॥
कुष्ठ सर्पसुगन्धा च द्व्यक्षाश पटुपञ्चकम्॥ १०३ ॥
पालिक चूर्णित तैलवसादधिघृताप्लुतम्॥
घटस्यान्त. पचेत्पक्वमग्निवर्चे घटे च तम्॥ १०४ ॥
क्षार गृहीत्वा क्षीराज्यतक्रमद्यादिभि पिवेत्॥
गुल्मोदावर्त्तवर्ध्माशोंजठरग्रहणीकृमीन्॥ १०५ ॥
अपस्मारगरोन्मादयोनिशुक्रामयाश्मरी ॥
क्षारोऽगदोऽय शमयेद्विष चाखुभुजङ्गजम्॥ १०६ ॥
श्लेष्माण मधुर स्निग्ध रसक्षीरघृताशिन ॥
छित्त्वा भित्त्वाऽऽशय क्षार क्षारत्वात्पातयत्यध.॥ १०७॥
मन्देऽग्नावरुचौ सात्म्यैर्म्मद्यै. सस्नेहमश्नताम्॥
योजयेदासवारिष्टान्निगदान्मार्गशुद्धये ॥ १०८ ॥
शालयः षष्टिका जीर्णा कुलत्था जाङ्गल पलम्॥
चिरबिल्वाग्नितर्कारीयवानीवरणाकुरा. ॥ १०९ ॥
शिग्रुस्तरुणबिल्वानि वाल शुष्कं चमूलकम्॥
वीजपूरकहिङ्ग्वम्लवेतसक्षारदाडिमम्॥ ११० ॥

व्योषं तक्रं घृतं तैलं भक्तं पानं तु वारुणी ॥
धान्याम्लं मस्तु तक्रं च यवानीविडचूर्णितम् ॥ १११ ॥
पञ्चमूलशृतं वारि जीर्णं मार्द्वीकमेव वा ॥
पिप्पलीपिप्पलीमूलचित्रकाजाजिसैन्धवैः ११२ ॥
सुरा गुल्मं जयत्याशु जाङ्गलश्च विमिश्रितः ॥
वमनैर्लङ्घनैः स्वेदैः सर्पिःपानैर्विरेचनैः ॥ ११३ ॥
बस्तिक्षारासवारिष्टगुल्मिकापथ्यभोजनैः ॥
श्लेष्मिको बद्धमूलत्वाद्यदि गुल्मो न शाम्यति ॥११४॥
तस्य दाहं हृते रक्ते कुर्य्यादन्ते शरादिभिः ॥
अथ गुल्मं सपर्य्यन्तं वाससान्तरितं भिषक् ॥ ११५ ॥
नाभिबस्त्यन्त्रहृदयं रोमराजीं च वर्ज्जयेत् ॥
नातिगाढं परिमृशेच्छरेण ज्वलताथवा ॥ ११६ ॥
लोहेनारणिकोत्थेन दारुणा तैन्दुकेन वा ॥
ततोऽग्निवेगे शमिते शीतैर्व्रण इव क्रिया ॥ ११७ ॥
आमान्वये तु पेयाद्यैः सन्धुक्ष्याग्निं विलंघिते ॥
स्वं स्वं कुर्य्यात्क्रमं मिश्रं मिश्रदोषे च कालवित् ॥११८॥
गतप्रसवकालायै नार्यै गुल्मेऽस्रसम्भवे ॥
स्निग्धस्विन्नशरीरायै दद्यात्स्नेहविरेचनम् ॥ ११९ ॥
तिलक्काथो घृतगुडव्योषभार्ङ्गीरजोऽन्वितः ॥
पानं रक्तभवे गुल्मे नष्टे पुष्पे च योषितः ॥ १२० ॥
भार्ङ्गीकृष्णाकरञ्जत्वग्ग्रन्थिकामरदारुजम् ॥
चूर्णं तिलानां क्काथेन पीतं गुल्मरुजापहम् ॥ १२१ ॥

पलाशक्षारपात्रे द्वे द्वे पात्रे तैलसर्पिषो.॥
गुल्मशैथिल्यजननी पक्त्वा मात्रा प्रयोजयेत्॥ १२२ ॥
न प्रभिद्येत यद्येवं दद्याद्योनिविरेचनम्॥
क्षारेण युक्त पलल सुधाक्षीरेण वा तत ॥ १२३ ॥
ताभ्या वा भावितान्दद्याद्योनौ कटुकमत्स्यकान्॥
वराहमत्स्यपित्ताभ्यां नक्तकान्वासुभावितान्॥ १२४ ॥
किण्वं वा सगुडक्षारं दद्याद्योनौ विशुद्धये ॥
रक्तपित्तहरंक्षार लेहयेन्मधुसर्पिषा॥ १२५ ॥
लशुनमदिरातीक्ष्णां मत्स्याश्चास्यै प्रयोजयेत्॥
वस्तिं सक्षीरगोमूत्रं सक्षारं दाशमूलिकम्॥ १२६ ॥
अवर्त्तमाने रुधिरे हित गुल्मप्रभेदनम्॥
यमकाभ्यक्तदेहाया प्रवृत्ते समुपेक्षणम्॥ १२७ ॥
रसौदनस्तथाऽऽहारः पान च तरुणी सुरा ॥
रुधिरेऽतिप्रवृत्ते तु रक्तपित्तहरा क्रिया.॥ १२८ ॥
कार्य्या वातरुगार्ताया. सर्वा वातहरा पुन.॥
आनाहादावुदावर्त्तबलासघ्न्यौ यथायथम्॥ १२९ ॥

इत्यष्टाङ्गहृदयसंहिताया चिकित्सास्थाने चतुर्दशोऽध्याय ॥ १४ ॥

## पञ्चदशोऽध्यायः।

अथात उदरचिकित्सित व्याख्यास्याम ।
दोषातिमात्रोपचयात्स्रोतोमार्गनिरोधनात्॥
सम्भवत्युदर तस्मान्नित्यमेन विरेचयेत्॥ १ ॥

पाययेत्तैलमैरण्डं समूत्रं सपयोऽपि वा ॥
मासं द्वौ वाऽथवा गव्यं मूत्रं माहिषमेव वा ॥ २ ॥
पिबेद्वोक्षीरभुक्स्याद्वा करभीक्षीरवर्त्तनः ॥
दाहानाहातितृण्मूर्च्छापरीतस्तु विशेषतः ॥ ३ ॥
रूक्षाणां बहुवातानां दोषसंशुद्धिकांक्षिणाम् ॥
स्नेहनीयानि सर्पींषि जठरघ्नानि योजयेत् ॥ ४ ॥
षट्पलं दशमूलाम्बु मस्तुद्व्याढकसाधितम् ॥
नागरं त्रिपलं प्रस्थं घृततैलात्तथाढकम् ॥ ५ ॥
मस्तुनः साधयित्वैतत्पिबेत्सर्वोदरापहम् ॥
कफमारुतसम्भूते गुल्मे च परमं हितम् ॥ ६ ॥
चतुर्गुणे जले मूत्रे द्विगुणे चित्रकात्पले ॥
कल्के सिद्धं घृतप्रस्थं सक्षारं जठरी पिबेत् ॥ ७ ॥
यवकोलकुलत्थानां पञ्चमूलस्य चाम्भसा ॥
सुरासौवीरकाभ्यां च सिद्धं वा पाययेद्घृतम् ॥ ८ ॥
एभिः स्निग्धाय संजाते बले शान्ते च मारुते ॥
स्रस्ते दोषाशये दद्यात्कल्पदृष्टं विरेचनम् ॥ ९ ॥
पटोलमूलं त्रिफलां निशां वेल्लं च कार्षिकम् ॥
कम्पिल्लनीलिनीकुम्भभागान्द्वित्रिचतुर्गुणान् ॥ १० ॥
पिबेत्संचूर्ण्य मूत्रेण पेयां पूर्वं ततो रसैः ॥
विरिक्तो जाङ्गलैरद्यात्ततःषड्दिवसं पयः ॥ ११ ॥
शृतं पिबेद्व्योषयुतं पीतमेवं पुनः पुनः ॥
हन्ति सर्वोदराण्येतच्चूर्णं जातोदकान्यपि ॥ १२ ॥

गवाक्षी शङ्खिनी दन्ती तिल्वकस्य त्वच वचाम् ॥
पिबेत्कर्कन्धुमृद्वीकाकोलाम्भोमूत्रसीधुभिः ॥ १३ ॥
यवानी हपुषाधान्य शतपुष्पोपकुञ्चिका ॥
कारवी पिप्पली मूलमजगन्धा शठी वचा ॥ १४ ॥
चित्रकाजाजिक व्योष स्वर्णक्षीरी फलत्रयम् ॥
द्वौ क्षारौ पौष्कर मूल कुष्ठ लवणपञ्चकम् ॥ १५ ॥
विडङ्ग च समाशानि दन्त्या भागत्रय तथा ॥
त्रिवृद्विशाले द्विगुणे सातला च चतुर्गुणा ॥ १६ ॥
एष नारायणो नाम चूर्णो रोगगणापह ॥
नैनं प्राप्याभिवर्द्धन्ते रोगा विष्णुमिवासुरा ॥ १७ ॥
तक्रेणोदरिभि पेयो गुल्मिभिर्बदराम्बुना ॥
अनाहवाते सुरया वातरोगे प्रसन्नया ॥ १८ ॥
दधिमण्डेन विट्सगे दाडिमाम्भोभिरर्शसै· ॥
परिकर्त्ते सवृक्षाम्लैरुष्णाम्बुभिरजीर्णके ॥ १९ ॥
भगन्दरे पाण्डुरोगे कासे श्वासे गलग्रहे ॥
हृद्रोगे ग्रहणीदोषे कुष्ठे मन्देऽनले ज्वरे ॥ २० ॥
दष्ट्राविषे मूलविषे सगरे कृत्रिमे विषे ॥
यथार्हं स्निग्धकोष्टेन पेयमेतद्विरेचनम् ॥ २१ ॥
हपुषा काञ्चनक्षीरी त्रिफला नीलिनीफलम् ॥
त्रायन्ती रोहिणी तिक्ता सातला त्रिवृता वचाम् ॥ २२ ॥
सैन्धव काललवणं पिप्पली चेति चूर्णयेत् ॥
दाडिमत्रिफलामासरसमूत्रसुखोदकै· ॥ २३ ॥

पेयोऽयं सर्वगुल्मेषु प्लीह्नि सर्वोदरेषु च ॥
श्वित्रे कुष्ठेष्वजरके सदने विषमेऽनले ॥ २४ ॥
शोफार्शःपाण्डुरोगेषु कामलायां हलीमके ॥
वातपित्तकफांश्चाशु विरेकेण प्रसाधयेत् ॥ २५ ॥
नीलिनीं निचुलं व्योषं क्षारौ लवणपञ्चकम् ॥
चित्रकं च पिबेच्चूर्णं सर्पिषोदरगुल्मनुत् ॥ २६ ॥
पूर्ववच्च पिबेद्दुग्धं क्षामः शुद्धोऽन्तरान्तरा ॥
कारभं गव्यमाजं वा दद्यादात्ययिके गदे ॥ २७ ॥
स्नेहमेव विरेकार्थे दुर्बलेभ्यो विशेषतः ॥
हरीतकीसूक्ष्मरजः प्रस्थयुक्तं घृताढकम् ॥ २८ ॥
अग्नौ विलाप्य मथितं खजेन यवपल्लके ॥
निधापयेत्ततो मासादुद्धृतं गालितं पचेत् ॥ २९ ॥
हरीतकीनां क्राथेन दध्ना चाम्लेन संयुतम् ॥
उदरं गरमष्ठीलामानाहं गुल्मविद्रधिम् ॥ ३० ॥
हन्त्येतत्कुष्ठमुन्मादमपस्मारं च पानतः ॥
स्नुक्क्षीरयुक्ताद्गोक्षीराच्छृतशीतात्खजाहतात् ॥ ३१ ॥
यज्जातमाज्यं स्नुक्क्षीरासिद्धं तच्च तथागुणम् ॥
क्षीरद्रोणं सुधाक्षीरप्रस्थार्द्धेन युतं दधि ॥ ३२ ॥
जातं मथित्वा तत्सर्पिस्त्रिवृत्सिद्धं च तद्गुणम् ॥
तथा सिद्धं घृतप्रस्थं पयस्यष्टगुणे पिबेत् ॥ ३३ ॥
स्नुक्क्षीरपलकल्केन त्रिवृता षट्पलेन च ॥
एषां चानुपिबेत्पेयां रसं स्वादुपयोऽथवा ॥ ३४ ॥

घृते जीर्णे विरिक्तश्च कोष्ण नागरसाधितम् ॥
पिबेदम्बु तत. पेया ततो यूषं कुलत्थजम् ॥ ३५ ॥
पिबेद्रूक्षस्त्र्यहं त्वेवं भूयो वाऽप्रतिभोजित. ॥
पुन. पुन. पिबेत्सर्पिरानुपूर्व्याऽनयैवच ॥ ३६ ॥
घृतान्येतानि सिद्धानि विदध्यात्कुशलो भिषक् ॥
गुल्माना गरदोषाणामुदराणा च शान्तये ॥ ३७ ॥
पीलुकल्कोपसिद्धं वा घृतमानाहभेदनम् ॥
तैल्वक नीलिनीसर्पि स्नेहं वा मिश्रक पिबेत् ॥ ३८ ॥
हृतदोष क्रमादश्नँल्लघुशाल्योदन प्रति ॥
उपयुञ्जीत जठरी दोषशेषनिवृत्तये ॥ ३९ ॥
हरीतकीसहस्र वा गोमूत्रेण पयोऽनुप. ॥
सहस्र पिप्पलीना वा स्नुक्क्षीरेण सुभावितम् ॥ ४० ॥
पिप्पली वर्द्धमाना वा क्षीराशी वा शिलाजतु ॥
तद्वद्वा गुग्गुलुं क्षीरं तुल्यार्द्रकरसंतथा ॥ ४१ ॥
चित्रकामरदारुभ्या कल्क क्षीरेण वा पिबेत् ॥
मासं युक्तस्तथा हस्तिपिप्पली विश्वभेषजम् ॥ ४२ ॥
विडङ्ग चित्रको दन्ती चव्यं व्योष च तै. पय. ॥
कल्कै कोलसमै पीत्वा प्रवृद्धमुदरजयेत् ॥ ४३ ॥
भोज्यं भुञ्जीत वा मास स्नुहीक्षीरघृतान्वितम् ॥
उत्कारिका वा स्नुक्क्षीरपीतपथ्याकणाकृताम् ॥ ४४ ॥
पार्श्वशूलमुपस्तम्भं हृद्ग्रह च समीरण. ॥
यदि कुर्यात्ततस्तैलं बिल्वक्षारान्वितं पिबेत् ॥ ४५ ॥

पक्वं वा टिण्टुकबलापलाशं तिलजालजैः ॥
क्षारैः कदल्यपामार्गतर्कारीजैःपृथक्कृतैः ॥ ४६ ॥
कफे वातेन पित्ते वा ताभ्यां वाप्यावृतेऽनिले ॥
बलिनः स्वौषधं युक्तं तैलमैरण्डजं हितम् ॥ ४७ ॥
देवदारुपलाशार्कहस्तिपिप्पलिशिग्रुकैः ॥
साश्वकर्णैः सगोमूत्रैः प्रदिह्यादुदरं बहिः ॥ ४८ ॥
वृश्चिकालीवचाशुण्ठीपञ्चमूलपुनर्नवात् ॥
वर्षाभूधान्यकुष्ठाच्च क्काथैर्मूत्रैश्च सेचयेत् ॥ ४९ ॥
विरिक्तं म्लानमुदरं स्वेदितं साल्वलादिभिः ॥
वाससा वेष्टयेदेवं वायुर्नाऽऽध्मापयेत्पुनः ॥ ५० ॥
सुविरिक्तस्य यस्य स्यादाध्मानं पुनरेव तम् ।
सुस्निग्धैरम्ललवणैर्निरूहैः समुपाचरेत् ॥ ५१ ॥
सोपस्तंभोऽपि वै वायुराध्मापयति यं नरम् ॥
तीक्ष्णाः सक्षारगोमूत्राः शस्यन्ते तस्य वस्तयः ॥ ५२ ॥
इति सामान्यतः प्रोक्ताः सिद्धा जठरिणा क्रियाः ॥
वातोदरेथ बलिनं विदार्य्यादिशृतं घृतम् ॥ ५३ ॥
पाययेत्तु ततः स्निग्धं स्वेदिताङ्गं विरेचयेत् ॥
बहुशस्तैल्वकेनैनं सर्पिषा मिश्रकेण वा ॥ ५४ ॥
कृते संसर्जने क्षीरं बलार्थमवचारयेत् ॥
प्रागुत्क्लेशान्निवर्त्तेत बले लब्धे क्रमात्पयः ॥ ५५ ॥
यूषै रसैर्वा मन्दाम्ललावणैरिन्धतानलम् ॥
सोदावर्त्तं पुनः स्निग्धं स्विन्नमास्थापयेत्ततः ॥ ५६ ॥

तीक्ष्णाधोभागयुक्तेन दाशमूलिकवास्तिना ॥
तिलोरुवूकतैलेन वातघ्नाम्लशृतेन च ॥ ५७ ॥
स्फुरणाक्षेपसन्ध्यस्थिपार्श्वपृष्ठत्रिकार्तिषु ॥
रूक्ष वद्धशकृद्वातं दीप्ताग्निमनुवासयेत् ॥ ५८ ॥
अविरेच्यस्य शमना वस्तिक्षीरघृतादय ॥
वलिनं स्वादुसिद्धेन पैत्ते सस्नेह्य सर्पिषा ॥ ५९ ॥
श्यामात्रिभण्डीत्रिफलाविपक्केन विरेचयेत् ॥
सितामधुघृताढ्येन निरूहोऽस्य ततो हित ॥ ६० ॥
न्यग्रोधादिकषायेण स्नेहवस्तिश्च तच्छृत ॥
दुर्वलं त्वनुवास्यादौ शोधयेत्क्षीरवस्तिभि ॥ ६१ ॥
जाते त्वग्निवले स्निग्ध भूयो भूयो विरेचयेत् ॥
क्षीरेण सत्रिवृत्कल्केनोरुवूकशृतेन तम् ॥ ६२ ॥
सातलात्रायमाणाभ्या शृतेनारग्वधेन वा ॥
सकफे वा समूत्रेण सतिक्ताज्येन सानिले ॥ ६३ ॥
पयसान्यतमेनैषा विदार्यादिशृतेन वा ॥
भुञ्जीत जठर चास्य पायसेनोपनाहयेत् ॥ ६४ ॥
पुन क्षीर पुनर्वस्ति पुनरेव विरेचनम् ॥
क्रमेण ध्रुवमातिष्ठन्यत पित्तोदर जयेत् ॥ ६५ ॥
वत्सकादिविपक्केन कफे संस्नेह्य सर्पिषा ॥
स्विन्न स्नुक्क्षीरसिद्धेन वलवन्त विरेचितम् ॥ ६६ ॥
ससर्जयेत्कटुक्षारयुक्तैरन्नै. कफापहै ॥
मूत्रत्र्यूषणतैलाढ्यो निरूहोऽस्य ततो हित.॥ ६७॥

मुष्ककादिकषायेण स्नेहवस्तिश्च तच्छृतः ॥
भोजनं व्योषदुग्धेन कौलत्थेन रसेन वा ॥ ६८ ॥
स्तैमित्यारुचिहृल्लासैर्मन्देऽग्नौ मद्यपाय च ॥
दद्यादरिष्टान्क्षारांश्च कफस्त्यानस्थिरोदरे ॥ ६९ ॥
हिङ्गूपकुल्ये त्रिफलां देवदारु निशाद्वयम् ॥
भल्लातकं शिग्रुफलं कटुकां तिक्तकं वचाम् ॥ ७० ॥
शुण्ठीं माद्रीं घनं कुष्ठं सरलं पटुपञ्चकम् ॥
दाहयेज्जर्ज्जरीकृत्य दधिस्नेहचतुष्कवत् ॥ ७१ ॥
अन्तर्धूमं ततः क्षाराद्बिडालपदकं पिबेत् ॥
मदिरादधिमण्डोष्ण जलारिष्टसुरासवैः ॥ ७२ ॥
उदरं गुल्ममष्ठीलां तून्यौ शोफं विषूचिकाम् ॥
प्लीहहृद्रोगगुदजानुदावर्त्तं च नाशयेत् ॥ ७३ ॥
जयेदरिष्टगोमूत्रचूर्णायस्कृतिपानतः ॥
सक्षारतैलपानैश्च दुर्बलस्य कफोदरम् ॥ ७४ ॥
उपनाह्यं ससिद्धार्थकिण्वैर्बीजैश्च मूलकात् ॥
कल्कितैरुदरस्वेदमभीक्ष्णं चात्र योजयेत् ॥ ७५ ॥
सन्निपातोदरे कुर्य्यान्नातिक्षीणबलानले ॥
दोषोद्रेकानुरोधेन प्रत्याख्याय क्रियामिमाम् ॥ ७६ ॥
दन्तीद्रवन्तीफलजं तैलं पाने च शस्यते ॥
क्रियानिवृत्ते जठरे त्रिदोषे तु विशेषतः ॥ ७७ ॥
दद्यादापृच्छ्य तज्ज्ञातीन्पातुं मद्येन कल्कितम् ॥
मूलं काकादनीगुञ्जाकरवीरकसम्भवम् ॥ ७८ ॥

पानभोजनसंयुक्तं दद्याद्वा स्थावरं विषम् ॥
यस्मिन्वा कुपित. सर्पो विमुञ्चति फले विषम् ॥ ७९ ॥
तेनास्य दोषसंघात स्थिरो लीनो विमार्गग. ॥
बहि. प्रवर्त्तते भिन्नो विषेणाशु प्रमाथिना ॥ ८० ॥
तथा व्रजत्यगदता शरीरान्तरमेव वा ॥
हृतदोषं तु शीताम्बुस्नात तं पाययेत्पय. ॥ ८१ ॥
पेया वा त्रिवृत. शाक मण्डूक्या वास्तुकस्य वा ॥
कालशाकं यवाख्यं वा खादेत्स्वरससाधितम् ॥ ८२ ॥
निरम्ललवणस्नेहं स्विन्नमन्नमनन्नभुक् ॥
मासमेक ततश्चैव तृषितः स्वरसं पिबेत् ॥ ८३ ॥
एव विनिर्हृते शाके दोषे मासात्पर तत ॥
दुर्वलाय प्रयुञ्जीत प्राणभृत्कारभ पय ॥ ८४ ॥
प्लीहोदरे यथादोष स्निग्धस्य स्वेदितस्य च ॥
शिरा मुक्तवतो दध्ना वामबाहौ विमोक्षयेत् ॥ ८५ ॥
लब्धे बले च भूयोऽपि स्नेहपीतं विशोधितम् ॥
समुद्रशुक्तिज क्षार पयसा पाययेत्तथा ॥ ८६ ॥
अम्लशृत विडकणाचूर्णाढ्य नक्तमालजम् ॥
सोभाजनस्य वा क्काथ सैन्धवाग्निकणान्वितम् ॥ ८७ ॥
हिङ्ग्वादिचूर्णं क्षाराढ्य युञ्जीत च यथाबलम् ॥
पिप्पली नागर दन्तीं समांश द्विगुणाभयम् ॥
विडार्द्धांशयुतं चूर्णमिदमुष्णाम्बुना पिबेत् ॥ ८८ ॥
विडङ्गं चित्रक सक्तून्सघृतान्सैन्धव वचाम् ॥

दग्ध्वा कपाले पयसा गुल्मप्लीहापहं पिबेत् ॥ ८९ ॥
तैलोन्मिश्रैर्बदरकपत्रैः संमर्दितैः समुपनद्धः ॥
मुशलेन पीडितोऽनुयाति प्लीहा पयोभुजो नाशम् ॥९०॥
रोहीतकलताः कृत्वा खण्डशः साभयाजले ॥
मूत्रे वाऽऽसुनुयात्तत्तु सप्तरात्रस्थितं पिबेत् ॥ ९१ ॥
कामलाप्लीहगुल्मार्शःकृमिमेहोदरापहम् ॥ ९२ ॥
रोहीतकत्वचः कृत्वापलानां पञ्चविंशतिम् ॥
कोलद्विप्रस्थसंयुक्तं कषायमुपकल्पयेत् ॥ ९३ ॥
पालिकैः पञ्चकोलैस्तु तैः समस्तैश्च तुल्यया ॥
हरीतकत्वचा पिष्टैर्घृतप्रस्थं विपाचयेत् ॥ ९४ ॥
प्लीहाभिवृद्धिं शमयत्येतदाशु प्रयोजितम् ॥
कदल्यास्तिलनालानां क्षारेण क्षुरकस्य च ॥ ९५ ॥
तैलं पक्वं जयेत्पानात्प्लीहानं कफवातजम् ॥
अशान्तौ गुल्मविधिना योजयेदग्निकर्म च ॥ ९६ ॥
अप्राप्तपिच्छासलिले प्लीह्नि वातकफोल्बणे ॥
पैत्तिके जीवनीयानि सर्पींषि क्षीरबस्तयः ॥ ९७ ॥
रक्तावसेकः संशुद्धिः क्षीरपानं च शस्यते ॥
यकृति प्लीहवत्कर्म्म दक्षिणे तु भुजे शिराम् ॥ ९८ ॥
स्विन्नाय वृद्धोदरिणे मूत्रतीक्ष्णौषधान्वितम् ॥
सतैलं लवणं दद्यान्निरूहं सानुवासनम् ॥ ९९ ॥
परिस्रंसीनि चान्नानि तीक्ष्णं चास्मै विरेचनम् ॥
उदावर्त्तहरं कर्म्म कार्यं यच्चानिलापहम् ॥ १०० ॥

छिद्रोदरमृते स्वेदाच्छ्लेष्मोदरवदाचरेत् ॥
जातं जातं जलं स्राव्यमेवं तद्यापयेद्भिषक् ॥ १०१ ॥
अपां दोषहराण्यादौ योजयेदुदकोदरे ॥
मूत्रयुक्तानि तीक्ष्णानि विविधक्षारवन्ति च ॥ १०२ ॥
दीपनीयैः कफघ्नैश्च तमाहारैरुपाचरेत् ॥
क्षारं छागकरीषाणां शृतं मूत्रेऽग्निना पचेत् ॥ १०३ ॥
घनी भवति तस्मिंश्च कर्षांशं चूर्णितं क्षिपेत् ॥
पिप्पलीपिप्पलीमूलं शुण्ठीलवणपञ्चकम् ॥ १०४ ॥
निकुम्भकुम्भत्रिफलास्वर्णक्षीरी विषाणिकाः ॥
स्वर्जिकाक्षारपड्ग्रन्थासातलायवशूकजम् ॥ १०५ ॥
कोलाभां गुटिकां कृत्वा ततः सौवीरकाप्लुताः ॥
पिबेदजरके शोफे प्रवृद्धे चोदकोदरे ॥ १०६ ॥
इत्यौषधैरप्रशमे त्रिषु वृद्धोदरादिषु ॥
प्रयुञ्जीत भिषक् शस्त्रमार्तबन्धुनृपार्थितः ॥ १०७ ॥
स्निग्धस्विन्नतनोर्नाभेरधो वृद्धक्षतान्त्रयोः ॥
पाटयेदुदरं मुक्त्वा वामतश्चतुरङ्गुलात् ॥ १०८ ॥
चतुरङ्गुलमानं तु निष्कास्यान्त्राणि तत्र च ॥
निरीक्ष्यापनयेद्वालमललेपोपलादिकम् ॥ १०९ ॥
छिद्रे तु शल्यमुद्धृत्य विशोध्यान्त्रं परिस्रवम् ॥
मर्कोटैर्दंशयेच्छिद्रं तेषु लग्नेषु चाहरेत् ॥ ११० ॥
कायं मूर्ध्नोऽनुचान्त्राणि यथास्थानं निवेशयेत् ॥
अक्तानि मधुसर्पिर्भ्यामथ सीव्येद्बहिर्व्रणम् ॥ १११ ॥

ततः कृष्णमृदालिप्य वध्नीयाद्यष्टिमिश्रया ॥
निवातस्थः पयोवृत्तिः स्नेहद्रोण्यां वसेत्ततः ॥ ११२ ॥
सजले जठरे तैलैरभ्यक्तस्यानिलापहैः ॥
स्विन्नस्योष्णाम्बुना कक्षमुदरे परिवेष्टिते ॥ ११३ ॥
वृद्धाच्छिद्रोदितस्थाने विध्येदंगुलमात्रकम् ॥
निधाय तस्मिन्नाडीं च स्रावयेदर्द्धमम्भसः ॥ ११४ ॥
अथास्य नाडीमाकृष्य तैलेन लवणेन च ॥
व्रणमभ्यज्य वध्वा च वेष्टयेद्वाससोदरम् ॥ ११५ ॥
तृतीयेऽह्नि चतुर्थे वा यावदाषोडशं दिनम् ॥
तस्य विश्रम्य विश्रम्य स्रावयेदल्पशो जलम् ॥ ॥ ११६ ॥
विवेष्टयेद्गाढतरं जठरं च श्लथाश्लथम् ॥
निस्रुते लंघितः पेयामस्नेहलवणा पिवेत् ॥ ११७ ॥
स्यात्क्षीरवृत्तिः षण्मासांस्त्रीन्पेयां पयसा पिवेत् ॥
त्रींश्चान्यान्पयसैवाद्यात्फलाम्लेन रसेन वा ॥ ११८ ॥
अल्पशः स्नेहलवणं जीर्णं श्यामाककोद्रवम् ॥
प्रयतो वत्सरेणैवं विजयेत्तज्जलोदरम् ॥ ११९ ॥
वर्ज्येषु यन्त्रितो दिष्टे नात्यदिष्टे जितेन्द्रियः ॥
सर्वमेवोदरं प्रायो दोषसंघातजं यतः ॥ १२० ॥
अतो वातादिशमनी क्रिया सर्वा प्रशस्यते ॥
वह्निर्मन्दत्वमायाति दोषैः कुक्षौ प्रपूरिते ॥ १२१ ॥
तस्माद्भोज्यानि भोज्यानि दीपनानि लघूनि च ॥
सपञ्चमूलान्यल्पाम्लपटुस्नेहकटूनि च ॥ १२२ ॥

भावितानां गवां मूत्रे षष्टिकानां च तण्डुलैः ॥
यवागूं पयसा सिद्धां प्रकामं भोजयेन्नरम् ॥ १२३ ॥
पिबेदिक्षुरसं चानु जठराणां निवृत्तये ॥
स्वं स्वं स्थानं व्रजन्त्येषां वातपित्तकफास्तथा ॥ १२४ ॥
अत्यर्थोष्णाम्ललवणं रूक्षं ग्राहि हिमं गुरु ॥
गुडं तैलकृतं शाकं वारिपानावगाहयोः ॥ १२५ ॥
आयासाध्वदिवास्वप्नयानानि च परित्यजेत् ॥
नात्यर्थसान्द्रं मधुरं तक्रं पाने प्रशस्यते ॥ १२६ ॥
सकणालवणं वाते पित्ते सोषणशर्करम् ॥
यवानीसैन्धवाजाजीमधुव्योषैः कफोदरे ॥ १२७ ॥
त्र्यूषणक्षारलवणैः संयुतं निचयोदरे ॥
मधु तैलवचाशुण्ठीशताह्वाकुष्ठसैन्धवैः ॥ १२८ ॥
प्लीह्नि बृद्धे तु हपुषा यवानीपञ्चजादिभिः ॥
सकृष्णामाक्षिकं छिद्रे व्योषवत्सलिलोदरे ॥ १२९ ॥
गौरवारोचकानाहमन्दवह्न्यतिसारिणाम् ॥
तक्रं वातकफार्तानाममृतत्वाय कल्पते ॥ १३० ॥
प्रयोगाणां च सर्वेषामनुक्षीरं प्रयोजयेत् ॥
स्थैर्यकृत्सर्वधातूनां बल्यं दोषानुबन्धहृत् ॥
भेषजोपचिताङ्गानां क्षीरमेवामृतायते ॥ १३१ ॥

इत्यष्टाङ्गहृदयसंहितायां चिकित्सास्थाने पञ्चदशोऽध्यायः ॥ १५ ॥

# षोडशोऽध्यायः ।

अथातःपाण्डुरोगचिकित्सितं व्याख्यास्यामः ।

पाण्डुरोगी पिबेत्सर्पिरादौ कल्याणकाह्वयम् ॥
पञ्चगव्यं महातिक्तं घृतं वाऽऽरग्वधादिना ॥ १ ॥
दाडिमात्कुडवो धान्यात्कुडवार्द्धं पलं पलम् ॥
चित्रकाच्छृङ्गवेराच्च पिप्पल्यर्द्धपलं च तैः ॥ २ ॥
कल्कितैर्विंशतिपलं घृतस्य सलिलाढके ॥
सिद्धं हृत्पाण्डुगुल्मार्शः प्लीहवातकफार्तिनुत् ॥ ३ ॥
दीपनं श्वासकासघ्नं मूढवातानुलोमनम् ॥
दुःखप्रसविनीनां च वन्ध्यानां च प्रशस्यते ॥ ४ ॥
स्नेहितं वामयेत्तीक्ष्णैः पुनः स्निग्धं च शोधयेत् ॥
पयसा मूत्रयुक्तेन बहुशः केवलेन वा ॥ ५ ॥
दन्तीपलरसे कोष्णे काश्मर्याञ्जलिमासुतम् ॥
द्राक्षाञ्जलिं वा मृदितं तत्पिबेत्पाण्डुरोगजित् ॥ ६ ॥
मूत्रेण पिष्टां पथ्यां वा तत्सिद्धं वा फलत्रयम् ॥
स्वर्णक्षीरीत्रिवृच्छ्यामाभद्रदारुमहौषधम् ॥ ७ ॥
गोमूत्राञ्जलिना पिष्टं शृतं तेनैव वा पिबेत् ॥
साधितं क्षीरमेभिर्वा पिबेद्दोषानुलोमनम् ॥ ८ ॥
मूत्रे स्थितं वा सप्ताहं पयसाऽयोरजः पिबेत् ॥
जीर्णे क्षीरेण भुञ्जीत रसेन मधुरेण वा ॥ ९ ॥

शुद्धश्चोभयतो लिह्यात्पथ्या मधुघृतप्लुताम् ॥
विशाला कटुका मुस्ता कुष्ठ दारुकलिङ्गक. ॥ १० ॥
कर्पांशाद्द्विपिचुर्मूर्वा कर्षार्द्धांशा घुणप्रिया ॥
पीत्वा तच्चूर्णनम्भोभि सुखैर्लिह्यात्ततो मधु ॥ ११ ॥
पाण्डुरोग ज्वर दाहं कास श्वासमरोचकम् ॥
गुल्मानाहामवाताश्च रक्तपित्त च तज्जयेत् ॥ १२ ॥
वासागुड्चीत्रिफलाकट्वीभूनिम्बनिम्बज ॥
क्वाथ. क्षौद्रयुतो हन्ति पाण्डुपित्तास्रकामला ॥ १३ ॥
व्योषाग्निवेल्लत्रिफलामुस्तैस्तुल्यमयोरजः ॥
चूर्णित तक्रमध्वाज्यकोष्णाम्भोभि प्रयोजितम् ॥ १४ ॥
कामलापाण्डुहृद्रोगकुष्ठार्शोमेहनाशनम् ॥
गुडनागरमण्डूरतिलाशान्मानत समान् ॥ १५ ॥
पिप्पलीद्विगुणान्दद्याद्गुटिका पाण्डुरोगिणे ॥
ताप्य दार्व्यास्त्वच चव्य ग्रन्थिकं देवदारु च ॥ १६ ॥
व्योषादिनवक चैतच्चूर्णयेद्द्विगुणं ततः ॥
मण्डूर चाञ्जननिभ सर्वतोऽष्टगुणेऽथ तत् ॥ १७ ॥
पृथग्विपक्के गोमूत्रे वटकीकरणक्षमे ॥
प्रक्षिप्य वटकान्कुर्यात्तान्खादेत्तक्रभोजन ॥ १८ ॥
एते मण्डूरवटकाः प्राणदा पाण्डुरोगिणाम् ॥
कुष्ठान्यजरक शोफमूरुस्तम्भमरोचकम् ॥ १९ ॥
अर्शांसि कामला मेहान्प्लीहान शमयन्ति च ॥
ताप्याद्रिजतुरोप्यायोमला पञ्चपला. पृथक् ॥ २० ॥

चित्रकत्रिफलाव्योषविडङ्गैः पालिकैः सह ॥
शर्कराष्टपलोन्मिश्राश्चूर्णिता मधुना द्रुताः ॥ २१ ॥
पाण्डुरोगं विषं कासं यक्ष्माणं विषमं ज्वरम् ॥
कुष्ठान्यजरकं मेहं शोफं श्वासमरोचकम् ॥ २२ ॥
विशेषाद्धन्त्यपस्मारं कामलां गुदजानि च ॥
कौटजत्रिफलानिम्बपटोलघननागरैः ॥ २३ ॥
भावितानि दशाहानि रसैर्द्वित्रिगुणानि वा ॥
शिलाजतुपलान्यष्टौ तावती सितशर्करा ॥ २४ ॥
त्वक्क्षीरीपिप्पलीधात्रीकर्कटाख्याः पलोन्मिताः ॥
निर्दग्धाः फलमूलाभ्यां पलं युक्त्या त्रिजातकम् ॥ २५ ॥
मधुत्रिपलसंयुक्तं कुर्य्यादक्षसमान्गुडान् ॥
दाडिमाम्बुपयःपक्षिरसतोयसुरासवान् ॥ २६ ॥
तान्भक्षयित्वानुपिबेन्निरन्नो भुक्तएव वा ॥
पाण्डुकुष्ठज्वरप्लीहतमकार्शोभगन्दरम् ॥ २७ ॥
हृन्मूत्रपूतीशुक्राग्निदोषशोषगरोदरम् ॥
कासासृग्दरपित्तासृक्शोफगुल्मगलामयान् ॥ २८ ॥
मेहवर्ध्मक्रमान्हन्युः सर्वदोषहराः शिवाः ॥
द्राक्षाप्रस्थं कणाप्रस्थं शर्कराद्धतुलां तथा ॥ २९ ॥
द्विपलं मधुकं शुण्ठी त्वक्क्षीरीं च विचूर्णितम् ॥
धात्रीफलरसे द्रोणे तत्क्षिप्त्वा लेहवत्पचेत् ॥ ३० ॥
शीतान्मधुप्रस्थयुताल्लिह्यात्पाणितलं ततः ॥
हलीमकं पाण्डुरोगं कामलाञ्च नियच्छति ॥ ३१ ॥

कनीय पञ्चमूलाम्बु शस्यते पानभोजने ॥
पाण्डूनां कामलार्त्तानां मृद्वीकामलकाद्रस' ॥ ३२ ॥
इति सामान्यत प्रोक्त पाण्डुरोग भिषग्जितम् ॥
विकल्प्य योज्य विदुषा पृथग्दोषवल प्रति ॥ ३३ ॥
स्नेहप्राय पवनजे तिक्तशीतं तु पैत्तिके॥
श्लैष्मिके कटुरूक्षोष्ण विमिश्र सान्निपातिके॥ ३४ ॥
मृद निर्य्यातयेत्कायात्तीक्ष्णै सशोधनै पुर' ॥
वलाधानानि सर्पींषि शुद्धे कोष्ठे तु योजयेत् ॥ ३५ ॥
व्योषविल्वद्विरजनीत्रिफलाद्विपुनर्नवम्॥
मुस्तान्ययोरज'पाठाविडङ्गं देवदारु च ॥ ३६ ॥
वृश्चिकाली च भार्ङ्गी च सक्षीरैस्तै शृत घृतम् ॥
सर्वान्प्रशमयत्याशु विकारान्मृत्तिकाकृतान् ॥ ३७ ॥
तद्वत्केसरयष्ट्याह्वपिप्पलीक्षीरशाद्वलैः ॥
मृद्भक्षणाय तल्लौल्ये वितरेद्भाविता मृदम् ॥ ३८ ॥
वेल्लाग्निनिम्बप्रसवै' पाठया मूर्वयाऽथवा ॥
मृद्भेदभिन्नदोषानुगमाद्योज्य च भेषजम् ॥ ३९ ॥
कामलाया तु पित्तघ्न पाण्डुरोगाविरोधि यत् ॥
पथ्याशतरसे पथ्यावृन्तार्द्धशतकल्कित ॥ ४० ॥
प्रस्थे सिद्धे घृत गुल्मकामलापाण्डुरोगनुत् ॥
आरग्वध रसेनेक्षोर्विदार्य्यामलकस्य वा ॥ ४१ ॥
सत्र्यूषण विल्वमात्र पाययेत्कामलापहम् ॥
पिवेन्त्रिकुम्भकल्क वा द्विगुण शीतवारिणा ॥ ४२ ॥

कुम्भस्य चूर्णं सक्षौद्रं त्रैफलेन रसेन वा ॥
त्रिफलाया गुडूच्या वा दार्व्या निम्बस्य वा रसम् ॥ ४३ ॥
प्रातः प्रातर्मधुयुतं कामलार्त्ताय योजयेत् ॥
निशागैरिकधात्रीभिः कामलापहमञ्जनम् ॥ ४४ ॥
तिलपिष्टनिभं यस्तु कामलावान्सृजेन्मलम् ॥
कफरुद्धपथं तस्य पित्तं कफहरैर्जयेत् ॥ ४५ ॥
रूक्षशीतगुरुस्वादुव्यायामबलनिग्रहैः ॥
कफसम्मूर्च्छितो वायुर्यदा पित्तं बहिः क्षिपेत् ॥ ४६ ॥
हारिद्रनेत्रमूत्रत्वक्श्वेतवर्चास्तदा नरः ॥
भवेत्साटोपविष्टम्भो गुरुणा हृदयेन च ॥ ४७ ॥
दौर्बल्याल्पाग्निपार्श्वार्त्तिहिध्माश्वासारुचिज्वरैः ॥
क्रमेणाल्पेऽनुषज्येत पित्ते शाखासमाश्रिते ॥ ४८ ॥
रसैस्तं रूक्षकट्वम्लैः शिखितित्तिरिदक्षजैः ॥
शुष्कमूलकजैर्यूषैः कुलत्थोत्थैश्च भोजयेत् ॥ ४९ ॥
भृशाम्लतीक्ष्णकटुकलवणोष्णञ्च शस्यते ॥
सबीजपूरकरसं लिह्याद्व्योषं तथाशयम् ॥ ५० ॥
स्वं पित्तमेति तेनास्य शकृदप्यनुरज्यते ॥
वायुश्च याति प्रशमं सहाटोपाद्युपद्रवैः ॥ ॥ ५१ ॥
निवृत्तोपद्रवस्यास्य कार्य्यः कामलिको विधिः ॥
गोमूत्रेण पिबेत्कुम्भकामलायां शिलाजतु ॥ ५२ ॥
मासं माक्षिकधातुं वा किट्टं चाप्याहिरण्यजम् ॥
गुडूचीस्वरसक्षीरसाधितेन हलीमकी ॥ ५३ ॥

सर्पिषीहत्रिषास्निग्ध पिवद्राक्षीरसेन तु ॥
त्रिवृता तद्विरिक्तोथ्यास्वादुपित्तानिलापहम् ॥ ५४ ॥
द्राक्षालेहश्च पूर्वोक्त सर्पीषि मधुराणि च ॥
यापनान्क्षीरवस्तीश्च शीलयेत्सानुवासनान् ॥ ५५ ॥
मार्द्वीकारिष्टयोगाश्च पिवेद्युत्तयाग्निवृद्धये ॥
कासिक वाभयालेह पिप्पलीमधुक वलाम् ॥ ५६ ॥
पयसा च प्रयुञ्जीत यथादोष यथावलम् ॥
पाण्डुरोगेषु कुशल शोफोक्तञ्च क्रियाक्रमम् ॥ ५७ ॥

इत्यष्टाङ्गहृदयसंहितायां चिकित्सास्थाने षोडशोऽध्यायः ॥ १६ ॥



## सप्तदशोऽध्यायः ।

अथात श्वयथुचिकित्सित व्याख्यास्याम. ।
सर्वत्र सर्वाङ्गसरे दोषजे श्वयथौ पुरा ॥
सामे विशोषितो भुक्त्वालघुकोष्णाम्भसा पिवेत् ॥ १ ॥
नागरातिविषादारुविडङ्गेन्द्रयवोषणम् ॥
अथवा विजयाशुण्ठीदेवदारुपुनर्नवम् ॥ २ ॥
नवायस वा दोषाढ्य. शुद्ध्यै मूत्रहरीतकी ॥
वराकाथेन कटुकाकुम्भायस्थ्यूषणानि वा ॥ ३ ॥
अथवा गुग्गुल तद्वज्जतु वा शैलसम्भवम् ॥
मन्दाग्नि. शीलयेदामगुरुभिन्नविवद्धविट् ॥ ४ ॥

तक्रं सौर्वर्चलव्योषक्षौद्रयुक्तं गुडाभयम् ॥
तक्रानुपानमथवा तद्वद्वा गुडनागरम् ॥ ५ ॥
आर्द्रकं वा समगुडं प्रकुंच्यार्द्धविवर्द्धितम् ॥
परं पञ्चपलं मासं यूषक्षीररसाशनः ॥ ६ ॥
गुल्मोदरार्शःश्वयथुप्रमेहाञ्श्वासप्रतिश्यालसकाविपाकान् ॥
सकामलाशोफमनोविकारान्कासं कफं चैव जयेत्प्रयोगः॥७॥
घृतमार्द्रकनागरस्य कल्कस्वरसाभ्यां पयसा च साधयित्वा॥
श्वयथुक्षवथूदराग्निसादैरभिभूतोऽपि पिबन्भवत्यरोगः॥८॥
निरामोबद्धशमलः पिबेच्छ्वयथुपीडितः ॥
त्रिकटुत्रिवृतादन्तीचित्रकैः साधितम्पयः ॥ ९ ॥
मूत्रं गोर्वा महिष्या वा सक्षीरं क्षीरभोजनः ॥
सप्ताहं मासमथवा स्याद्दुष्ट्रीक्षीरवर्त्तनः ॥ १० ॥
यवानकं यवक्षारं यवानीं पञ्चकोलकम् ॥
मरिचन्दाडिमम्पाठां धानकाम्लवेतसम् ॥ ११ ॥
वालबिल्वञ्च कर्षांशं साधयेत्सलिलाढके ॥
तेन पक्वो घृतप्रस्थःशोफार्शोगुल्समेहहा ॥ १२ ॥
दध्नश्चित्रकगर्भाद्वा घृतं तत्तक्रसंयुतम् ॥
पक्वंसचित्रकंतद्वद्गुणैर्युञ्ज्याच्च कालवित् ॥ १३ ॥
धान्वंतरमहातिक्तकल्याणमभयाघृतम् ॥
दशमूलकषायस्य कंसे पथ्याशतं पचेत् ॥ १४ ॥
दत्त्वा गुडतुलां तस्मिँल्लेहे दद्याद्विचूर्णितम् ॥
त्रिजातकं त्रिकटुकं किञ्चिच्च यावशूकजम् ॥ १५ ॥

प्रस्थार्द्धञ्च हिमे क्षौद्रात्तन्निहन्त्युपयोजितम् ॥ १६ ॥
प्रवृद्धशोफज्वरमेहगुल्मकार्य्यामवाताम्लकरक्तपित्तम् ॥
वैवर्ण्यमूत्रानिलशुक्रदोषश्वासारुचिप्लीहगरोदरञ्च॥१७॥
पुराणयवशाल्यन्न दशमूलाम्बुसाधितम् ॥
अल्पमल्पपटुस्नेह भोजन श्वयथोर्हितम् ॥ १८ ॥
क्षारव्योषान्वितैर्मौद्गैः कौलत्थै सकणैरसैः ॥
तथा जाङ्गलजै. कूर्मगोधाशल्यकजैरपि ॥ १९ ॥
अनम्ल मथितं पानं मद्यान्योपधवन्ति च ॥
अजाजीशठिजीवन्तीकारवीपौष्कराग्निकै ॥ २० ॥
विल्वमध्ययवक्षारवृक्षाम्लैर्वदरोन्मिते ॥
कृता पेयाऽऽज्यतैलाभ्या युक्तिभृष्टा पर हिता॥ २१॥
शोफातिसारहृद्रोगगुल्मार्शोऽल्पाग्निमेहिनाम् ॥
गुणैस्तद्वच्च पाठाया. पञ्चकोलेन साधिता ॥ २२ ॥
शैलेयकुष्टस्थौणेयरेणुकागुरुपद्मकै.॥
श्रीवेष्टकनखस्पृक्कादेवदारुप्रियङ्गुभिः ॥ २३ ॥
मासीमागधिकावन्यधान्यध्यामकवालकैं ॥
चतुर्जातकतालीसमुस्तागन्धपलाशकै.॥ २४ ॥
कुर्य्यादभ्यञ्जन तैल लेंप स्नानाय तूदकम् ॥
स्नान वा निम्बवर्षाभूनक्तमालार्कवारिणा ॥ २५ ॥
एकाङ्गशोफे वर्षाभूकरवीरककिंशुकै ॥
विशालात्रिफलारोध्रनलिकादेवदारुभि. ॥ २६ ॥

हिंस्राकोशातकीस्राद्रीतालपर्णीजयन्तिभिः ॥
स्थूलकाकादनीशाल्लनाकुलीवृषपर्णिभिः ॥ २७ ॥
वृश्चिकालीहस्तिकर्णैश्च सुखोष्णैर्लेपनं हितम् ॥
अथानिलोत्थे श्वयथौ मासार्द्धं त्रिवृतं पिबेत् ॥ २८ ॥
तैलमैरण्डजं वातविड्विबन्धे तदेव तु ॥
प्राग्भक्तं पयसा युक्तं रसैर्वा कारयेत्तथा ॥ २९ ॥
स्वेदाभ्यङ्गान्ससीरघ्नाँल्लेपसेकाङ्गगे पुनः ॥
मातुलुङ्गाग्निमन्थेन शुण्ठीहिंस्राम्सराह्वयैः ॥ ३० ॥
पैत्ते तिक्तं पिबेत्सर्पिन्यग्रोधाद्येन वा घृतम् ॥
क्षीरं तृड्दाहमोहेषु लेपाभ्यङ्गाश्च शीतलाः ॥ ३१ ॥
पटोलमूलत्रायन्तीयष्ट्याह्वकटुकाभयाः ॥
दारु दार्वी हिमं दन्ती विशाला निचुलं कणा ॥ ३२ ॥
तैः क्वाथः सघृतः पीतो हन्त्यन्तस्तापतृड्भ्रमान् ॥
ससन्निपातवीसर्पशोफदाहविषज्वरान् ॥ ३३ ॥
आरग्वधादिना सिद्धं तैलं श्लेष्मोद्भवे पिबेत् ॥
स्रोतोविबन्धे मन्देऽग्नावरुचौ स्तिमिताशयः ३४ ॥
क्षारचूर्णासवारिष्टमूत्रतक्राणि शीलयेत् ॥
कृष्णापुराणपिण्याकशिग्रुत्वक्सिकतातसीः ॥ ३५ ॥
प्रलेपोन्मर्दने युञ्ज्यात्सुखोष्णा मूत्रकल्किताः ॥
सिद्धे मूत्राम्भसि स्नानं कुष्ठतर्कारिचित्रकैः ॥ ३६ ॥
कुलत्थनागराभ्यां वा चण्डागुरुविलेपने ॥
कालाजशृङ्गीसरलवस्तगन्धाह्वयाह्वयाः ॥ ३७ ॥

एकैषिका च लेप. स्याच्छ्वयथावेकगात्रजे ॥
यथादोप यथासन्न शुद्धि रक्तावसेचनम् ॥ ३८ ॥
कुर्वीत मिश्रदोपे तु दोपोद्रेकवलात्क्रियाम् ॥ ३९ ॥
अजाजिपाठाघनपञ्चकोलव्याघ्रीरजन्य सुखतोयपीताः॥
शोफ त्रिदोष चिरज प्रवृद्ध निघ्नन्त्ति भूनिम्वमहौपधैश्च४०
अमृताद्वितय शिवाटिका सुरकाष्ठ सपुर सगोजलम् ॥
श्वयथूदरकुष्ठपाण्डुताक्रिमिमेहोर्ध्वकफानिलापहम् ॥४१॥
इति निजमधिकृत्य प्रयसुक्तंक्षतजनितेक्षतज विशोधनीयम्।
श्रुतिहिमघृतलेपसेकरेकैर्विपजनित विपजिच्च शोफइष्टम्४२
ग्राम्यानूप पिशितमवल शुष्कशाक तिलान्न
गौड पिष्टान्न दधि सलवण विज्जल मद्यमम्लम्॥
धानावल्लूरसमशनमथो गुर्वसात्म्य विदाहि
स्वप्न रात्रौ श्वयथुगदवान्वर्जयेन्मैथुन च ॥ ४३ ॥

इत्यष्टाङ्गहृदयसहितायां चिकित्सास्थाने सप्तदशोऽध्याय. ॥ १७ ॥



## अष्टादशोऽध्यायः ।

आदावेव विसर्पेषु हित लङ्घनरूक्षणम् ॥
रक्तावसेको वमन विरेक. स्नेहन न तु ॥ १ ॥
प्रच्छर्दन विसर्पघ्न सयष्टीन्द्रयव फलम् ॥
पटोलपिप्पलीनिम्बपल्लवैर्वा समन्वितम् ॥ २ ॥

रसेन शुक्तं त्रायन्त्या द्राक्षायास्त्रैफलेन वा ॥
विरेचनं त्रिवृच्चूर्णं पयसा सर्पिषाऽथवा ॥ ३ ॥
योज्यं कोष्ठगते दोषे विशेषेण विशोधनम् ॥
अविशोध्यस्य दोषेल्प शमनं चन्दनोत्पलम् ॥ ४ ॥
मस्तुनिम्बपटोलं वा पटोलादिकमेव वा ॥
सारिवामलकोशीरमुस्तं वा क्वथितं जले ॥ ५ ॥
दुरालभां पर्पटकं गुडूचीं विश्वभेषजम् ॥
पाक्यं शीतकषायं वा तृष्णावीसर्पवान्पिबेत् ॥ ६ ॥
दार्वीपटोलकटुकामसूरत्रिफलास्तथा ॥
सनिम्बयष्टीत्रायन्तीः क्वथिता घृतमूर्च्छिताः ॥ ७ ॥
शाखादुष्टे तु रुधिरे रक्तमेवादितो हरेत् ॥
त्वङ्मांसस्नायुसंक्लेदो रक्तक्लेदाद्धि जायते ॥ ८ ॥
निरामे श्लेष्मणि क्षीणे वातपित्तोत्तरे हितम् ॥
घृतं तिक्तं महातिक्तं शृतं वा त्रायमाणया ॥ ९ ॥
निर्हृतेऽस्त्रे विशुद्धेऽन्तर्दोषे त्वङ्मांससन्धिगे ॥
बहिःक्रिया प्रदेहाद्या सद्यो वीसर्पशान्तये ॥ १० ॥
शताह्वामुस्तवाराहीवंशार्तगलधान्यकम् ॥
सुराह्वा कृष्णगन्धा च कुष्ठं वा लेपनं चले ॥ ११ ॥
न्यग्रोधादिगणः पित्ते तथा पद्मोत्पलादिकम् ॥
न्यग्रोधपादास्तरुणाः कदलीगर्भसंयुताः ॥ १२ ॥
बिसग्रन्थिश्च लेपः स्याच्छतधौतघृताप्लुतः ॥
पद्मिनीकर्दमः शीतः पिष्टं मौक्तिकमेव वा ॥ १३ ॥

शख. प्रवालं शुक्तिर्वा गैरिकं वा घृतान्वितम्॥
त्रिफलापद्मकोशीरसमङ्गाकरवीरकम्॥ १४॥
नलमूलान्यनन्ता च लेप. श्लेष्मविसर्पहा॥
धवसप्ताह्वखदिरदेवदारुकुरण्टकम्॥ १५॥
समुस्तारग्वधलेपो वर्गो वा वरणादिक॥
आरग्वधस्य पत्राणि त्वच श्लेष्मान्तकोद्भवा.॥१६॥
इन्द्राणीशाक काकाह्वाशिरीषकुसुमानि च॥
सेकव्रणाभ्यङ्गहविर्लेपचूर्णान्यथायथम्॥ १७॥
एतैरेवौषधै कुर्य्याद्वायौ लेपा घृताधिका॥
कफस्थानगते सामे पित्तस्थानगतेऽथवा॥ १८॥
आशीतोष्णा हिता रूक्षा रक्तपित्ते घृतान्विता.॥
अत्यर्थशीतास्तनवस्तनुव स्त्रान्तरास्थिता॥ १९॥
योज्या क्षणे क्षणेऽन्येऽन्ये मन्दवीर्य्यास्त एव च॥
ससृष्टदोषे ससृष्टमेतत्कर्म्म प्रशस्यते॥ २०॥
शतधौतघृतेनाग्नि प्रदिह्यात्केवलेन वा॥
सेचयेद्घृतमण्डेन शीतेन मधुकाम्बुना॥ २१॥
शीताम्भसाम्भोजजलै क्षीरेणेक्षुरसेन वा॥
पानलेपनसेकेषु महातिक्त पर हितम्॥ २२॥
ग्रन्थ्याख्ये रक्तपित्तघ्न कृत्वा सम्यग्यथोदितम्॥
कफानिलघ्न कर्मेष्ट पिण्डस्वेदोपनाहनम्॥ २३॥
ग्रन्थिवीसर्पशूले तु तैलेनोष्णेन सेचयेत्॥
दशमूलविपक्वेन तद्वन्मूत्रैर्जलेन वा॥ २४॥

सुखोष्णया प्रदिह्याद्वा पिष्ट्या कृष्णगन्धया ॥
नक्तमालत्वचा शुष्कमूलकैः कलिनाऽथवा ॥ २५ ॥
दन्तीचित्रकमूलत्वक्सौधार्कपयसी गुडः ॥
भल्लातकास्थिकासीसलेपो भिन्द्याच्छिलामपि ॥ २६ ॥
वहिर्मार्गाश्रितं ग्रन्थिं किं पुनःकफसम्भवम् ॥
दीर्घकालस्थितं ग्रन्थिमेभिर्भिन्द्याच्च भेषजैः ॥ २७ ॥
मूलकानांकुलत्थानांयूषैःसक्षारदाडिमैः ॥
गोधूमान्नैर्यवान्नैश्च ससीधुमधुशर्करैः ॥ २८ ॥
सक्षौद्रैर्वारुणीमण्डैर्मातुलुङ्गरसान्वितैः ॥
त्रिफलायाःप्रयोगैश्चपिप्पल्याःक्षौद्रसंयुतैः ॥ २९ ॥
देवदारुगडूच्योश्च प्रयोगैर्गिरिजस्यच ॥
मुस्तभल्लातसक्तूनां प्रयोगैर्माक्षिकस्य च ॥ ३० ॥
धूमैर्विरेकैः शिरसः पूर्वोक्तैर्गुल्मभेदनैः ॥
तप्तायोहेमलवणपाषाणादिप्रपीडनैः ॥ ३१ ॥
आभिःक्रियाभिः सिद्धाभिर्विविधाभिर्बले स्थितः ॥
ग्रन्थिःपाषाणकठिनो यदि नैवोपशाम्यति ॥ ३२ ॥
अथास्य दाहः क्षारेण शरैर्हैमापि वा हितः ॥
पाकिभिः पाचयित्वा तु पाटयित्वा तमुद्धरेत् ॥ ३३ ॥
मोक्षयेद्बहुशश्चास्य रक्तमुत्क्लेशमागतम् ॥
पुनश्चापहृते रक्ते वातश्लेष्मजिदौषधम् ॥ ३४ ॥
प्रक्लिन्ने दाहपाकाभ्या बाह्यान्तर्व्रणवद्धितम् ॥
दार्वीविडङ्गकंपिल्लैः सिद्धं तैलं व्रणे हितम् ॥ ३५ ॥

दूर्वास्वरससिद्धं तु कफपित्तोत्तरे घृतम् ॥
एकत. सर्वकर्म्माणि रक्तमोक्षणमेकत ॥ ३६ ॥
विसर्पो नह्यसंसृष्ट' सोऽस्रपित्तेन जायते ॥
रक्तमेवाश्रयश्चास्य वहुशोऽस्र हरेदतः ३७ ॥
न घृत वहुदोषाय देय यत्र विरेचनम् ॥
तेन दोषो ह्युपस्तब्धस्त्वग्रक्तपिशित पचेत् ॥ ३८ ॥

इत्यष्टाङ्गहृदयसंहिताया चिकित्सास्थाने अष्टदशोऽध्याय ॥ १८ ॥

## एकोनविंशोऽध्यायः।

अथात. कुष्ठचिकित्सित व्याख्यास्याम. ।
कुष्ठिन स्नेहपानेन पूर्वं सर्वमुपाचरेत् ॥
तत्र वातोत्तरे तैल घृतं वा साधिन हितम् ॥ १ ॥
दशमूलामृतैरण्डशार्ङ्गर्ष्टामेषश्रृङ्गिभि ॥
पटोलनिम्बकटुकादार्वीपाठादुरालभा ॥ २ ॥
पर्पटं त्रायमाणाञ्च पालाश पाचयेदपाम् ॥
द्र्याढकेऽष्टाशशेषेण तेन कर्षोन्मितैस्तथा ॥ ३ ॥
त्रायन्तीमुस्तभूनिम्बकलिङ्गकणचन्दनैः ॥
सर्पिषोद्वादशपलं पचेत्तत्तिक्तक जयेत् ॥ ४ ॥
पित्तकुष्ठपरीसर्पपिटिकादाहतृड्भ्रमान् ॥
कण्डूपाण्ड्वामयान्गण्डान्दुष्टनाडीव्रणापचीः ॥ ५ ॥

विस्फोटविद्रधीगुल्मशोफोन्मादमदानपि ॥
हृद्रोगतिमिरव्यङ्गग्रहणीश्वित्रकामलाः ॥ ६ ॥
भगन्दरमपस्मारमुदरं प्रदरंगरम् ॥
अर्शोऽस्त्रपित्तमन्यांश्च सुकृच्छ्रान्पित्तजान्गदान् ॥ ७ ॥
सप्तच्छदः पर्पटकः शम्याकः कटुका वचा ॥
त्रिफला पद्मकं पाठा रजन्यौ सारिवे कणे ॥ ८ ॥
निम्बचन्दनयष्ट्याह्वविशालेन्द्रयवामृताः ॥
किराततिक्तकं सेव्यं वृषो मूर्वा शतावरी ॥ ९ ॥
पटोलातिविषामुस्तात्रायन्ती धन्वयासकम् ॥
तैर्जलेऽष्टगुणे सर्पिर्द्विगुणामलकीरसे ॥ १० ॥
सिद्धं तिक्तान्महातिक्तं गुणैरभ्यधिकं मतम् ॥
कफोत्तरे घृतं सिद्धं निम्बसप्ताह्वचित्रकैः ॥ ११ ॥
कुष्ठोषणवचाशालप्रियालचतुरङ्गुलैः ॥
सर्वेषु चारुष्करजं तौवरं सार्षपं पिबेत् ॥ १२ ॥
स्नेहं घृतं वा कृमिजित्पथ्याभल्लातके शृतम् ॥
आरग्वधस्य मूलेन शतकृत्वः शृतं घृतम् ॥ १३ ॥
पिबन्कुष्ठं जयत्याशु भजन्सखादिरं जलम् ॥
एभिरेव यथास्वं च स्नेहैरभ्यञ्जनं हितम् ॥ १४ ॥
स्निग्धस्य शोधनं योज्यं विसर्पे यदुदाहृतम् ॥
ललाटहस्तपादेषु शिराश्चास्य विमोक्षयेत् ॥ १५ ॥
प्रस्थानमल्पके कुष्ठे शृङ्गाद्याश्च यथायथम् ॥
स्नेहैराप्याययेच्चैनं कुष्ठघ्नैरन्तरान्तरा ॥ १६ ॥

मुक्तरक्तविरिक्तस्य रिक्तकोष्ठस्य कुष्ठिनः ॥
प्रभञ्जनस्तथा ह्यस्य न स्याद्देहप्रभञ्जनः ॥ १७ ॥
वासामृतानिम्बवरापटोलव्याघ्रीकरञ्जोदककल्कपक्वम् ॥
सर्पिर्विसर्पज्वरकामलासृक्कुष्ठापहं वज्रकमामनन्ति॥१८॥
त्रिफलात्रिकटुद्विकण्टकारीकटुकाकुम्भनिकुम्भराजवृक्षैः ॥
सवचातिविषाग्निकैः सपाठैः पिचुभागैर्नववज्रदुग्धसुष्ट्या१९

पिष्टैः सिद्धं सर्पिषः प्रस्थमेभिः
क्रूरे कोष्ठे स्नेहनं रेचनं च ॥
कुष्ठश्वित्रप्लीहवर्ध्मार्श्मगुल्मान्ह-
न्यात्कृच्छ्रास्तन्महावज्रकाख्यम् ॥ २० ॥

दन्त्याढकमपां द्रोणे पक्त्वा तेन घृतं पचेत् ॥
धामार्गवपले पीतं तदूर्ध्वाधो विशुद्धिकृत् ॥ २१ ॥
आवर्त्तकीतुलान्द्रोणे पचेदष्टांशशेषितम् ॥
तन्मूलैस्तत्र निर्यूहे घृतप्रस्थं विपाचयेत् ॥ २२ ॥

पीत्वा तदेकदिवसान्तरितं सुजीर्णे
भुञ्जीत कोद्रवसुसंस्कृतकाञ्जिकेन ॥
कुष्ठं किलासमपचीश्च विजेतुमिच्छ-
न्निच्छन्प्रजाश्च विपुला ग्रहणं स्मृतिश्च ॥ २३ ॥

यतैर्लेलीतकवसा क्षौद्रजातीरसान्विता ॥
कुष्ठघ्नी समसर्पिर्वा सगायत्र्यसनोदका ॥ २४ ॥
शालयो यवगोधूमाः कोरदूषाः प्रियङ्गवः ॥
मुद्गा मसूरास्तुवरी तिक्तशाकानि जाङ्गलम् ॥ २५ ॥

वरापटोलखदिरनिम्बारुष्करयोजितम् ॥
मद्यान्यौषधगर्भाणि मथितं चेक्षुराजितम् ॥ २६ ॥
अन्नपानं हितं कुष्ठे न त्वम्ललवणोषणम् ॥
दधिदुग्धगुडानूपतिलमाषांस्त्यजेत्तराम् ॥ २७ ॥
पटोलमूलत्रिफलाविशालाः पृथक्त्रिभागाः पचितास्त्रिशाणाः
स्युस्त्रायमाणा कटरोहिणी च भागार्द्धिके नागरपादयुक्ते २८
एतत्पलं जर्जरितं विपक्कं जले पिबेद्द्वयोर्षविशोधनाय ॥
जीर्णे रसैर्धन्वमृगद्विजानां पुराणशाल्योदनमाददीत ॥२९॥
कुष्ठं किलासं ग्रहणीप्रदोषमर्शांसि कृच्छ्राणि हलीमकञ्च ॥
षड्रात्रियोगेन निहन्ति चैतद्धृद्वस्तिशूलं विषमज्वरञ्च ॥३०॥
विडङ्गसारामलकाभयानां पलत्रयं त्रीणि पलानि कुम्भात् ॥
गुडस्य च द्वादशमासमेष जितात्मना हन्त्युपयुज्यमानः॥३१॥

कुष्ठं श्वित्रं श्वासकासोदरार्शो-
मेहप्लीहग्रन्थिरुग्जन्तुगुल्मान् ॥
सिद्धं योगं प्राह यक्षो मुमुक्षोर्भिक्षोः
प्राणान्माणिभद्रःकिलेमम् ॥ ३२ ॥

भूनिम्बनिम्बत्रिफलापद्मकातिविषाकणाः ॥
मूर्वापटोलीद्विनिशापाठातिक्तेन्द्रवारुणीः ॥ ३३ ॥
सकलिङ्गवचास्तुल्या द्विगुणाश्च यथोत्तरम् ॥
लिह्याद्दन्तीत्रिवृद्ब्राह्मीश्चूर्णिता मधुसर्पिषा ॥ ३४ ॥
कुष्ठमेहप्रसुप्तीनां परमं स्यात्तदौषधम् ॥
वराविडङ्गकृष्णा वा लिह्यात्तैलाज्यमाक्षिकैः ॥ ३५ ॥

काकोदुम्बरिकावेल्लनिम्बाब्दव्योषफल्कवान् ॥
हन्ति वृक्षकनिर्यूह पानात्सर्वास्त्वगामयान् ॥ ३६ ॥
कुटजाग्निनिम्बनृपतरुखदिरासनसप्तपर्णनिर्यूहे ॥
सिद्धा मधुघृतयुक्ता. कुष्ठघ्नीर्भक्षयेदभया. ॥ ३७ ॥
दार्वीखदिरनिम्बाना त्वक्क्काथ' कुष्ठसूदन' ॥
निशोत्तमानिम्बपटोलमूलतिक्तावचालोहितयष्टिकाभिः ॥
कृत. कषाय कफपित्तकुष्ठ सुसेवितो धर्म्म इवोच्छिनत्ति ३८
एभिरेव च शृत घृतमुग्य भेषजैर्जयति मारुतकुष्ठम् ॥
कल्पयेत्खदिरनिम्बगुडूचीदेवदारुरजनी. पृथगेवम् ॥ ३९ ॥

पाठादार्वीवह्निघुणेष्टाकटुकाभि
र्मूत्र युक्त शक्रयवैश्चोष्णजल च ॥
कुष्ठी पीत्वा मासमरुस्स्याद्गुदकीली
मेही शोफी पाण्डुरजीर्णी क्रिमिमाश्च ॥ ४० ॥
लाक्षादन्तीमधुरसवराह्वीपिपाठाविडङ्ग
प्रत्यक्पुष्पीत्रिकटुरजनीसप्तपर्णाटरूषम् ॥
रक्तानिम्ब सुरतरुकृत पञ्चमूल्यौ च चूर्ण पीत्वा
मास जयति हितभुग्गव्यमूत्रेण कुष्ठम् ॥ ४१ ॥
निशाकणानागरवेल्लतौवर
सवह्निताप्य क्रमशो विवर्धितम् ॥
गवाम्बु पीतं वटकीकृत तथा
निहन्ति कुष्ठानिसुदारुणान्यपि ॥ ४२ ॥

त्रिकटूत्तमातिलारुष्कराज्यमाक्षिकसितोपलाविहिता ॥
गुलिका रसायनं स्यात्कुष्ठजिच्च वृष्या च सप्तसमा ॥४३॥
चन्द्रशकलाग्निरजनीविडङ्गतुवरथ्यरुष्करत्रिफलाभिः ॥
वटका गुडाशक्लृप्ताः समस्तकुष्ठानि नाशयन्त्यभ्यस्ताः॥४४॥

विडङ्गभल्लातकवाकुचीनां
सद्वीपिवाराहिहरीतकीनाम् ॥
सलाङ्गलीकृष्णतिलोपकुल्या गुडेन
पिण्डी विनिहन्ति कुष्ठम्॥ ४५ ॥
शशाङ्कलेखा सविडङ्गमूला
सपिप्पलीका सहुताशमूला ॥
सायोमला सामलका सतैला कुष्ठानि
कृच्छ्राणि निहन्ति लीढा ॥ ४६ ॥

पथ्यातिलगुडैः पिण्डी कुष्ठं सारुष्करैर्जयेत् ॥
गुडारुष्करजन्तुघ्नसोमराजीकृताऽथवा ॥ ४७ ॥
विडङ्गाद्रिजतु क्षौद्रं सर्पिष्मत्खादिरं रजः ॥
किटिभश्वित्रदद्रुघ्नं खादेन्मिताहिताशनः ॥ ४८ ॥
सितातैलकृमिघ्नानि धात्र्यामलकपिप्पलीः ॥
लिहानः सर्वकुष्ठानि जयत्यतिगुरूण्यपि ॥ ४९ ॥
मुस्तं व्योषं त्रिफला मञ्जिष्ठादारुपञ्चमूले द्वे ॥
सप्तच्छदनिम्बत्वक्सविशालाचित्रकोमूर्वा ॥ ५० ॥
चूर्णं तर्पणभागैर्नवभिः संयोजितं समध्वंशम् ॥
नित्यं कुष्ठनिबर्हणमेतत्प्रायोगिकं खादन् ॥ ५१ ॥

श्वयथुं सपाण्डुरोगं श्वित्रं ग्रहणीप्रदोषमर्शांसि ॥
बध्मभगन्दरपिडिका कण्डूकोठापचीर्हन्ति ॥ ५२ ॥
रसायनप्रयोगेण तुवरास्थीनि शीलयेत् ॥
भल्लातकं वाकुचिकां वह्निमूलं शिलाह्वयम् ॥ ५३ ॥
इति दोषे विजितेऽन्तस्त्वक्स्थे शमनं बहिः प्रलेपादिहितम्॥
तीक्ष्णालेपोत्क्लिष्टं कुष्ठं हि विवृद्धिमेति मलिने देहे ॥ ५४ ॥
स्थिरकठिनमण्डलानां कुष्ठानां पोटलैर्हितः स्वेदः ॥
स्विन्नोत्सन्नं कुष्ठं शस्त्रैर्लिखितं प्रलेपनैर्लिम्पेत् ॥ ५५ ॥
येषु न शस्त्रं क्रमते स्पर्शेन्द्रियनाशनेषु कुष्ठेषु ॥
तेषु निपात्यः क्षारो रक्तं दोषं च विस्राव्यम् ॥ ५६ ॥
लेपोऽतिकठिने परुषे सुप्ते कुष्ठे स्थिरे पुराणे च॥
पीतागदस्य कार्यो विषैः समन्त्रागदैश्चानु ॥ ५७ ॥
स्तब्धातिसुप्तसुप्तान्यस्वेदनकुण्डलानि कुष्ठानि ॥
घृष्टानि शुष्कगोमयफेनकशस्त्रैः प्रदेह्यानि ॥ ५८ ॥
मुस्तात्रिफलामदनं करञ्ज आरग्वधकलिङ्गयवाः ॥
सप्ताह्वकुष्ठफलिनीदार्व्यः सिद्धार्थकं स्नानम् ॥ ५९ ॥
एष कषायो वमनं विरेचनं वर्णकरस्तथोद्धर्षः ॥
त्वग्दोषकुष्ठशोफप्रबोधनः पाण्डुरोगघ्नः ॥ ६० ॥
करवीरनिम्बकुटजाच्छम्याकाच्चित्रकाच्च मूलानाम् ॥
मूत्रे दर्वीलेपी क्वाथो लेपनं कुष्ठघ्नः ॥ ६१ ॥
श्वेतकरवीरमूलं कुटजकरञ्जात्फलं त्वचो दार्व्याः ॥
सुमनःप्रवालयुक्तो लेपः कुष्ठापहः सिद्धः ॥ ६२ ॥

शैरीषीत्वक्पुष्पं कार्पास्याराजवृक्षपत्राणि ॥
पिष्टा च काकमाची चतुर्विधः कुष्ठहा लेपः ॥६३॥
व्योषसर्षपनिशागृहधूमैर्यावशूकपटुचित्रककुष्ठैः ॥
कोलमात्रगुटिकार्द्धविषांशाः श्वित्रकुष्ठहरणो वरलेपः ६४

निम्बं हरिद्रे सुरसं पटोलं
कुष्ठाश्वगन्धे सुरदारुशिग्रुः ॥
ससर्षपं तुम्बरुधान्यवन्यं चण्डा-
वचूर्णानि समानि कुर्य्यात् ॥ ६५ ॥
तैस्तक्रपिष्टैः प्रथमं शरीरं
तैलाक्तमुद्वर्त्तयितुं यतेत ॥
तेनास्य कण्डूपिटिकाः सकोठाः
कुष्ठानि शोफाश्च शमं व्रजन्ति ॥६६ ॥
मुस्तामृतासङ्गकटङ्कटेरी-
कासीसकाम्पिल्लककुष्ठरोध्राः ॥
गन्धोपलः सर्जरसो विडङ्गं मनः-
शिलाले करवीरकत्वक् ॥ ६७ ॥
तैलाक्तगात्रस्य कृतानि चूर्णा-
न्येतानि दद्यादवचूर्णनार्थम् ॥
दद्रूःसकण्डूः किटिभानि पामा
विचर्चिका चेतितथा न सन्ति ॥ ६८ ॥

स्नुग्गण्डे सर्षपात्कल्कः कुकूलानलपाचितः ॥
लेपाद्विचर्चिकां हन्ति रागवेग इव त्रपाम् ॥ ६९ ॥

मन.शिलाले मरिचानि तैलमार्कं पय कुष्ठहर प्रदेह ॥
तथा करञ्जप्रपुनाटवीजकुष्ठान्वितंगोसलिलेन पिष्टम् ॥७०॥
गुग्गुलुमरिचविडङ्गै. सर्षपकासीससर्जरसमुस्तै. ॥
श्रीवेष्टकालगन्धैर्मन शिला कुष्ठकपिल्लै ॥ ७१ ॥
उभयहरिद्रासहितैश्चाक्रिकतैलेन मिश्रितैरेभि' ॥
दिनकरकराभितप्तै कुष्ठघृष्टश्चनष्टश्च ॥ ७२ ॥
मरिच तमालपत्र कुष्ठ समन शिलं सकासीसम् ॥
तैलेन युक्तमुषित सप्ताहं भाजने ताम्रे ॥ ७३ ॥
तेनालिप्तं सिध्म सप्ताहाद्धर्म्मसेविनोऽपैति ॥
मासन्नव किलासं स्नानेन विना विशुद्धस्य ॥ ७४ ॥
मयूरकक्षारजले सप्तकृत्व' परिस्रुते ॥
सिद्ध ज्योतिष्मतीतैलमभ्यङ्गात्सिध्मनाशनम् ॥७५॥
वायसजघामूल वमनीपत्राणि मूलकाद्बीजम् ॥
तक्रेण भौमवारे लेप' सिध्मापह. सिद्ध. ॥ ७६ ॥
जीवन्ती मञ्जिष्ठा दार्वी कम्पिल्लक पयस्तुत्थम् ॥
एष घृततैलपाक सिद्ध सिद्धे च सर्जरस ॥ ७७ ॥
देय समधूच्छिष्टो विपादिका तेन नश्यति ह्युक्ता ॥
चर्मैककुष्ठकिटिभ कुष्ठ शाम्यत्यलसक च ॥ ७८ ॥

मूलसप्ताह्वात्वक्छिरीषाश्वमाराद्दर्का-
न्मालत्याश्चित्रकास्फोतनिम्बात् ॥
वीजं कारञ्जं सार्षपं प्रापुनाट
श्रेष्ठा जन्तुघ्न त्र्यूषण द्वे हरिद्रे ॥ ७९ ॥

तिलतैलं साधितं तैः समूत्रै-
स्त्वग्दोषाणां दुष्टनाडीव्रणानाम् ॥
अभ्यङ्गेन श्लेष्मवातोद्भवानां
नाशायालं वज्रकं वज्रतुल्यम् ॥ ८० ॥

एरण्डतार्क्ष्यघननीपकदम्बभार्ङ्गी-
कम्पिल्लवेल्लफलिनीसुरवारुणीभिः ॥
निर्गुण्ड्यरुष्करसुराह्वसुवर्ण-
दुग्धाश्रीवेष्टगुग्गुलुशिलापटुतालविश्वैः ॥ ८१ ॥

तुल्यस्नुगर्कदुग्धं सिद्धं तैलं स्मृतं महावज्रम् ॥
अतिशयितवज्रकगुणं श्वित्रार्शोग्रन्थिमालाघ्नम् ॥८२॥

कुष्ठाश्वमारभृङ्गार्कमूत्रस्नुक्क्षीरसैन्धवैः ॥
तैलं सिद्धं विषावापमभ्यङ्गात्कुष्ठजित्परम् ॥ ८३ ॥

सिद्धं सिक्थकसिन्दूरपुरतुत्थकतार्क्ष्यजैः ॥
कच्छूं विचर्चिकां वाऽऽशु कटुतैलं नियच्छति ॥ ८४ ॥

लाक्षाव्योषं प्रापुनाटश्च वीजं
सश्रीवेष्टं कुष्ठसिद्धार्थकाश्च ॥
तक्रोन्मिश्रः स्याद्धरिद्राच लेपो-
दद्रूघ्नो मूलकोत्थश्च बीजम् ॥ ८५ ॥

चित्रकसौभाञ्जनकौ गुडूच्यपामार्गदेवदारूणि ॥
खदिरो धवश्च लेपः श्यामा दन्ती द्रवन्ती च ॥ ८६ ॥

लाक्षारसाञ्जनैलापुनर्नवाचेति कुष्ठिनां लेपाः ॥
दधिमण्डयुताः पादैः षट् प्रोक्ता मारुतकफघ्नाः ॥८७॥

जलवाप्यलोहकेसरपत्रप्लवचन्दनमृणालानि ॥
भागोत्तराणि सिद्धं प्रलेपन पित्तकफकुष्ठे ॥ ८८ ॥
तिक्तघृतैर्धौतघृतैरभ्यङ्गो दह्यमानकुष्ठेषु ॥
तैलैश्चन्दनमधुकप्रपौण्डरीकोत्पलयुतैश्च ॥ ८९ ॥
क्लेदे प्रपतति चाङ्गे दाहे विस्फोटके च चर्म्मदले ॥
शीता' प्रदेहसेका व्यधनविरेको घृतं तिक्तम् ॥ ९० ॥
खदिरवृषनिम्बकुटजाः श्रेष्ठाः कृमिजित्पटोलमधुपर्ण्य.॥
अन्तर्वहि. प्रयुक्ता. कृमिकुष्ठनुद. सगोमूत्रा ॥ ९१ ॥
वातोत्तरेषु सर्पिर्वमन श्लेष्मोत्तरेषु कुष्ठेषु ॥
पित्तोत्तरेषु मोक्षो रक्तस्य विरेचन चाग्र्यम् ॥ ९२ ॥
ये लेपा.-कुष्ठाना युज्यन्ते निर्हृतास्रदोषाणाम् ॥
सशोधिताशयाना सद्यः सिद्धिर्भवति तेपाम् ॥ ९३ ॥
दोषे हृतेऽपनीते रक्ते वाह्यान्तरे कृते शमने ॥
स्नेहे च कालयुक्ते न कुष्ठमतिवर्त्तते साध्यम् ॥ ९४ ॥
वहुदोष. संशोध्य. कुष्ठी वहुशोनुरक्षता प्राणान् ॥
दोषे ह्यतिमात्रहृते वायुर्हन्यादवलमाशु ॥ ९५ ॥

पक्षात्पक्षाच्छर्दनान्यभ्युपेया-
न्मासान्मासाच्छोधनान्यप्यधस्तात् ॥
शुद्धिर्मूर्ध्नि स्यात्त्रिरात्रात्त्रिरात्रा
त्पष्ठे पष्ठे मास्यसृङ्मोक्षणानि ॥ ९६ ॥

यो दुर्वान्तो दुर्विरिक्तोऽथवास्या-
त्कुष्ठी दोषैरुद्धतैर्व्याप्यतेऽसौ ॥
निःसन्देहं यात्यसाध्यत्वमेवं
तस्मात्कृत्स्नान्निर्दहेदस्य दोषान् ॥ ९७ ॥
व्रतदमयमसेवात्यागशीलाभियोगो
द्विजसुरगुरुपूजा सर्वसत्त्वेषु मैत्री ॥
शिवशिवसुततारा भास्कराराधनानि
प्रकटितमलपापं कुष्ठमुन्मूलयन्ति ॥ ९८ ॥

इत्यष्टाङ्गहृदयसंहितायां चिकित्सास्थाने एकोनविंशोऽध्यायः ॥ १९ ॥

---

# विंशोऽध्यायः ।

अथातः श्वित्रकृमिचिकित्सितं व्याख्यास्यामः ।
कुष्ठादपि बीभत्सं यच्छीघ्रतरञ्च यात्यसाध्यत्वम् ॥
श्वित्रमतस्तच्छान्त्यै यतेत दीप्ते यथा भवने ॥ १ ॥
संशोधनं विशेषात्प्रयोजयेत्पूर्वमेव देहस्य ॥
श्वित्रे स्रंसनमग्र्यं मलयूरस इष्यते सगुडः ॥ २ ॥
तं पीत्वाभ्यक्ततनुर्यथाबलं सूर्य्यपादसन्तापम् ॥
सेवेत विरिक्ततनुस्त्र्यहं पिपासुः पिबेत्पेयाम् ॥ ३ ॥
श्वित्रेऽङ्गे ये स्फोटा जायन्ते कण्टकेन तान्विध्यात् ॥
स्फोटेषु निःस्रुतेषु तु प्रातःप्रातःपिबेत्त्रिदिनम् ॥ ४ ॥

मलयमसन प्रियङ्गु शतपुष्पां चाम्भसा समुत्काथ्य ॥
पालाश वा क्षारं यथावल फाणितोपेतम् ॥ ५ ॥
फल्गवक्षवृक्षवल्कलानिर्यूहेणेन्दुराजिकाकल्कम् ॥
पीत्वोष्णास्थितस्य जाते स्फोटे तक्रेण भोजन निर्लवणम् ६

गव्य मूत्र चित्रकव्योपयुक्त
सर्पि.कुम्भे स्थापित क्षौद्रमिश्रम् ॥
पक्षादूर्ध्वं श्विन्निभि.पेयमेत-
त्कार्य्यं चास्मै कुष्टदृष्ट विधानम् ॥ ७ ॥

मार्कवमथवा खादेद्भृष्ट तैलेन लोहपात्रस्थम् ॥
वीजकशृतश्च दुग्ध तदनुपिवेच्छ्वित्रनाशाय ॥ ८ ॥
पूतीकार्कव्याधिघातस्नुहीना मूत्रे पिष्टा पल्लवा जातिजाश्च ॥
घ्नन्त्यालेपाच्छ्वित्रदुर्नामदद्रूपामाकोष्ठान्दुष्टनाडीव्रणाश्च ॥९॥

द्वैप दग्ध चर्म्म मातगजवा
श्वित्रे लेपस्तैलयुक्तो वरिष्ट ॥
पूतिःकीटो राजवृक्षोद्भवेन
क्षारेणाक्त श्वित्रमेकोऽपि हन्ति ॥ १० ॥
रात्रौ गोमूत्रे चासिताञ्जराङ्गा
नह्निच्छायाया शोपयेत्स्फोटहेतून् ॥
एव वारास्त्रीस्तैस्तत. श्लक्ष्णपिष्टै
स्नुह्या क्षीरेण श्वित्रनाशाय लेप. ॥ ११ ॥

अक्षतैलकृतो लेप. कृष्णसर्पोद्भवा मषी ॥
शिखिपित्त तथा दग्ध ह्रीवेर वा तदाप्लुतम् ॥ १२ ॥

कुडवो वल्गुजबीजाद्धरितालचतुर्थभागसंमिश्रः ॥
सूत्रेण गवां पिष्टः सवर्णकरणं परं श्वित्रे ॥ १३ ॥
क्षारे सुदग्धे गजलिण्डजे च गजस्य मूत्रेण परिस्रुते च ॥
द्रोणप्रमाणे दशभागयुक्तं दत्त्वा पचेद्बीजमवल्गुजानाम् १४
श्वित्रं जयेच्चिक्कणतांगतेन तेन प्रलिम्पन्बहुशः प्रघृष्टम् ॥
कुष्ठंमषीं वा तिलकालकं वा यद्वा व्रणे स्यादधिमांसजातम् १५
भल्लातकद्वीपिसुधार्कमूलंगुञ्जाफलत्र्यूषणशंखचूर्णम् ॥
तुत्थंसकुष्ठंलवणानि पञ्च क्षारद्वयं लांगलिकां च पक्त्वा १६
स्नुगर्कदुग्धे घनमायसस्थं शलाकया तद्विदधीत लेपम् ॥
कुष्ठे किलासे तिलकालकेषु मांसेषु दुर्नामसु चर्म्मकीले १७
शुद्ध्या शोणितमोक्षैर्विरूक्षणैर्भक्षणैश्च सक्तूनाम् ॥
श्वित्रं कस्यचिदेव प्रशाम्यति क्षीणपापस्य ॥ १८ ॥

यहां श्वित्रचिकित्सा समाप्त हुई ।

---

## अथ कृमिचिकित्सितम् ।

स्निग्धस्विन्ने गुडक्षीरमत्स्याद्यैः कृमिणोदरे ॥
उत्क्लेशितक्रिमिकफे शर्वरीं तां सुखोषिते ॥ १९ ॥
सुरसादिगणं मूत्रे क्राथयित्वार्द्धवारिणि ॥
तं कषायं कणागालकृमिजित्कल्कयोजितम् ॥ २० ॥
सतैलस्वर्जिकाक्षारं युञ्ज्याद्वस्ति ततोऽहनि ॥
तस्मिन्नेव निरूढं तं पाययेत विरेचनम् ॥ २१ ॥

त्रिवृत्कल्कं फलकणा कषायालोडितं ततः ॥
ऊर्ध्वाध शोधिते कुर्य्यात्पञ्चकोलयुत क्रमम् ॥ २२ ॥
कटुतिक्तकषायाणा कषायै· परिषेचनम् ॥
काले विडङ्गतैलेन ततस्तमनुवासयेत् ॥ २३ ॥
शिरोरोगनिषेधोक्तमाचरेन्मूर्द्धगेष्वनु ॥
उद्रिक्ततिक्तकटुकमल्पस्नेहश्च भोजनम् ॥ २४ ॥
विडङ्गकृष्णामारिचपिप्पलीमूलशिग्रुभि· ॥
पिबेत्सस्वर्जिकाक्षार यवागू तक्रसाधिताम् ॥ २५ ॥
रस शिरीषाकिणिहिपारिभद्रककेम्बुकात् ॥
पलाशबीजपत्तूरपूतिकाद्वा पृथक्विपचेत् ॥ २६ ॥
सक्षौद्रं सुरसादीन्वा लिह्यात्क्षौद्रयुतान्पृथक् ॥
शतकृत्वोऽश्वविट्चूर्णं विडङ्गक्वाथभावितम् ॥ २७ ॥
कृमिमान्सधुना लिह्याद्भावित वा वरारसै· ॥
शिरोगतेषु कृमिषु चूर्णं प्रधमनं च तत् ॥ २८ ॥
आखुकर्णीकिसलयै· सुपिष्टैः पिष्टमिश्रितैः ॥
पक्त्वा पूपलिका खादेद्धान्याम्लश्चपिबेदनु ॥ २९ ॥
सपञ्चकोललवणमसान्द्रं तक्रमेव वा ॥
नीपमार्कवनिर्गुण्डीपल्लवेष्वप्यय विधि· ॥ ३० ॥
विडगचूर्णमिश्रैर्वा पिष्टैर्भक्ष्यान्प्रकल्पयेत् ॥
विडङ्गतण्डुलैर्युक्तमर्द्धांशैरातपस्थितम् ॥ ३१ ॥
दिनमाक्रुष्करं तैलं पाने वस्तौ च योजयेत् ॥
सुराह्वसरलस्नेह पृथगेव प्रकल्पयेत् ॥ ३२ ॥

पुरीषजेषु सुतरां दद्याद्वस्तिविरेचने ॥
शिरोविरेकं वमनं शमनं कफजन्मसु ॥ ३३ ॥
रक्तजानां प्रतीकारं कुर्य्यात्कुष्ठचिकित्सितात् ॥
इन्द्रलुप्तविधिश्चात्र विधेयो रोमभोजिषु ॥ ३४ ॥
क्षीराणि मांसानि घृतं गुडश्च दधीनि शाकानि च पर्णवन्ति॥
समासतोऽम्लान्मधुरान्रसांश्च कृमीञ्जिहासुः परिवर्ज्जयेच्च ३५

इत्यष्टाङ्गहृदयसहितायां चिकित्सास्थाने विंशोऽध्यायः ॥ २० ॥

## एकविंशोऽध्यायः ।

अथातोवातव्याधिचिकित्सितंव्याख्यास्यामः ।
केवलं निरुपस्तम्भमादौ स्नेहैरुपाचरेत् ॥
वायुं सर्पिर्वसामज्जा तैलपानैर्नरं ततः ॥ १ ॥
स्नेहाक्रान्तं समाश्वास्य पयोभिः स्नेहयेत्पुनः ॥
यूषैर्ग्राम्योदकानूपरसैर्वा स्नेहसंयुतैः ॥ २ ॥
पायसैः कृशरैः साम्ललवणैःसानुवासनैः ॥
वातघ्नैस्तर्पणैश्चान्नैःसुस्निग्धैः स्नेहयेत्ततः ॥ ३ ॥
स्वभ्यक्तं स्नेहसंयुक्तैः शङ्कराद्यैःपुनःपुनः ॥
स्नेहाक्तं स्विन्नमङ्गन्तु वक्रंस्तब्धंसवेदनम् ॥ ४ ॥
यथेष्टमानामयितुं सुखमेव हि शक्यते ॥
शुष्काण्यपि हि काष्ठानि स्नेहस्वेदोपपादनैः ॥ ५ ॥
शक्यं कर्म्मण्यतां नेतुं किमु गात्राणि जीवताम् ॥
हर्षतोदरुगायामशोफस्तम्भग्रहादयः ॥ ६ ॥

स्विन्नस्याशु प्रशाम्यन्ति मार्दवं चोपजायते ॥
स्नेहश्च धातून्संशुष्कान्पुष्णात्याशु प्रयोजित. ॥ ७ ॥
बलमग्निबल पुष्टि प्राण चास्याभिवर्द्धयेत् ॥
असकृत्तं पुन. स्नेहै स्वेदैश्चप्रतिपादयेत् ॥ ८ ॥
तथा स्नेहमृदौ कोष्ठे न तिष्ठन्त्यनिलामयाः ॥
यद्येतेन सदोपत्वात्कर्म्मणा न प्रशाम्यति ॥ ९ ॥
मृदुभिः स्नेहसयुक्तैर्भेषजैस्त विशोधयेत् ॥
घृत तिल्वकसिद्ध वा शातलासिद्धमेव वा ॥ १० ॥
पायसैरण्डतैल वा पिबेद्दोषहर शिवम् ॥
स्निग्धाम्ललवणोष्णाद्यैराहारैर्हि मलश्चितः ॥ ११ ॥
स्रोतोरुध्वाऽनिल रुध्यात्तस्मात्तमनुलोमयेत् ॥
दुर्बलो यो विरेच्य स्यात्त निरूहैरुपाचरेत्॥ १२ ॥
दीपनै. पाचनीयैर्वा भोज्यैर्वा तद्युतैर्नरम् ॥
सशुद्धस्योत्थिते चाग्नौ स्नेहस्वेदौ पुनर्हितौ ॥ १३ ॥
आमाशयगते वायौ वमितप्रतिभोजिते ॥
सुखाम्बुना षट्चरण वचादि वा प्रयोजयेत् ॥ १४ ॥
संधुक्षितेऽग्नौ परतो विधि' केवलवातिक. ॥
मत्स्यान्नाभिप्रदेशस्थैसिद्धान्बिल्वशलाटुभि. ॥ १५ ॥
वस्तिकर्म त्वधो नाभे. शस्यते चावपीडक. ॥
कोष्ठगे क्षारचूर्णाद्या हिता. पाचनदीपना ॥ १६ ॥
हृत्स्थे पय. स्थिरासिद्ध शिरोवस्ति. शिरोगते ॥
स्नैहिक नावन धूम. श्रोत्रादीना च तर्पणम् ॥ १७ ॥

स्वेदाभ्यङ्गानि वातानि हृद्यं चान्नं त्वगाश्रिते ॥
शीताः प्रदेहा रक्तस्थे विरेको रक्तमोक्षणम् ॥ १८ ॥
विरेको मांसमेदस्थे निरूहाः शमनानि च ॥
बाह्याभ्यन्तरतः स्नेहैरस्थिमज्जागतं जयेत् ॥ १९ ॥
प्रहर्षोऽन्नं च शुक्रस्थे बलशुक्रकरं हितम् ॥
विबद्धमार्गं दृष्ट्वा तु शुक्रं दद्याद्विरेचनम् ॥ २० ॥
विरिक्तं प्रतिभुक्तं च पूर्वोक्तां कारयेत्क्रियाम् ॥
गर्भे शुष्के तु वातेन बालानां च विशुष्यताम् ॥ २१ ॥
सिताकाश्मर्य्यमधुकैः सिद्धमुत्थापने पयः ॥
स्नायुसन्धिशिरःप्राप्ते स्नेहदाहोपनाहनम् ॥ २२ ॥
तैलं सङ्कुचितेऽभ्यङ्गो माषसैन्धवसाधितम् ॥
आगारधूमलवणतैलैर्लेपः स्रुतेऽसृजि ॥ २३ ॥
सुप्तेऽङ्गे वेष्टयुक्ते तु कर्त्तव्यमुपनाहनम् ॥
अथापतानकेनार्त्तमस्रस्ताक्षमवेपनम् ॥ २४ ॥
अस्तब्धमेढ्रमस्वेदं बहिरायामवर्जितम् ॥
अखट्वाघातिनं चैनं त्वरितं समुपाचरेत् ॥ २५ ॥
तत्र प्रागेव सुस्निग्धं स्विन्नाङ्गे तीक्ष्णनावनम् ॥
स्रोतोविशुद्धये युंज्यादच्छपानं ततो घृतम् ॥ २६ ॥
विदार्य्यादिगणक्वाथदधिक्षीररसैः शृतम् ॥
नातिमात्रं तथा वायुर्व्याप्नोति सहसैव वा ॥ २७ ॥
कुलत्थयवकोलानि भद्रदार्वादिकं गणम् ॥
निःक्वाथ्यानूपमांसं च तेनाम्लैः पयसापि च ॥ २८ ॥

स्वादु स्कन्धप्रतीवापं महास्नेह विपाचयेत् ॥
सेकाभ्यङ्गावगाहान्नपाननस्यानुवासने ॥ २९ ॥
सघ्नन्ति वात ते ते च स्नेहस्वेदा सुयोजिताः ॥
वेगान्तरेषु मूर्द्धानमसकृच्चास्य रेचयेत् ॥ ३० ॥
अवपीडैः प्रधमनैस्तीक्ष्णै. श्लेष्मनिवर्हणैः ॥
श्वसनासु विमुक्तासु तथा सज्ञा स विन्दति ॥ ३१ ॥
सौवर्चलाभयाव्योषसिद्ध सर्पिश्चलेऽधिके ॥ ३२ ॥
पलाष्टकं तिल्वगतो वराया प्रस्थ पलाशं गुरुपञ्चमूलम् ॥
सैरण्डसिहीत्रिवृत घटेऽपा पक्त्वा पचेत्पादशृतेन तेन॥३३॥
दध्न.पात्रे यावशूकात्रिविल्वै.सर्पि'प्रस्थ हन्ति तत्सेव्यमानम्॥
दुष्टान्वातानेकसर्वांगसस्थान्योनिव्यापद्गुल्मवध्मोदरं च ३४
विधिस्तिल्वकवज्ज्ञेय शम्याकाशोकयोरपि ॥
चिकित्सितमिद कुर्य्याच्छुद्धवातापतानके ॥ ३५ ॥
ससृष्टदोषे ससृष्टं चूर्णयित्वा कफान्विते ॥
तुम्वुरूण्यभयाहिङ्गुपौष्कर लवणत्रयम् ॥ ३६ ॥
यवक्षाराम्बुना पेय हृत्पार्श्वार्त्यपतन्त्रके ॥
हिङ्गु सौवर्चल शुण्ठीदाडिम साम्लवेतसम् ॥ ३७ ॥
पिवेद्वा श्लेष्मपवनहृद्रोगोक्तं च शस्यते ॥
आयामयोरर्दितवद्बाह्याभ्यन्तरयो. क्रिया ॥ ३८ ॥
तैलद्रोण्या च शयनमान्तरोऽत्र सुदुस्तर. ॥
विवर्णदन्तवदनः स्रस्ताङ्गो नष्टचेतन' ॥ ३९ ॥

प्रस्विन्नश्च धनुष्कुम्भी दशरात्रं न जीवति ॥
वेगेष्वतोऽन्यथा जीवन्मन्देषु विनतो जडः ॥ ४० ॥
खञ्जःकुणिः पक्षहतः पङ्गुलो विकलोऽथवा ॥
हनुस्रंसे हनुस्निग्धस्विन्नौ स्वस्थानमानयेत् ॥ ४१ ॥
उन्नामयेच्च कुशलश्चिबुकं निवृते सुखे ॥
नामयेत्संवृते शेषमेकायामवदाचरेत् ॥ ४२ ॥
जिह्वास्तम्भे यथावस्थं कार्य्यं वातचिकित्सितम् ॥
अर्दिते नावनं मूर्ध्नि तैलं श्रोत्राक्षितर्पणम् ॥ ४३ ॥
सशोफे वमनं दाहरागयुक्ते शिराव्यधः ॥
स्नेहनं स्नेहसंयुक्तं पक्षाघाते विरेचनम् ॥ ४४ ॥
अववाहौ हितं नस्यं स्नेहश्चोत्तरभक्तिकः ॥
ऊरुस्तम्भे न च स्नेहो नच संशोधनं हितम् ॥ ४५ ॥
श्लेष्मामसेदोबाहुल्याद्युक्त्या तत्क्षपणान्यतः ॥
कुर्य्याद्रूक्षोपचारांश्च यवश्यामाककोद्रवाः ॥ ४६ ॥
शाकैरलवणैः शस्ताः किञ्चित्तैलजलैः शृतैः ॥
जाङ्गलैरघृतैर्मांसैर्मध्वम्भोऽरिष्टपायिनः ॥ ४७ ॥
वत्सकादिर्हरिद्रादिर्वचादिर्वा ससैन्धवैः ॥
आमवाते सुखाम्भोभिः पेयः षट्चरणोऽथवा ॥ ४८ ॥
लिह्यात्क्षौद्रेण वा श्रेष्ठाचव्यतिक्ता कणाघनान् ॥
कल्कं समधु वा चव्यपथ्याग्निसुरदारुजम् ॥ ४९ ॥
मूत्रैर्वा शीलयेत्पथ्यां गुग्गुलुं गिरिसम्भवम् ॥
व्योषाग्निमुस्तत्रिफलाविडङ्गैर्गुग्गुलुं समम् ॥ ५० ॥

खादन्सर्वाञ्जयेद्व्याधीन्मेदःश्लेष्मामवातजान् ॥
शाम्यत्येव कफाक्रान्तः समेदस्कः प्रभञ्जनः ॥ ५१ ॥
क्षारमूत्रान्वितान्स्वेदान्सेकानुद्वर्त्तनानि च ॥
कुर्य्याल्लिह्याच्च मूत्राढ्यैःकरञ्जफलसर्षपैः॥ ५२ ॥
मूलैर्वाप्यर्कतर्कारीनिम्बजैः ससुराह्वयैः ॥
सक्षौद्रसर्षपापक्वलोष्ठवल्मीकमृत्तिकैः ॥ ५३ ॥
कफक्षयार्थं व्यायामे सह्ये चैन प्रवर्त्तयेत् ॥
स्थलान्युल्लघयेन्नारीः शक्तितः परिशीलयेत् ॥ ५४ ॥
स्थिरतोय सर क्षेम प्रतिस्रोतो नदी तरेत् ॥
श्लेष्ममेदःक्षये चात्र स्नेहादीनवचारयेत् ॥ ५५ ॥
स्थानदूष्यादि चालोच्य कार्य्या शेषेष्वपि क्रिया ॥ ५६ ॥
सहचर सुरदारुसनागर क्वथितमम्भसि तैलविमिश्रितम् ॥
पवनपीडितदेहगति पिबेद्द्रुतविलम्बितगो भवतीच्छया ५७
रास्नामहौषधद्वीपिपिप्पलीशठिपौष्करम् ॥
पिष्ट्वा विपाचयेत्सर्पिर्वातरोगहर परम् ॥ ५८ ॥
निम्बामृतावृषपटोलनिदिग्धिकाना
भागान्पृथग्दशपलान्विपचेद्घटेऽपाम् ॥
अष्टांशशेषितरसेन पुनश्च तेन प्रस्थ
घृतस्य विपचेत्पिचुभागकल्कैः ॥ ५९ ॥
पाठाविडङ्गसुरदारुगजोपकुल्या
द्विक्षारनागरनिशामिशिचव्यकुष्ठैः॥
तेजोवतीमरिचवत्सकदीप्यकाग्नि
रोहिण्यरुष्करवचाकणमूलयुक्तैः ॥ ६० ॥

मञ्जिष्ठयातिविषया विषया यवान्या
संशुद्धगुग्गुलुपलैरपि पञ्चसंख्यैः ॥
तत्सेवितं प्रथमति प्रबलं समीरं
सन्ध्यस्थिमज्जगतमप्यथ कुष्ठमीदृक् ॥६१ ॥
नाडीव्रणार्बुदभगन्दरगण्डमाला-
जत्रूर्ध्वसर्वगदगुल्मगुदोत्थमेहान् ॥
यक्ष्मारुचिश्वसनपीनसकासशोफ-
हृत्पाण्डुरोगमदविद्रधिवातरक्तम् ॥ ६२ ॥
बलाबिल्वशृते क्षीरे घृतमण्डं विपाचयेत् ॥
तस्य शुक्तिः प्रकुञ्चो वा नस्यं वाते शिरोगते ॥ ६३ ॥
तद्वत्सिद्धा वसा नक्रमत्स्यकूर्म्मजलूकजा ॥
विशेषेण प्रयोक्तव्या केवले मातरिश्वनि ॥ ६४ ॥
जीर्णं पिण्याकं पञ्चमूलं पृथक्च क्वाथ्यं
क्वाथाभ्यामेकतस्तैलमाभ्याम् ॥
क्षीरादष्टांशं पाचयेत्तेन पानाद्वाता
नश्येयुःश्लेष्मयुक्ता विशेषात् ॥ ६५ ॥
प्रसारिणीतुलाक्वाथे तैलप्रस्थं पयः समम् ॥
द्विमेदामिशिमञ्जिष्ठाकुष्ठरास्नाकुचन्दनैः ॥ ६६ ॥
जीवकर्षभकाकोलीयुगुलामरदारुभिः ॥
कल्कितैर्विपचेत्सर्वमारुतामयनाशनम् ॥ ६७ ॥
समूलशाखस्य सहाचरस्य तुलां समेतां दशमूलतश्च ॥
पलानि पञ्चाशदभीरुतश्च पदावशेषं विपचेद्वहेऽपाम् ॥६८॥

तत्र सेव्यनखकुष्ठहिमैलास्पृक्प्रियङ्गुनलिकाम्बुशिलाजैः ॥
लोहितानलदलोहसुराह्वैः कोपनामिशितुरुष्कनतैश्च ॥ ६९ ॥
तुल्यक्षीरं पालिकैस्तैलपात्रं सिद्धं
कृच्छ्राञ्छीलितं हन्ति वातान् ॥
कम्पाक्षेपस्तम्भशोषादियुक्तान्गुल्मो-
न्मादौपीनसयोनिरोगान् ॥ ७० ॥
सहाचरतुलायास्तु रसे तैलाढकं पचेत् ॥
मूलकल्काद्दशपलं पयो दत्त्वा चतुर्गुणम् ॥ ७१ ॥
अथवा नतषड्ग्रन्थास्थिराकुष्ठसुराह्वयान् ॥
सैलानलदशैलेयक्षताह्वारक्तचन्दनान् ॥ ७२ ॥
सिद्धेऽस्मिञ्छर्कराचूर्णादष्टादशपलं क्षिपेत् ॥
भेडस्य सम्मतं तैलं तत्कृच्छ्रानिलामयान् ॥ ७३ ॥
वातकुण्डलिकोन्मादगुल्मवर्ध्मादिकाञ्जयेत् ॥
बलाशतं छिन्नरुहापादं रास्नाष्टभागिकम् ॥ ७४ ॥
जलाढकशते पक्त्वा शतभागस्थिते रसे ॥
दधिमस्त्विक्षुनिर्य्यासशुक्तैस्तैलाढकं समैः ॥ ७५ ॥
पचेत्साजपयोऽर्द्धांशं कल्कैरेभिः पलोन्मितैः ॥
शठीसरलदार्व्येलामञ्जिष्ठागुरुचन्दनैः ॥ ७६ ॥
पद्मकातिबलामुस्ताशूर्पपर्णीहरेणुभिः ॥
यष्ट्याह्वसुरसव्याघ्रनखर्षभकजीवकैः ॥ ७७ ॥
पलाशरसकस्तूरीनीलिकाजातिकोशकैः ॥
स्पृक्काकुङ्कुमशैलेयजातिकाकट्फलाम्बुभिः ॥ ७८ ॥

त्वक्कुन्दरुककर्पूरतुरुष्कश्रीनिवासकैः ॥
लवङ्गनखकक्कोलकुष्टमांसीप्रियंगुभिः ॥ ७९ ॥
स्थौणेयतगरध्यामवचामदनकप्लवैः ॥
सनागकेसरैःसिद्धे दद्याच्चात्रावतारिते ॥ ८० ॥
पत्रकल्कं ततः पूतं विधिना तत्प्रयोजितम् ॥
कासश्वासज्वरच्छर्दिमूर्च्छागुल्मक्षतक्षयान् ॥ ८१ ॥
प्लीहशोषमपस्मारमलक्ष्मीं च प्रणाशयेत् ॥
बलातैलमिदं श्रेष्ठं वातव्याधिविनाशनम् ॥ ८२ ॥

पाने नस्येऽन्वासनेऽभ्यञ्जने च
स्नेहाः काले सम्यगेते प्रयुक्ताः ॥
दुष्टान्वातानाशु शान्तिं नयेयुर्व-
न्ध्यानारीः पुत्रभाजश्च कुर्युः ॥ ८३ ॥

स्नेहस्वेदैर्द्रुतः श्लेष्मा यदा पक्वाशये स्थितः ॥
पित्तं वा दर्शयेद्रूपं बस्तिभिस्तं विनिर्जयेत् ॥ ८४ ॥

इत्यष्टाङ्गहृदयसंहितायां चिकित्सास्थाने एकविंशोऽध्यायः ॥ २१ ॥

---

## द्वाविंशोऽध्यायः ।

अथातो वातशोणितचिकित्सितं व्याख्यास्यामः ।
वातशोणितिनो रक्तं स्निग्धस्य बहुशो हरेत् ॥
अल्पाल्पं पालयन्वायुं यथादोषं यथाबलम् ॥ १ ॥

रुग्रागतोदृदाहेषु जलौकाभिर्विनिर्हरेत् ॥
शृङ्गतुम्बैश्चिमिचिमाकण्डूरुग्दूयनान्वितम् ॥ २ ॥
प्रस्थानेन शिराभिर्वा देशाद्देशान्तर व्रजेत् ॥
अङ्गम्लानौ तु न स्राव्य रूक्ष वातोत्तर च यत् ॥ ३ ॥
गम्भीर श्वयथुं स्तम्भं कम्पस्नायुशिरामयान् ॥
ग्लानिमन्याश्च वातोत्थान्कुर्य्याद्वायुरसृक्क्षयात् ॥ ४ ॥
विरेच्य. स्नेहयित्वा तु स्नेहयुक्तैर्विरेचनै. ॥
वातोत्तरे वातरक्ते पुराणं पाययेद्घृतम् ॥ ५ ॥
श्रावणीक्षीरकाकोलीक्षीरिणीजीवकै. समैः ॥
सिद्धं सर्षपकै. सर्पिः सक्षीर वातरक्तनुत् ॥ ६ ॥
द्राक्षामधूकवारिभ्या सिद्ध वा ससितोपलम् ॥
घृत पिबेत्तथा क्षीर गुडूचीस्वरसे शृतम् ॥ ७ ॥
तैलं पय शर्करा च पाययेद्वा सुमूर्च्छितम् ॥
वलाशतावरीरास्नादशमूलै सपीलुभिः ॥ ८ ॥
श्यामैरण्डस्थिराभिश्च वातार्तिघ्नं शृत पय ॥
धारोष्ण मूत्रयुक्त वा क्षीर दोषानुलोमनम् ॥ ९ ॥
पक्त्वे पक्त्वा वरीतिक्तापटोलत्रिफलामृता ॥
पिवेद्घृत वा क्षीरं वा स्वादु तिक्तकसाधितम् ॥१०॥
क्षीरेणैरण्डतैलं च प्रयोगेण पिवेन्नर ॥
वहुदोषो विरेकार्थं जीर्णे क्षीरोदनाशनः ॥ ११ ॥
कषायमभयाना वा पाययेद्घृतभर्जितम् ॥ १२ ॥

क्षीरानुपानं त्रिवृताचूर्णं द्राक्षारसेन वा ॥
निर्हरेद्वा मलं तस्य सघृतैः क्षीरवस्तिभिः ॥ १३ ॥
नहि बस्तिसमं किंचिद्वातरक्तचिकित्सितम् ॥
विशेषात्पायुपार्श्वोरुपर्वास्थिजठरार्तिषु ॥
मुस्तद्राक्षाहरिद्राणां पिबेत्क्वाथं कफोल्वणे ॥ १४ ॥
सक्षौद्रं त्रिफलाया वा गुडूचीं वा यथा तथा ॥
यथार्हस्नेहपीतं च वापितं मृदु रूक्षयेत् ॥ १५ ॥
त्रिफलाव्यूषपत्रैलात्वक्क्षीरीचित्रकत्वचाम् ॥
विडंगं पिप्पलीमूलं लोमशं वृषकं वचम् ॥ १६ ॥
ऋद्धिं लांगलिकं चव्यं समभागानि पेषयेत् ॥
कल्कैर्लिप्त्वायसीं पात्रीं मध्याह्ने भक्षयेदिदम् ॥ १७ ॥
वातास्रे सर्वदोषेऽपि परं शूलान्विते हितम् ॥
कोकिलाक्षकनिर्यूहः पीतस्तच्छाकभोजिना ॥ १८ ॥
कृपाभ्यास इव क्रोधं वातरक्तं नियच्छति ॥
पञ्चमूलस्य धात्र्या वा रसैर्लेलीतकीं वसाम् ॥ १९ ॥
खुडं सुरूढमप्यंगे ब्रह्मचारी पिबञ्जयेत् ॥
इत्याभ्यन्तरमुद्दिष्टं कर्म्म बाह्यमतः परम् ॥ २० ॥
आरनालाढके तैलं पादसर्जरसं शृतम् ॥
प्रभूते खंजितं तोये ज्वरदाहार्तिनुत्परम् ॥ २१ ॥
समधूच्छिष्टमाञ्जिष्ठं ससर्ज्जरससारिवम् ॥
पिण्डतैलं तदभ्यंगाद्वातरक्तरुजापहम् ॥ २२ ॥

दशमूले श्रृतं क्षीरं सद्य शूलनिवारणम् ॥
परिषेकोऽनिलप्राये तद्वत्कोष्णेन सर्पिषा ॥ २३ ॥
स्नेहैर्म्मधुरसिद्धैर्वा चतुर्भिः परिषेचयेत् ॥
स्तम्भाक्षेपकशूलार्तं कोष्णैर्दाहे तु शीतलै ॥ २४ ॥
तद्वद्गव्याविकच्छागै क्षीरैस्तैलविमिश्रितै ॥
निकाथैर्जीवनीयाना पञ्चमूलस्य वा लघो ॥ २५ ॥
द्राक्षेक्षुरसमद्यानि दधिमस्त्वम्लकाञ्चिकम् ॥
सेकार्थं तण्डुलक्षौद्र शर्कराम्भश्च शस्यते ॥ २६ ॥
प्रिया. प्रियवदा नार्य्यश्चन्दसार्द्रकरस्तना. ॥
स्पर्शशीताः सुखस्पर्शा घ्नन्ति दाहरुज क्लमम् ॥ २७ ॥
सरागे सरुजे दाहे रक्त हृत्वा प्रलेपयेत् ॥
प्रपौण्डरीकमञ्जिष्ठादार्वीमधुकचन्दनै. ॥ २८ ॥
ससितोपलकासेक्षुमसूरैरकसक्तुभिः ॥
लेपो रुग्दाहवीसर्परागशोफनिवर्हण ॥ २९ ॥
वातघ्नै साधित. स्निग्ध कृशरो मुद्गपायस ॥
तिलसर्षपपिण्डैश्च शूलघ्नमुपनाहनम् ॥ ३० ॥
औदका. प्रसहानूपवेसवारा सुसंस्कृता. ॥
जीवनीयौषधस्नेहयुक्ता. स्युरुपनाहने ॥ ३१ ॥
स्तम्भतोदरुगायामशोफाङ्गग्रहनाशना ॥
जीवनीयौषधै सिद्धा. सपयस्का वसाऽपि वा ॥ ३२ ॥
घृतं सहचरान्मूल जीवन्तीच्छागल पय ॥
लेप पिष्टा तिलास्तद्वद्भृष्टा. पयसि निर्वृता. ॥ ३३ ॥

क्षीरपिष्टक्षुमालेपमेरण्डस्य फलानि वा ॥
कुर्याच्छूलनिवृत्त्यर्थं शताह्वां वाऽनिलेऽधिके ॥ ३४ ॥
मूत्रक्षारसुरापक्कं घृतमभ्यञ्जने हितम् ॥
सिद्धं समधुसूक्तं वा सेकाभ्यङ्गात्कफोत्तरे ॥ ३५ ॥
गृहधूमो वचा कुष्टं शताह्वा रजनीद्वयम् ॥
प्रलेपः शूलनुद्वातरक्ते वातकफोत्तरे ॥ ३६ ॥
मधुशिग्रोर्हितं तद्वद्बीजं धान्याम्लसंयुतम् ॥
मुहूर्तलिप्तमम्लैश्च सिञ्चेद्वातकफोत्तरे ॥ ३७ ॥
उत्तानं लेपनाभ्यङ्गपरिषेकावगाहनैः ॥
विरेकास्थापनैः स्नेहपानैर्गम्भीरमाचरेत् ॥ ३८ ॥
वातश्लेष्मोत्तरे कोष्णा लेपाद्यास्तत्र शीतलैः ॥
विदाहशोफरुक्कण्डूविवृद्धिः स्तम्भनाद्भवेत् ॥ ३९ ॥
पित्तरक्तोत्तरे वातरक्ते लेपादयो हिमाः ॥
उष्णैः प्लोषोपरुग्रागस्वेदापदरणोद्भवः ॥ ४० ॥
मधुयष्ट्याःपलशतं कषाये पादशोषिते ॥
तैलाढकं समक्षीरं पचेत्कल्कैः पलोन्मितैः ॥ ४१ ॥
स्थिरातामलकीदूर्वापयस्याभीरुचन्दनैः ॥
लोहहंसपदीमांसीद्विमेदामधुपर्णिभिः ॥ ४२ ॥
काकोलीक्षीरकाकोलीशतपुष्पर्द्धिपद्मकैः ॥
जीवन्तीजीवकर्षभकत्वक्पत्रनखवालकैः ॥ ४३ ॥
प्रपौण्डरीकमञ्जिष्ठासारिवेन्द्रीवितुन्नकैः ॥
चतुःप्रयोगं वातासृक्पित्तदाहज्वरार्तिनुत् ॥ ४४ ॥

वलाकल्ककषायाभ्यां तैलं क्षीरसमं पचेत् ॥
सहस्रशतपाकं तद्वातासृग्वातरोगनुत् ॥ ४५ ॥
रसायनं मुख्यतममिन्द्रियाणां प्रसादनम् ॥
जीवनं बृंहणं स्वर्य्यं शुक्रासृग्दोषनाशनम् ॥ ४६ ॥
कुपिते मार्गसंरोधान्मेदसो वा कफस्य वा ॥
अतिवृद्ध्यानिले शस्तमादौ स्नेहनबृंहणम् ॥ ४७ ॥
कृत्वा तत्राढ्यवातोक्तं वातशोणितिकं ततः ॥
भेषजं स्नेहनं कुर्य्याद्यच्च रक्तप्रसादनम् ॥ ४८ ॥
प्राणादिकोपे युगपद्यथोद्दिष्टं यथामयम् ॥
यथासन्नं च भैषज्यं विकल्प्यं स्याद्यथाबलम् ॥ ४९ ॥
नीते निरामतां सामे स्वेदलघनपाचनैः ॥
रूक्षैश्चालेपसेकाद्यैः कुर्य्यात्केवलवातनुत् ॥ ५० ॥
शोषाक्षेपणसङ्कोचस्तम्भस्वपनकम्पनम् ॥
हनुस्रंसोऽर्दितं खाञ्ज्यं पाङ्गुल्यं खुडवातता ॥ ५१ ॥
सन्धिच्युतिः पक्षवधो मेदोमज्जास्थिगा गदाः ॥
एते स्थानस्य गाम्भीर्य्यात्सिध्येयुर्य्यत्नतो नवाः ॥ ५२ ॥
तस्माज्जयेन्नवानेतान्बलिनो निरुपद्रवान् ॥
वायौ पित्तावृते शीतामुष्णां च बहुशः क्रियाम् ॥ ५३ ॥
व्यत्यासाद्योजयेत्सर्पिर्जीवनीयं च पाययेत् ॥
धन्वमांसं यवाः शालिर्विरेकः क्षीरवान्मृदुः ॥ ५४ ॥
सक्षीरा बस्तयः क्षीरं पञ्चमूलबलाशृतम् ॥
कालेऽनुवासनं तैलं मधुरौषधसाधितम् ॥ ५५ ॥

यष्टीमधुबलातैलघृतक्षीरैश्च सेचनम् ॥
पञ्चमूलकषायेण वारिणा शीतलेन च ॥ ५६ ॥
कफावृते यवान्नानि जांगला मृगपक्षिणः ॥
स्वेदास्तीक्ष्णा निरूहाश्च वमनं सविरेचनम् ॥ ५७ ॥
पुराणसर्पिस्तैलं च तिलसर्षपजं हितम् ॥
संसृष्टे कफपित्ताभ्यां पित्तमादौ विनिर्ज्जयेत् ॥ ५८ ॥
कारयेद्रक्तसंसृष्टे वाते शोणितिका क्रियाम् ॥
स्वेदाभ्यंगरसाः क्षीरं स्नेहो मांसावृते हितः ॥ ५९ ॥
प्रमेहमेदोवातघ्नमाढ्यवातेभिषग्जितम् ॥
महास्नेहोऽस्थिमज्जस्थे पूर्वोक्तं रेतसावृते ॥ ६० ॥
अन्नावृते पाचनीयं वमनं दीपनं लघु ॥
मूत्रावृते मूत्रलानि स्वेदा उत्तरवस्तयः ॥ ६१ ॥
एरण्डतैलं वर्चःस्थे वास्तिस्नेहाश्च भेदिनः ॥
कफपित्ताविरुद्धं यद्यच्च वातानुलोमनम् ॥ ६२ ॥
सर्वस्थानावृते त्वाशु तत्कार्य्यं मातरिश्वनि ॥
अनभिष्यन्दि च स्निग्धं स्रोतसां शुद्धिकारणम् ॥ ६३ ॥
याचना बस्तयः प्रायो मधुराः सानुवासनाः ॥
प्रसमीक्ष्य बलाधिक्यं मृदुकायविरेचनम् ॥ ६४ ॥
रसायनानां सर्वेषामुपयोगःप्रशस्यते ॥
शिलाह्वस्य विशेषेण पयसा शुद्धगुग्गुलोः ॥ ६५ ॥
लेहो वा भार्ङ्गवस्तद्वदेकादशसितासितः ॥
अपाने त्वावृते सर्वं दीपनं ग्राहि भेषजम् ॥ ६६ ॥

वातानुलोमनं कार्यं मूत्राशयविशोधनम् ॥
इति सक्षेपत.प्रोक्तमावृतानाचिकित्सितम् ॥ ६७ ॥
प्राणादीना भिषक्कुर्य्याद्वितर्क्य स्वयमेव तत् ॥
उदानं योजयेदूर्ध्वमपानं चानुलोमयेत् ॥ ६८ ॥
समानं शमयेद्विद्वात्त्रिधा व्यान च योजयेत् ॥
प्राणोरक्ष्यश्चतुर्भ्योऽपि तत्स्थितौ देहसंस्थिति ॥ ६९ ॥
स्व स्व स्थान नयेदेव वृत्तान्वातान्विमार्गगान् ॥
सर्वं चावरणं पित्तरक्तससर्गवर्जितम् ॥ ७० ॥
रसायनविधानेन लशुनो हन्ति शीलित ॥
पित्तावृते पित्तहरं मरुतश्चानुलोमनम् ॥ ७१ ॥
रक्तावृतेऽपि तद्वच्च खुडोक्त यच्च भेषजम् ॥
रक्तपित्तानिलहर विविध च रसायनम् ॥ ७२ ॥
यथानिदान निर्दिष्टमिति सम्यक्चिकित्सितम् ॥
आयुर्वेदफलं स्थानमेतत्सद्योऽर्त्तिनाशनम् ॥ ७३ ॥
चिकित्सित हित पथ्य प्रायश्चित्त भिषग्जितम् ॥
भेषज शमन शस्त पर्य्यायै स्मृतमौषधम् ॥ ७४ ॥

इत्यष्टाङ्गहृदयसंहिताया चिकित्सास्थाने द्वाविंशोऽध्याय

चिकित्सास्थानञ्च समाप्तम् ।

# कल्पस्थानम् ।



## प्रथमोऽध्यायः ।

अथातो वमनकल्पमध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥
वमने मदनं श्रेष्ठं त्रिवृन्मूलं विरेचने ॥
नित्यमन्यस्य तु व्याधिविशेषेण विशिष्टता ॥ १ ॥
फलानि तानि पाण्डूनि न चातिहरितान्यपि ॥
आदायाह्नि प्रशस्तर्क्षे मध्ये ग्रीष्मवसन्तयोः ॥ २ ॥
प्रमृज्य कुशमुत्तोल्यां क्षिप्त्वा बध्वा प्रलेपयेत् ॥
गोमयेनानुमुत्तोलीं धान्यमध्ये निधापयेत् ॥ ३ ॥
मृदुभूतानि मधिवष्टगन्धानि कुशवेष्टनात् ॥
निष्कृष्य निर्गतेऽष्टाहे शोषयेत्तान्यथातपे ॥ ४ ॥
तेषां ततः सुशुष्काणामुद्धृत्यफलपिप्पलीः ॥
दधिमध्वाज्यपललैर्मृदित्वा शोषयेत्पुनः ॥ ५ ॥
ततः सुगुप्तं संस्थाप्य कार्यकाले प्रयोजयेत् ॥
अथादाय ततो मात्रां जर्जरीकृत्य वासयेत् ॥ ६ ॥
शर्वरीमधुयष्ट्या वा कोविदारस्य वा जले ॥
कर्बुदारस्य बिंब्या वा नीपस्य विदलस्य वा ॥ ७ ॥
शणपुष्प्याः सदापुष्प्याः प्रत्यक्पुष्प्युदकेऽथवा ॥
ततः पिबेत्कषायं तं प्रातर्मृदितगालितम् ॥ ८ ॥

सूत्रोदितेन विधिना सा तु तेन तथा वमेत् ॥
श्लेष्मज्वरप्रतिश्यायगुल्मान्तर्विंदधीषु च ॥ ९ ॥
प्रच्छर्दयेद्विशेषेण यावत्पित्तस्य दर्शनम् ॥
फलपिप्पलिचूर्णं वा क्वाथेन स्वेन भावितम् ॥ १० ॥
त्रिभागत्रिफलाचूर्णं कोविदारादिवारिणा ॥
पिबेज्ज्वरारुचिष्वेवं ग्रन्थ्यपच्यर्बुदोदरी ॥ ११ ॥
पित्ते कफस्थानगते जीमूतादिजलेन तत् ॥
हृद्दाहेऽधोऽस्रपित्ते च क्षीरं तत्पिप्पलीशृतम् ॥ १२ ॥
क्षैरेयी वा कफच्छर्दिप्रसेकतमकेषु तु ॥
दध्युत्तरं वा दधि वा तत्स्रुतक्षीरसम्भवम् ॥ १३ ॥
फलादिक्वाथकल्काभ्यां सिद्धं तत्सिद्धदुग्धजम् ॥
सर्पिः कफाभिभूतेऽग्नौ शुष्यद्देहे च वामनम् ॥ १४ ॥
स्वरसं फलमज्जो वा भल्लातकविधिशृतम् ॥
आदर्वीलेपनात्सिद्धं लीढ्वा प्रच्छर्दयेत्सुखम् ॥ १५ ॥
तं लेहं भक्ष्यभोज्येषु तत्कषायांश्च योजयेत् ॥
वत्सकादिप्रतीवापः कषायः फलमज्जजः ॥ १६ ॥
निम्बार्कान्यतरक्वाथसमायुक्तो नियच्छति ॥
वद्धमूलानपि व्याधीन्सर्वान्सन्तर्पणोद्भवान् ॥ १७ ॥
राटपुष्पफलश्लक्ष्णचूर्णैर्माल्यं सुरूक्षितम् ॥
वमेन्मण्डरसादीनां तृप्तो जिघ्रन्सुखं सुखी ॥ १८ ॥
एवमेव फलाभावे कल्प्यं पुष्पं शलाटु वा ॥
जीमूताद्याश्च फलवज्जीमूतं तु विशेषतः ॥ १९ ॥

प्रयोक्तव्यं ज्वरश्वासकासहिध्मादिरोगिणाम् ॥
पयः पुष्पेऽस्य निर्वृत्ते फले पेयापयस्कृताः ॥ २० ॥
लोमशं क्षीरसन्तानं दध्युत्तरमलोमशे ॥
शृते पयसि दध्यम्लं जाते हरितपाण्डुके ॥ २१ ॥
आसुत्य वारुणीमण्डं पिबेन्मृदितगालितम् ॥
कफादरोचके कासे पाण्डुत्वे राजयक्ष्मणि ॥ २२ ॥
इयं च कल्पना कार्य्या तुम्बीकोशातकीष्वपि ॥
पर्य्यागतानां शुष्काणां फलानां वेणिजन्मनाम् ॥ २३ ॥
चूर्णस्य पयसा शुक्तिं वातपित्तार्दितः पिबेत् ॥
द्वे वा त्रीण्यपि वाऽऽपोथ्य क्वाथे तिक्तोत्तमस्य वा ॥२४॥
आरग्वधादिनवकाद् आसुत्यान्यतमस्य वा ॥
विमृद्य पूतं तं क्वाथं पित्तश्लेष्मज्वरी पिबेत् ॥ २५ ॥
जीमूतचूर्णं कल्कं वा पिबेच्छीतेन वारिणा ॥
ज्वरे पैत्ते कवोष्णेन कफवातात्कफादपि ॥ २६ ॥
कासश्वासविषच्छर्दिज्वरार्त्ते कफकर्शिते ॥
इक्ष्वाकुर्वमने शस्तः प्रताम्यति च मानवे ॥ २७ ॥
फलपुष्पविहीनस्य प्रवालैस्तस्य साधितम् ॥
पित्तश्लेष्मज्वरे क्षीरं पित्तोद्रिक्ते प्रयोजयेत् ॥ २८ ॥
हृतमध्ये फले जीर्णे स्थितं क्षीरं यदा दधि ॥
स्यात्तदा कफजे कासश्वासे वम्यं च पाचयेत् ॥ २९ ॥
मस्तुना वा फलान्मध्यं पाण्डुकुष्ठविषार्दितः ॥
तेन तक्रं विपक्कं वा पिबेत्समधुसैन्धवम् ॥ ३० ॥

भावयित्वाजदुग्धेन वीजं तेनैव वा पिवेत् ॥
विषगुल्मोदरग्रन्थिगण्डेषु श्लीपदेषु च ॥ ३१ ॥
सक्तुभिर्वा पिवेन्मन्थं तुम्बीस्वरसभावितैः ॥
कफोद्भवे ज्वरे कासे गलरोगेष्वरोचके ॥ ३२ ॥
गुल्मे ज्वरे प्रसक्ते च कल्कं मासरसैः पिवेत् ॥
नरः साधु वमत्येव नच दौर्वल्यमश्नुते ॥ ३३ ॥
तुम्ब्या फलरसैः शुष्कैः सपुष्पैरवचूर्णितम् ॥
छर्दयेन्माल्यमाघ्राय गन्धसम्पत्सुखोचित ॥ ३४ ॥
कासगुल्मोदरगरे वाते श्लेष्माशयस्थिते ॥
कफे च कण्ठवक्त्रस्थे कफसंचयजेषु च ॥ ३५ ॥
धामार्गवो गदेष्विष्टः स्थिरेषु च महत्सु च ॥
जीवकर्षभकौ वीरा कपिकच्छूः शतावरी ॥ ३६ ॥
काकोली श्रावणी मेदा महामेदा मधूलिका ॥
तद्रजोभिः पृथग्लेहा धामार्गवरजोऽन्विताः ॥ ३७ ॥
कासे हृदयदाहे च शस्ता मधुसिताहृता ॥
ते सुखाम्भोऽनुपानाः स्युः पित्तोष्मसहिते कफे ॥ ३८ ॥
धान्यतुम्बरुयूषेण कल्कस्तस्य विषापहः ॥
विम्ब्याः पुनर्नवाया वा कासमर्दस्य वा रसे ॥ ३९ ॥
एकं धामार्गवं द्वे वा मानसे मृदितं पिवेत् ॥
तच्छृतक्षीरजं सर्पिः साधितं वा फलादिभिः ॥ ४० ॥
क्ष्वेडोऽतिकटुतीक्ष्णोष्णः प्रगाढेषु प्रशस्यते ॥
कुष्ठपाण्ड्वामयप्लीहशोफगुल्मगरादिषु ॥ ४१ ॥

पृथक्फलादिषट्कस्य क्वाथे मांसमनूपजम् ॥
कोशातक्या समं सिद्धं तद्रसं लवणं पिबेत् ॥ ४२ ॥
फलादिपिप्पलीतुल्यं सिद्धं क्ष्वेडरसेऽथवा ॥
क्ष्वेडक्वाथे पिबेत्सिद्धं मिश्रमिक्षुरसेन वा ॥ ४३ ॥
कुटजं सुकुमारेषु पित्तरक्तकफोदये ॥
ज्वरे विसर्पे हृद्रोगे खुडे कुष्ठे च पूजितम् ॥ ४४ ॥
सर्षपाणां मधूकानां तोयेन लवणस्य वा ॥
पाययेत्कौटजं बीजं युक्तं कृशरयाऽथवा ॥ ४५ ॥
सप्ताहं वार्कदुग्धाक्तं तच्चूर्णं पाययेत्पृथक् ॥
फलजीमूतकेक्ष्वाकुजीवन्तीजीवकोद्भवैः ॥ ४६ ॥
वमनौषधमुख्यानामिति कल्पादिगीरिता ॥
बीजेनानेन मतिमानन्यान्यपि च कल्पयेत् ॥ ४७ ॥

इत्यष्टाङ्गहृदयसंहितायां कल्पस्थाने प्रथमोऽध्यायः ॥ १ ॥

## द्वितीयोऽध्यायः ।

अथातो विरेचनकल्पमध्यायं व्याख्यास्यामः ।
कषाया मधुरा रूक्षा विपाके कटुका त्रिवृत् ॥
कफपित्तप्रशमनी रौक्ष्याच्चानिलकोपनी ॥ १ ॥
सेदानीमौषधैर्युक्ता वातपित्तकफापहैः ॥
कल्पवैशेष्यमासाद्य जायते सर्वरोगजित् ॥ २ ॥
द्विधा ख्यातं च तन्मूलं श्यामं श्यामारुणं त्रिवृत् ॥
त्रिवृदाख्यं वरतरं निरपायं सुखं तयोः ॥ ३ ॥

सुकुमारे शिशौ वृद्धे मृदुकोष्ठे च तद्धितम् ॥
मूर्च्छासंमोहहृत्कण्ठकर्षणक्षणनप्रदम् ॥ ४ ॥
श्याम तीक्ष्णाशुकारित्वादतस्तदपि शस्यते ॥
क्रूरे कोष्ठे बह्वौ दोषे क्लेशक्षामिणि चातुरे ॥ ५ ॥
गम्भीरानुगतं श्लक्ष्णमतिर्यग्विसृत च यत् ॥
गृहीत्वा विसृजेत्काष्ठं त्वच शुष्का निधापयेत् ॥ ६ ॥
अथ काले तु तच्चूर्णं किञ्चिन्नागरसैन्धवम् ॥
वातामये पिबेदम्लैः पित्ते साज्यसितामधु ॥ ७ ॥
क्षीरद्राक्षेक्षुकाश्मर्यस्वादुस्कन्धवरारसै ॥
कफामये पीलुरसमूत्रमद्याम्लकाञ्जिके ॥ ८ ॥
पञ्चकोलादिचूर्णैश्च युक्त्या युक्त कफापहे ॥
त्रिवृत्कल्ककषायेण साधित ससितो हिम ॥ ९ ॥
मधुत्रिजातसयुक्तो लेहो हृद्य विरेचनम् ॥
अजगन्धा तुगाक्षीरी विदारी शर्करा त्रिवृत् ॥ १० ॥
चूर्णित मधुसर्पिर्भ्यां लीढ्वा साधु विरिच्यते ॥
सन्निपातज्वरस्तम्भपिपासादाहपीडित ॥ ११ ॥
लिम्पेदन्तस्त्रिवृतया द्विधा कृत्वेक्षुगण्डिका ॥
एकीकृत्य पचेत्स्विन्न पुटपाकेन भक्षयेत् ॥ १२ ॥
त्वगेलाभ्या समा नीली तैस्त्रिवृत्तैश्च शर्करा ॥
चर्ण फलरसक्षौद्रसक्तुभिस्तर्पण पिबेत् ॥ १३ ॥
वातपित्तकफोत्थेषु रोगेष्वल्पानलेषु च ॥
नरेषु सुकुमारेषु निरपाय विरेचनम् ॥ १४ ॥

विडङ्गतण्डुलवरायावशूककणात्रिवृत् ॥
सर्वेभ्योऽर्धेन तल्लीढं मध्वाज्येन गुडेन वा ॥ १५ ॥
गुल्मं प्लीहोदरं कासं हलीमकमरोचकम् ॥
कफवातकृतांश्चान्यान्परिमार्ष्टि गदान्बहून् ॥ १६ ॥
विडङ्गपिप्पलीमूलत्रिफलाधान्यचित्रकम् ॥
मरीचेन्द्रयवाजाजी पिप्पलीहस्तिपिप्पलीः ॥ १७ ॥
दीप्यकं पञ्चलवणं चूर्णितं कार्षिकं पृथक् ॥
तिलतैलत्रिवृच्चूर्णभागौ चाष्टपलोन्मितौ ॥ १८ ॥
धात्रीफलरसप्रस्थांस्त्रीन्गुडार्धतुलान्वितान् ॥
पक्त्वा मृद्वग्निना खादेत्ततो मात्रामयन्त्रणः ॥ १९ ॥
कुष्ठार्शः कामलागुल्ममेहोदरभगन्दरान् ॥
ग्रहणीपाण्डुरोगांश्च हन्ति पुंसवनश्च सः ॥ २० ॥
गुडः कल्याणको नाम्ना सर्वेष्वृतुषु यौगिकः ॥
व्योषत्रिजातकाम्भोदकृमिघ्नामलकैस्त्रिवृत् ॥ २१ ॥
सर्वैः समासमासिताः क्षौद्रेण गुटिकाः कृताः ॥
मूत्रकृच्छ्रज्वरच्छर्दिकासशोषभ्रमक्षये ॥ २२ ॥
तापे पाण्ड्वामयेऽल्पेऽग्नौ शस्ताः सर्वविषेषु च ॥
त्रिवृता कौटजं बीजं पिप्पलीविश्वभेषजम् ॥ २३ ॥
क्षौद्रद्राक्षारसोपेतं वर्षाकाले विरेचनम् ॥
त्रिवृद्दुरालभामुस्तशर्करोदीच्यचन्दनम् ॥ २४ ॥
द्राक्षाम्बुना सयष्ट्याह्वं शीतलं जलदात्यये ॥
त्रिवृतां चित्रकं पाठामजाजीं सरलं वचाम् ॥ २५ ॥

स्वर्णक्षीरी च हेमन्ते चूर्णमुष्णाम्बुना पिवेत् ॥
त्रिवृता शर्करातुल्या ग्रीष्मकाले विरेचनम् ॥ २६ ॥
त्रिवृत्त्रायन्तिहपुषासातलाकटुरोहिणी. ॥
स्वर्णक्षीरीं च सचूर्ण्य गोमूत्रे भावयेत्त्र्यहम् ॥ २७ ॥
एष सर्वर्तुको योग. स्निग्धाना मलदोषहृत् ॥
श्यामात्रिवृद्दुरालम्भाहस्तिपिप्पलिवत्सकम् ॥ २८ ॥
नीलिनी कटुका मुस्ता श्रेष्ठायुक्त सुचूर्णितम् ॥
रसाज्योष्णाम्बुभि. शस्तं रूक्षाणामपि सर्वदा ॥ २९ ॥
ज्वरहृद्रोगवातासृगुदावर्त्तादिरोगिषु ॥
राजवृक्षोऽधिक पथ्यो मृदुर्मधुरशीतल ॥ ३० ॥
वाले वृद्धे क्षते क्षीणे सुकुमारे च मानवे ॥
योज्यो मृद्वनपायित्वाद्विशेषाच्चतुरगुल ॥ ३१ ॥
फलकाले परिणतं फल तस्य समाहरेत् ॥
तेषा गुणवता भार सिकतासु विनि क्षिपेत् ॥ ३२ ॥
सप्तरात्रात्समुद्धृत्यशोषयेच्चातपे तत ॥
ततो मज्जानमुद्धृत्य शुचौ पात्रे निधापयेत् ॥ ३३ ॥
द्राक्षारसेन त दद्याद्दाहोदावर्त्तपीडिते ॥
चतुर्वर्षे सुख वाले यावद्द्वादशवार्षिके ॥ ३४ ॥
चतुरगुलमज्ञो वा कषाय पाययेद्धिमम् ॥
दधिमण्डसुरामण्डधात्रीफलरसै. पृथक् ॥ ३५ ॥
सौवीरकेण वा युक्त कल्केन त्रैवृतेनवा ॥
दन्तीकषाये तन्मज्ञो गुड जीर्णं च निक्षिपेत् ॥ ३६ ॥

तमरिष्टं स्थितं मासं पाययेत्पक्षमेव वा ॥
त्वचं तिल्वकमूलस्य त्यक्त्वाभ्यन्तरवल्कलम् ॥ ३७ ॥
विशोष्य चूर्णयित्वा च द्वौ भागौ गालयेत्ततः ॥
रोध्रस्यैव कषायेण तृतीयं तेन भावयेत् ॥ ३८ ॥
कषाये दशमूलस्य तं भागं भावितं पुनः ॥
शुष्कं चूर्णं पुनः कृत्वा ततः पाणितलं पिबेत् ॥ ३९ ॥
मस्तुमूत्रसुरामण्डकोलधात्रीफलाम्बुभिः ॥
तिल्वकस्य कषायेण कल्केन च सशर्करः ॥ ४० ॥
सघृतः साधितो लेहः स च श्रेष्ठं विरेचनम् ॥
सुधा भिनत्ति दोषाणां महान्तमपि सञ्चयम्॥ ४१ ॥
आश्वेव कष्टविभ्रंशान्नैव तां कल्पयेदतः ॥
मृदौ कोष्ठेऽबले बाले स्थविरे दीर्घरोगिणि ॥ ४२ ॥
कल्प्या गुल्मोदरगरत्वग्रोगमधुमेहिषु ॥
पाण्डौ दूषीविषे शोफे दोषविभ्रान्तचेतसि ॥ ४३ ॥
सा श्रेष्ठा कण्टकैस्तीक्ष्णैर्बहुभिश्च समाचिता ॥
द्विवर्षा वा त्रिवर्षा वा शिशिरान्ते विशेषतः ॥ ४४ ॥
तां पाटयित्वा शस्त्रेण क्षीरमुद्धारयेत्ततः ॥
बिल्वादीनां बृहत्योर्वा क्वाथेन सममेकशः ॥ ४५ ॥
मिश्रयित्वा सुधाक्षीरं ततोऽङ्गारेषु शोषयेत् ॥
पिबेत्कृत्वा तु गुटिकां मस्तुमूत्रसुरादिभिः ॥ ४६ ॥
त्रिवृतादीन्नववरां स्वर्णक्षीरीं ससातलाम् ॥
सप्ताहं स्नुक्पयःपीतान्रसेनाज्येन वा पिबेत् ॥ ४७ ॥

तद्वद्ध्योपोत्तमाकुम्भनिकुम्भादीन्गुडाम्बुना ॥
नातिशुष्कं फल ग्राह्यं शंखिन्या निस्तुषीकृतम् ॥ ४८ ॥
सप्तलायास्तथा मूलं ते तु तीक्ष्णविकोपिणी ॥
श्लेष्मामयोदरगरज्वयथ्वादिषु कल्पयेत् ॥ ४९ ॥
अक्षमात्र तयो पिण्ड मदिरालवणान्वितम् ॥
हृद्रोगे वातकफजे तद्वद्गुल्मे प्रयोजयेत् ॥ ५० ॥
दन्तिदन्तास्थिर स्थूल मूल दन्तीद्रवन्तिजम् ॥
आताम्रश्यावतीक्ष्णोष्णमाशुकारि विकाशि च ॥ ५१ ॥
गुरुप्रकोपि वातस्य पित्तश्लेष्मविलायनम् ॥
तत्क्षौद्रपिप्पलीलिप्त स्वेद्य मृद्दर्भवेष्टितम् ॥ ५२ ॥
शोष्य मन्दातपेऽग्न्यर्कौ हतो ह्यस्य विकासिताम् ॥
तत्पिबेन्मस्तुमदिरातक्रपीलुरसासवैः ॥ ५३ ॥
अभिष्यन्नतनुगुल्मी प्रमेही जठरी गरी ॥
गोमृगाजरसैः पाण्डुः कृमिकोष्ठी भगन्दरी ॥ ५४ ॥
सिद्ध तत्काथकल्काभ्या दशमूलरसने च ॥
विसर्पविद्रध्यलजीकक्षादाहाञ्जयेद् घृतम् ॥ ५५ ॥
तैल तु गुल्ममेहार्शोविबन्धकफमारुतान् ॥
महास्नेह शकृच्छुक्रवातसङ्गानिलव्यथा ॥ ५६ ॥
विरेचने मुख्यतमा नवैते त्रिवृतादय ॥
हरीतकीमपि त्रिवृद्विधानेनोपकल्पयेत् ॥ ५७ ॥
गुडस्याष्टपले पथ्याविंशति स्यात्पलं पलम् ॥
दन्तीचित्रकयो कर्षौ पिप्पलीत्रिवृतोर्दश ॥ ५८ ॥

प्रकल्प्य मोदकानेवं दशमेदशमेऽहनि ॥
उष्णाम्भोऽनुपिबेत्खादेत्तान्सर्वान्विधिनाऽमुना ॥ ५९ ॥
एते निष्परिहाराः स्युः सर्वव्याधिनिवर्हणाः ॥
विशेषाद्ग्रहणीपाण्डुकण्डूकोठार्शसां हिताः ॥ ६० ॥
अल्पस्यापि महार्थत्वं प्रभूतस्याल्पकर्मताम् ॥
कुर्य्यात्संश्लेषविश्लेषकालसंस्कारयुक्तिभिः ॥ ६१ ॥
त्वक्केसराम्रातकदाडिमैलासितोपलामाक्षिकमातुलिङ्गैः ॥
मद्यैश्च तैस्तैश्च मनोऽनुकूलैर्युक्तानि देयानि विरेचनानि६२॥

इत्यष्टाङ्गहृदयसंहितायां कल्पस्थाने द्वितीयोऽध्यायः ॥ २ ॥

## तृतीयोऽध्यायः ।

अथातो वमनविरेचनव्यापत्सिद्धिं व्याख्यास्यामः ।
वमनं मृदुकोष्ठेन क्षुद्वताल्पकफेन वा ॥
अतितीक्ष्णहिमस्तोकमजीर्णे दुर्बलेन वा ॥ १ ॥
पीतं प्रयात्यधस्तस्मिन्निष्टहानिर्मलोदयः ॥
वामयेत्तं पुनः स्निग्धं स्मरन्पूर्वमतिक्रमम् ॥ २ ॥
अजीर्णिनः श्लेष्मवतो व्रजत्यूर्ध्वं विरेचनम् ॥
अतितीक्ष्णोष्णलवणमहृद्यमतिभूरि वा ॥ ३ ॥
तत्र पूर्वोदिता व्यापत्सिद्धिश्च न तथापि चेत् ॥ ४ ॥
आशयेतिष्ठति ततस्तृतीयं नावचारयेत् ॥
अन्यत्र सात्म्याद्धृद्याद्वा भेषजान्निरपायतः ॥ ५ ॥

अस्निग्धस्विन्नदेहस्य पुराण रूक्षमौषधम् ॥
दोषानुत्क्लेश्य निर्हर्तुमशक्त जनयेद्गदान् ॥ ६ ॥
विभ्रंश श्वयथु हिध्मां तमसो दर्शन तृषम् ॥
पिण्डिकोद्वेष्टन कण्डूमूर्वोः सादं विवर्णताम् ॥ ७ ॥
स्निग्धस्विन्नस्य वात्यल्पं दीप्ताग्नेर्जीर्णमौषधम् ॥
शीतैर्वा स्तब्धमासे वा समुत्क्लेश्य हरेन्मलान् ॥ ८ ॥
तानेव जनयेद्रोगानयोग सर्व एव स ॥
तं तैललवणाभ्यक्त स्विन्नप्रस्तरशंकरे ॥ ९ ॥
निरूढ जाङ्गलरसैर्भोजयित्वाऽनुवासयेत् ॥
फलमागधिकादारुसिद्धतैलेन मात्रया ॥ १० ॥
स्निग्ध वातहरैः स्नेहै पुनस्तीक्ष्णेन शोधयेत् ॥
बहुदोषस्य रूक्षस्य मन्दाग्नेरल्पमौषधम् ॥ ११ ॥
सोदावर्त्तस्य चोत्क्लेश्य दोषान्मार्ग निरुध्य तैः ॥
भृशमाध्मापयेन्नाभि पृष्ठपार्श्वशिरोरुजम् ॥ १२ ॥
श्वास विण्मूत्रवाताना सङ्ग कुर्य्याच्च दारुणम् ॥
अभ्यङ्गस्वेदवर्त्त्यादिसनिरूहानुवासनम् ॥ १३ ॥
उदावर्त्तहर सर्व कर्म्माध्मातस्य शस्यते ॥
पञ्चमूलयवक्षारवचाभूतिकसैन्धवै ॥ १४ ॥
यवागूः सुकृता शूलविबन्धानाहनाशनी ॥
पिप्पलीदाडिमक्षारहिंगुशुण्ठ्यम्लवेतसान् ॥ १५ ॥
ससैन्धवान्पिबेन्मद्यै सर्पिषोष्णोदकेन वा ॥
प्रवाहिकापरिस्रावे वेदनापरिकर्त्तने ॥ १६ ॥

पीतौषधस्य वेगानां निग्रहान्मारुतादयः ॥
कुपिता हृदयं गत्वा घोरं कुर्वन्ति हृद्ग्रहम् ॥ १७ ॥
हिध्मापार्श्वरुजाकासदैन्यलालाक्षिविभ्रमैः ॥
जिह्वां खादति निःसंज्ञो दन्तान्कटकटाययन् ॥ १८ ॥
न गच्छेद्विभ्रमं तत्र वामयेदाशु तं भिषक् ॥
मधुरैःपित्तमूर्च्छार्त्तं कटुभिः कफमूर्च्छितम् ॥ १९ ॥
पाचनीयैस्ततश्चास्य दोषशेषं विपाचयेत् ॥
कायाग्निं च बलं चास्य क्रमेणाभिप्रवर्त्तयेत् ॥ २० ॥
पवनेनातिवमतो हृदयं यस्य पीड्यते ॥
तस्मै स्निग्धाम्ललवणं दद्यात्पित्तकफेऽन्यथा ॥ २१ ॥
पीतौषधस्य वेगानां निग्रहेण कफेन वा ॥
रुद्धोऽति वा विशुद्धस्य गृह्णात्यङ्गानि मारुतः ॥ २२ ॥
स्तम्भवेपथुनिस्तोदसादोद्वेष्टार्तिभेदनैः ॥
तत्र वातहरं सर्वं स्नेहस्वेदादि शस्यते ॥ २३ ॥
बहुतीक्ष्णं क्षुधार्त्तस्य मृदुकोष्ठस्य भेषजम् ॥
हृत्वाऽऽशु विट्पित्तकफान्धातूनास्रावयेद्द्रवान् ॥ २४ ॥
तत्रातियोगमधुरैः शेषमौषधमुल्लिखेत् ॥
योज्योतिवमने रेको विरेके वमनं मृदु ॥ २५ ॥
परिषेकावगाहाद्यैः सुशीतैः स्तम्भयेच्च तम् ॥
अञ्जनं चन्दनोशीरमज्जासृक्छर्करोदकम् ॥२६ ॥
लाजचूर्णैः पिबेन्मन्थमतियोगहरं परम् ॥
वमनस्यातियोगे तु शीताम्बुपरिषेचितः॥ २७ ॥

पिबेत्फलरसैर्मन्थ सघृतक्षौद्रशर्करम् ॥
सोद्गाराया भृश छर्द्यां मूर्वाया धान्यमुस्तयोः ॥ २८ ॥
समधूकाजन चूर्णं लेहयेन्मधुसयुतम् ॥
वमनेऽन्तःप्रविष्टाया जिह्वाया कवलग्रहाः ॥ २९ ॥
स्निग्धाम्ललवणा हृद्या यूषमासरसा हिता ॥
फलान्यम्लानि खादेयुस्तस्यचान्येऽग्रतो नरा ॥ ३० ॥
नि सृतान्तु तिलद्राक्षाकल्कलिप्ता प्रवेशयेत् ॥
वाग्ग्रहानिलरोगेषु घृतमासोपसाधिताम् ॥ ३१ ॥
यवागूं तनुका दद्यात्स्नेहस्वेदौ च कालवित् ॥
अतियोगाच्च भैषज्य जीव हरति शोणितम् ॥ ३२ ॥
तज्जीवादानमित्युक्तमादत्ते जीवितं यत ॥
शुने काकाय वा दद्यात्तेनान्नमसृजा सह ॥ ३३ ॥
भुक्ते तस्मिन्वदेज्जीवमभुक्ते पित्तमादिशेत् ॥
शुक्लं वा भावित वस्त्रमावान कोष्णवारिणा ॥३४॥
प्रक्षालित विवर्णं स्यात्पित्ते शुद्ध तु शोणिते ॥
तृष्णामूर्च्छामदार्त्तस्यकुर्य्यादामरण क्रियाम् ॥ ३५ ॥
रक्तपित्तातिसारघ्नी तस्याशु प्राणरक्षणीम् ॥
मृगगोमहिषाजाना सद्यस्क जीवतामसृक् ॥ ३६ ॥
पिबेज्जीवाभिसन्धान जीव तद्ध्याशु यच्छति ॥
तदेव दर्भमृदित रक्त वस्तौ निषेचयेत् ॥ ३७ ॥
श्यामाकाश्मर्य्यमधुकदूर्वोशीरै शृत पय. ॥
घृतमण्डाजनयुत वस्ति वा योजयेद्धिमम् ॥ ३८ ॥

पिच्छाबस्तिं सुशीतं वा घृतमण्डानुवासनम् ॥
गुदं श्रुष्टं कषायैश्च स्तम्भयित्वा प्रवेशयेत् ॥ ३९ ॥
विसंज्ञं श्रावयेत्सामवेणुगीतादिनिःस्वनम् ॥ ४० ॥

इत्यष्टाङ्गहृदयसंहितायां कल्पस्थाने तृतीयोऽध्यायः ॥ ३ ॥

## चतुर्थोऽध्यायः ।



अथातो दोषहरणसाकल्यं बस्तिकल्पमध्यायं व्याख्यास्यामः॥
बला गुडूचीं त्रिफलां सरास्नां द्विपञ्चमूलं च पलोन्मितानि॥
अष्टौ पलान्यर्द्धतुला च मांसाच्छागात्पचेदप्सु चतुर्थशेषम्॥१॥
पूतो यवानीफलबिल्वकुष्ठवचाशताह्वाघनपिप्पलीनाम् ॥
कल्कैर्गुडक्षौद्रघृतैः सतैलैर्युक्तः सुखोष्णो लवणान्वितश्च॥२॥
बस्तिः परं सर्वगदप्रमाथी स्वस्थे हितो जीवनबृंहणश्च ॥
बस्तौ च यस्मिन्पठितो न कल्कः सर्वत्र दद्यादमुमेव तत्र ॥३॥
द्विपञ्चमूलस्य रसोऽम्लयुक्तः सच्छागमांसस्य स पूर्वकल्कः ॥
त्रिस्नेहयुक्तः प्रवरो निरूहः सर्वानिलव्याधिहरः प्रदिष्टः॥४॥
बला पटोली लघुपञ्चमूलं त्रायन्ति कैरण्डयवात्सुसिद्धात् ॥
प्रस्थोरसाच्छागरसार्द्धयुक्तः साध्यःपुनःप्रस्थसमः स यावत्५
प्रियङ्गुकृष्णाघनकल्कयुक्तः सतैलसर्पिर्मधुसैन्धवश्च ॥
स्याद्दीपनो मांसबलप्रदश्च चक्षुर्बलं चोपदधाति सद्यः ॥६॥
एरण्डमूलात्त्रिपलं पलाशात्तथा पलांशं लघुपञ्चमूलम् ॥
रास्नाबलाच्छिन्नरुहाश्वगन्धापुनर्नवारग्वधदेवदारु ॥७॥

फलानि चाष्टौ सलिलाढकाभ्यां विपाचयेदष्टमशेषितेऽस्मिन् ॥
वचाशताह्वाहपुषाप्रियङ्गुयष्टीकणावत्सकबीजमुस्तम् ॥ ८ ॥
दद्यात्सुपिष्टं सहतार्क्ष्यशैलमक्षप्रमाणं लवणांशयुक्तम् ॥
समाक्षिकस्तैलयुतः समूत्रो वस्तिर्जयेल्लेखनदीपनोऽसौ ॥ ९ ॥

जङ्घोरुपादत्रिकपृष्ठकोष्ठ
हृद्गुह्यशूलं गुरुतां विबन्धम् ॥
गुल्माश्मवर्ध्मग्रहणीगुदोत्था
स्तास्ताश्च रोगान्कफवातजातान् ॥ १० ॥

यष्ट्याह्वरोध्राभयचन्दनैश्च शृतं पयोऽग्र्यं कमलोत्पलैश्च ॥
सशर्कराक्षौद्रघृतं सुशीतं पित्तामयान्हन्ति सजीवनीयम् ११ ॥
रास्नां वृषं लोहितिकामनन्तां बलां कनीयस्तृणपञ्चमूल्यौ ॥
गोपाङ्गनाचन्दनपद्मकर्द्धियष्ट्याह्वरोध्राणि पलार्द्धकानि १२ ॥
निःक्वाथ्य तोयेन रसेन तेन शृतं पयोऽर्द्धाढकमम्बुहीनम् ॥
जीवन्तिमेदर्द्धिवरीविदारीवीराद्धिकाकोलिकसेरुकाभिः १३ ॥
सितोपलाजीवकपद्मरेणुप्रपौण्डरीकोत्पलपुण्डरीकैः ॥
लोहात्मगुप्तामधुयष्टिकाभिर्नागाह्वमुञ्जातकचन्दनैश्च ॥ १४ ॥

पिष्टैर्घृतक्षौद्रयुतैर्निरूह
ससैन्धवं शीतलमेव दद्यात् ॥
प्रत्यागते धन्वरसेन शाली-
न्क्षीरेण वाऽद्यात्परिषिक्तगात्रः ॥ १५ ॥
दाहातिसारप्रदरास्रपित्त-
हृत्पाण्डुरोगान्विषमज्वरं च ॥

सगुल्ममूत्रग्रहकामलादी-
न्सर्वामयान्पित्तकृतान्निहन्ति ॥ १६ ॥
पक्त्वा कुलत्थान्बृहतीं च तोये
रसस्य तस्य प्रसृता दश स्युः ॥ १७ ॥
तान्सर्षपैलासदनैः सकुष्ठैरक्षप्रमाणैः प्रसृतैश्च युक्तान् ॥
क्षौद्रस्य तैलस्य फलाह्वयस्य क्षारस्य तैलस्यससर्पिषश्च॥१८॥
दद्यान्निरूहं कफरोगिताय मन्दाग्नये चाशनविद्विषे च ॥
वक्ष्ये मृदून्स्नेहकृतो निरूहा-
न्सुखोचितानां प्रसृतैःपृथक्स्युः ॥ १९ ॥
अथेमान्सुकुमाराणां निरूहान्स्नेहवान्मृदून् ॥
कर्मणां विप्लुतानां तु वक्ष्यामि प्रसृतैः पृथक् ॥ २० ॥
क्षीराद्वौ प्रसृतौ कार्यौ मधुतैलघृतात्त्रयः ॥
खजेन मथितो वस्तिर्वातघ्नो वलवर्णकृत् ॥ २१ ॥
एकैकः प्रसृतस्तैलप्रसन्नाक्षौद्रसर्पिषाम् ॥
बिल्वादिमूलक्काथाद्वौ कौलत्थाद्वौ स वातजित् ॥ २२ ॥
पटोलनिम्वभूतीकरास्नासप्तच्छदाम्भसः ॥
प्रसृतः पृथगाज्याच्च वस्तिः सर्षपकल्कवान् ॥ २३ ॥
सपञ्चतिक्तोऽभिष्यन्दकृमिकुष्ठप्रमेहहा ॥
चत्वारस्तैलगोमूत्रदधिमण्डाम्लकाञ्जिकात् ॥ २४ ॥
प्रसृताः सर्षपैः पिष्टैर्विट्सङ्गानाहभेदनः ॥
पयस्येक्षुस्थिरारास्नाविदारीक्षौद्रसर्पिषाम् ॥ २५ ॥
एकैकः प्रसृतो बस्तिः कृष्णाकल्को वृषत्वकृत् ॥
सिद्धबस्तीनतो वक्ष्ये सर्वदा यान्प्रयोजयेत् ॥ २६ ॥

निर्व्यापदो बहुफलान्बलपुष्टिकरान्सुखान् ॥
मधुतैले समे कर्षः सैन्धवाद्विपिचुर्मिसिः ॥ २७ ॥
एरण्डमूलक्वाथेन निरूहो मधुतैलिकः ॥
रसायनं प्रमेहार्शःक्रिमिगुल्मान्त्रवृद्धिनुत् ॥ २८ ॥
सयष्टिमधुकश्चैष चक्षुष्यो रक्तपित्तजित् ॥
यापनो घनकल्केन मधुतैलरसाज्यवान् ॥ २९ ॥
पायुजघोरुवृषणवस्तिमेहनशूलजित् ॥
प्रसृतांशैर्घृतक्षौद्रवसातैलैः प्रकल्पयेत् ॥ ३० ॥
एरण्डमूलनिःक्वाथो मधुतैलः ससैन्धवः ॥
एष युक्तरथो वस्तिः सवचापिप्पलीफलः ॥ ३१ ॥
सक्वाथो मधुषड्ग्रन्थाशताह्वाहिंगुसैन्धवः ॥
सुरदारुवचारास्नावस्तिर्दोषहरः परः ॥ ३२ ॥
पंचमूलस्य निःक्वाथस्तैलं मागधिका मधु ॥
ससैन्धवः समधुकः सिद्धवस्तिरिति स्मृतः ॥ ३३ ॥
द्विपञ्चमूलत्रिफलाफलाबिल्वानि पाचयेत् ॥
गोमूत्रेण च पिष्टैश्च पाठावत्सकतोयदैः ॥ ३४ ॥
सफलैः क्षौद्रतैलाभ्यां क्षारेण लवणेन च ॥
युक्तो वस्तिः कफव्याधिपाण्डुरोगविषूचिषु ॥ ३५ ॥
शुक्रानिलविबन्धेषु वस्त्याटोपे च पूजितः ॥
मुस्तापाठामृतैरण्डबलारास्नापुनर्नवाः ॥ ३६ ॥
मञ्जिष्ठारग्वधोशीरत्रायमाणाक्षरोहिणी ॥
कनीयः पञ्चमूलं च पालिकं मदनाष्टकम् ॥ ३७ ॥

जलाढके पचेत्तच्च पादशेषं परिस्रुतम् ॥
क्षीरद्विप्रस्थसंयुक्तं क्षीरशेषं पुनः पचेत् ॥ ३८ ॥
सपादजाङ्गलरसः ससर्पिर्मधुसैन्धवः ॥
पिष्टैर्यष्टिमिसिश्यामाकलिङ्गकरसाञ्जनैः ॥ ३९ ॥
बस्तिः सुखोष्णो मांसाग्निबलशुक्रविवर्द्धनः ॥
वातासृङ्मोहमेहार्शोगुल्मविण्मूत्रसंग्रहम् ॥ ४० ॥
विषमज्वरवीसर्पवर्ध्माध्मानप्रवाहिकाः ॥
वंक्षणोरुकटीकुक्षिमन्याश्रोत्रशिरोरुजः ॥ ४१ ॥
हन्यादसृग्दरोन्मादशोफकासाश्मकुण्डलान् ॥
चक्षुष्यः पुत्रदो राज्ञां यापनानां रसायनम् ॥ ४२ ॥
मृगाणां लघुबभ्रूणां दशमूलस्य चाम्भसा ॥
हपुषामिसिगान्धेयीकल्कैर्वातहरः परम् ॥ ४३ ॥
निरूहोऽत्यर्थवृष्यश्च महास्नेहसमन्वितः ॥
मयूरं पक्षपित्तान्त्रपादविट्तुण्डवर्जितम् ॥ ४४ ॥
लघुना पञ्चमूलेन पालिकेन समन्वितम् ॥
पक्त्वा क्षीरजलेक्षीरशेषं सघृतमाक्षिकम् ॥ ४५ ॥
तद्विदारीकणायष्टीशताह्वाफलकल्कवत् ॥
बस्तिरीषत्पटुयुतः परमं बलशुक्रकृत् ॥ ४६ ॥
कल्पनेयं पृथक्कार्य्या तित्तिरिप्रभृतिष्वपि ॥
विष्किरेषु समस्तेषु प्रतुदप्रसहेषु च ॥ ४७ ॥
जलचारिषु तद्वच्च मत्स्येषु क्षीरवर्जिता ॥
गोधानकुलमार्जारशल्यकोन्दुरजं पलम् ॥ ४८ ॥

पृथग्दशपलं क्षीरे पञ्चमूलं च साधयेत् ॥
तत्पयः फलवैदेहीकल्कद्विलवणान्वितम् ॥ ४९ ॥
ससितातैलमध्वाज्यो वस्तिर्योज्यो रसायनम् ॥
व्यायाममथितोरस्कक्षीणेन्द्रियबलौजसाम् ॥ ५० ॥
विबद्धशुक्रविण्मूत्रखुडवातविकारिणाम् ॥
गजवाजिरथक्षोभभग्नजर्जरितात्मनाम् ॥ ५१ ॥
पुनर्नवत्वं कुरुते वाजीकरणसत्तमः ॥
सिद्धेन पयसा भोज्यमात्मगुप्तोच्चटेक्षुरैः ॥ ५२ ॥
स्नेहाश्चायन्त्रणान्सिद्धान्सिद्धद्रव्यैः प्रकल्पयेत् ॥
दोषघ्ना सपरीहारा वक्ष्यन्ते स्नेहवस्तयः ॥ ५३ ॥
दशमूलं बलारास्नामश्वगन्धां पुनर्नवाम् ॥
गुडूच्येरण्डभूतीकभार्ङ्गीवृषकरोहिषम् ॥ ५४ ॥
शतावरीं सहचरं काकनासां पलाशकम् ॥
यवमाषातसीकोलकुलत्थान्प्रसृतोन्मितान् ॥ ५५ ॥
वहे विपाच्य तोयस्य द्रोणशेषेण तेन च ॥
पचेत्तैलाढकं पेष्यैर्जीवनीयैः पलोन्मितैः ॥ ५६ ॥
अनुवासनमित्येतत्सर्ववातविकारनुत् ॥
अनुपानं वसा तद्वज्जीवनीयोपसाधिता ॥ ५७ ॥
शताह्वाचिरबिल्वाम्लैस्तैलं सिद्धं समीरणे ॥
सैन्धवेनाग्निवर्णेन तप्तं वाऽनिलजिद् घृतम् ॥ ५८ ॥
जीवन्तीं मदनं मेदां श्रावणीं मधुकं बलाम् ॥
शताह्वर्षभकौ कृष्णां काकनासां शतावरीम् ॥ ५९ ॥

स्वगुप्तां क्षीरकाकोलीकर्कटाख्या शठीं वचाम् ॥
पिष्ट्वा तैलघृतक्षीरे साधयेत्तच्चतुर्गुणे ॥ ६० ॥
बृंहणं वातपित्तघ्नं बलशुक्राग्निवर्द्धनम् ॥
रजःशुक्रामयहरं पुत्रीयमनुवासनम् ॥ ६१ ॥
सैन्धवं मदनं कुष्ठं शताह्वा निचुलो वचा ॥
ह्रीबेरं मधुकं भार्ङ्गी देवदारु सकट्फलम् ॥ ६२ ॥
नागरं पुष्करं मेदा चविका चित्रकः शठी ॥
विडङ्गातिविषा श्यामा हरेणुर्नीलिनी स्थिरा ॥ ६३ ॥
बिल्वाजमोदचपला दन्ती रास्ना च तैः समैः ॥
साध्यमेरण्डतैलं वा तैलं वा कफरोगनुत् ॥ ६४ ॥
वध्मोदावर्त्तगुल्मार्शःप्लीहमेहाढ्यमारुतान् ॥
आनाहमश्मरीं चाशु हन्यात्तदनुवासनम् ॥ ६५ ॥
साधितं पञ्चमूलेन तैलं बिल्वादिनाऽथवा ॥
कफघ्नं कल्पयेत्तैलं द्रव्यैर्वा कफघातिभिः ॥ ६६ ॥
फलैरष्टगणैश्चाम्लैः सिद्धमन्वासनं कफे ॥
मृदुबस्तिजडीभूते तीक्ष्णोऽन्यो बस्तिरिष्यते ॥ ६७ ॥
तीक्ष्णैर्विकर्षितः स्निग्धो मधुरः शिशिरो मृदुः ॥
तीक्ष्णत्वं मूत्रपील्वग्निलवणक्षारसर्षपैः ॥ ६८ ॥
प्राप्तकालं विधातव्यं घृतक्षीरैस्तु मार्दवम् ॥
बलकालरोगदोषप्रकृतीः प्रविभज्य योजितो बस्तिः ॥
स्वैः स्वैरौषधवर्गैः स्वान्स्वान्रोगान्निवर्तयति ॥ ६९ ॥

उष्णार्तानां शीतांश्छीतार्तानां तथा सुखोष्णांश्च ॥
तद्योग्यौषधयुक्तान्बस्तीन्सन्तर्क्य युञ्जीत ॥ ७० ॥
बस्तीन्न बृंहणीयान्दद्याद्व्याधिषु विशोधनीयेषु ॥
मेदस्विनो विशोध्या ये च नराः कुष्ठमेहार्ताः ॥ ७१ ॥
न क्षीणक्षतदुर्बलमूर्च्छितकृशशुष्कशुद्धदेहानाम् ॥
दद्याद्विशोधनीयान्दोषनिबद्धायुषो ये च ॥ ७२ ॥

इत्यष्टाङ्गहृदयसंहितायां कल्पस्थाने चतुर्थोऽध्यायः ॥ ४ ॥

# पञ्चमोऽध्यायः ।



अथातो बस्तिव्यापत्सिद्धिमध्यायं व्याख्यास्यामः ।
अस्निग्धस्विन्नदेहस्य गुरुकोष्ठस्य योजितः ॥
शीतोऽल्पस्नेहलवणद्रव्यमात्रो घनोऽपि वा ॥ १ ॥
बस्तिःसंक्षोभ्य तं दोषं दुर्बलत्वादनिर्हरन् ॥
करोत्ययोगंतेन स्याद्वातमूत्रशकृद्ग्रहः ॥ २ ॥
नाभिबस्तिरुजादाहो हृल्लेपः श्वयथुर्गुदे ॥
कण्डूर्गुण्डानि वैवर्ण्यमरतिर्वह्निमार्दवम् ॥ ३ ॥
क्वाथद्वयं प्राग्विहितं मध्यदोषेऽतिसारिणि ॥
उष्णस्य तस्माद्द्व्येकस्य तत्र पानं प्रशस्यते ॥ ४ ॥
फलवर्त्यस्तथा स्वेदाः कालं ज्ञात्वा विरेचनम् ॥
बिल्वमूलत्रिवृद्दारुयवकोलकुलत्थवान् ॥ ५ ॥

स्वगुप्तां क्षीरकाकोलीकर्कटाख्या शठीं वचाम् ॥
पिष्ट्वा तैलघृतक्षीरे साधयेत्तच्चतुर्गुणे ॥ ६० ॥
बृंहणं वातपित्तघ्नं बलशुक्राग्निवर्द्धनम् ॥
रजःशुक्रामयहरं पुत्रीयमनुवासनम् ॥ ६१ ॥
सैन्धवं मदनं कुष्ठं शताह्वा निचुलो वचा ॥
ह्रीबेरं मधुकं भार्ङ्गी देवदारु सकट्फलम् ॥ ६२ ॥
नागरं पुष्करं मेदा चविका चित्रकः शठी ॥
विडङ्गातिविषा श्यामा हरेणुर्नीलिनी स्थिरा ॥ ६३ ॥
बिल्वाजमोदचपला दन्ती रास्ना च तैः समैः ॥
साध्यमेरण्डतैलं वा तैलं वा कफरोगनुत् ॥ ६४ ॥
वध्मोदावर्त्तगुल्मार्शःप्लीहमेहाढ्यमारुतान् ॥
आनाहमश्मरीं चाशु हन्यात्तदनुवासनम् ॥ ६५ ॥
साधितं पञ्चमूलेन तैलं बिल्वादिनाऽथवा ॥
कफघ्नं कल्पयेत्तैलं द्रव्यैर्वा कफघातिभिः ॥ ६६ ॥
फलैरष्टगणैश्चाम्लैः सिद्धमन्वासनं कफे ॥
मृदुबस्तिजडीभूते तीक्ष्णोऽन्यो बस्तिरिष्यते ॥ ६७ ॥
तीक्ष्णैर्विकर्षितः स्निग्धो मधुरः शिशिरो मृदुः ॥
तीक्ष्णत्वं मूत्रपील्वग्निलवणक्षारसर्षपैः ॥ ६८ ॥
प्राप्तकालं विधातव्यं घृतक्षीरैस्तु मार्दवम् ॥
बलकालरोगदोषप्रकृतीः प्रविभज्य योजितो बस्तिः ॥
स्वैः स्वैरौषधवर्गैः स्वान्स्वान्रोगान्निवर्तयति ॥ ६९ ॥

उष्णार्तानां शीताश्छीतार्तानां तथा सुखोष्णाश्च ॥
तद्योग्यौषधयुक्तान्वस्तीन्सन्तर्क्य युञ्जीत ॥ ७० ॥
वस्तीन्न बृंहणीयान्दद्याद्व्याधिषु विशोधनीयेषु ॥
मेदस्विनो विशोध्या ये च नराः कुष्ठमेहार्ताः ॥ ७१ ॥
न क्षीणक्षतदुर्बलमूर्च्छितकृशशुष्कशुद्धदेहानाम् ॥
दद्याद्विशोधनीयान्दोषनिवद्धायुषो ये च ॥ ७२ ॥

इत्यष्टाङ्गहृदयसंहितायां कल्पस्थाने चतुर्थोऽध्यायः ॥ ४ ॥



## पञ्चमोऽध्यायः ।

अथातो वस्तिव्यापत्सिद्धिमध्यायं व्याख्यास्यामः ।
अस्निग्धस्विन्नदेहस्य गुरुकोष्ठस्य योजितः ॥
शीतोऽल्पस्नेहलवणद्रव्यमात्रो घनोऽपि वा ॥ १ ॥
वस्तिःसंक्षोभ्य तं दोषं दुर्बलत्वादनिर्हरन् ॥
करोत्ययोगं तेन स्याद्वातमूत्रशकृद्ग्रहः ॥ २ ॥
नाभिवस्तिरुजादाहो हृल्लेपः श्वयथुर्गुदे ॥
कण्डूर्गण्डानि वैवर्ण्यमरतिर्वह्निमार्दवम् ॥ ३ ॥
क्वाथद्वयं प्राग्विहितं मध्यदोषेऽतिसारिणि ॥
उष्णस्य तस्मादेकस्य तत्र पानं प्रशस्यते ॥ ४ ॥
फलवर्त्यस्तथा स्वेदाः कालं ज्ञात्वा विरेचनम् ॥
विल्वमूलत्रिवृद्दारुयवकोलकुलत्थवान् ॥ ५ ॥

सुरादिमास्तत्र वास्तिः स प्राक्पेष्यस्तमानयेत् ॥
युक्तोऽल्पवीर्यो दोषाढ्यो रूक्षे क्रूराशयेऽथवा ॥ ६ ॥
बस्तिर्दोषावृतो रुद्धमार्गो रुन्ध्यात्समीरणम् ॥
सविमार्गोऽनिलः कुर्य्यादाध्मानं मर्मपीडनम् ॥ ७ ॥
विदाहं गुदकोष्ठस्य मुष्कवंक्षणवेदनाम् ॥
रुणद्धि हृदयं शूलैरितश्चेतश्च धावति ॥ ८ ॥
स्वभ्यक्तास्विन्नगात्रस्य तत्र वर्त्तिं प्रयोजयेत् ॥
बिल्वादिश्च निरूहः स्यात्पीलुसर्षपमूत्रवान् ॥ ९ ॥
सरलामरदारुभ्यां साधितं वाऽनुवासनम् ॥
कुर्वतो वेगसंरोधं पीडितो वाऽतिमात्रया॥ १० ॥
अस्निग्धलवणोष्णो वा बस्तिरल्पोऽल्पभेषजः ॥
मृदुर्वा मारुतेनोर्ध्वं विक्षिप्तो मुखनासिकात् ॥ ११ ॥
निरेति मूर्च्छाहृल्लासतृड्दाहादीन्प्रवर्तयन् ॥
मूर्च्छाविकारं दृष्ट्वास्य सिञ्चेच्छीताम्बुना मुखम् ॥१२॥
व्यजेदाक्रमनाशाच्च प्राणायामं च कारयेत् ॥
पृष्ठपार्श्वोदरं मृज्यात्करैरुष्णैरधोमुखम् ॥ १३ ॥
केशेषूत्क्षिप्य धुन्वीत भीषयेद्व्यालदंष्ट्रिभिः ॥
शस्त्रोल्काराजपुरुषैर्बस्तिरेति तथा ह्यधः ॥ १४ ॥
पाणिवस्त्रैर्गलापीडं कुर्यान्न म्रियते यथा ॥
प्राणोदाननिरोधाद्धि सुप्रसिद्धतरायनः ॥ १५ ॥
अपानः पवनो बस्तिं तमाश्वेवापकर्षति ॥
कुष्ठक्रमुककल्कं च पाययेताम्लसंयुतम् ॥ १६ ॥

औष्ण्यात्तैक्ष्ण्यात्सरत्वाच्च वस्तिं सोऽस्यानुलोमयेत् ॥
गोमूत्रेण त्रिवृत्पथ्याः ल्कं चाधोऽनुलोमनम् ॥ १७ ॥
पक्काशयस्थिते स्विन्ने निरूहो दशमूलिक. ॥
यवकोलकुलत्थैश्च विधेयो मूत्रसाधितै. ॥ १८ ॥
वस्तिर्गोमूत्रसिद्धैर्वा सामृतावंशपल्लवैः ॥
पूतीकरञ्जत्वक्पत्रशठीदेवाह्वरोहिषै. ॥ १९ ॥
सतैलगुडसिन्धूत्थविरेकौषधकल्कवान् ॥
विल्वादिपचमूलेन सिद्धो वस्तिरुर'स्थिते ॥ २० ॥
शिर स्थे नावन धूम' प्रच्छाद्यं सर्षपै. शिरः ॥
वस्तिरत्युष्णतीक्ष्णाम्लघनोऽतिस्वेदितस्य वा ॥ २१ ॥
अल्पे दोषे मृदौ कोष्ठे प्रयुक्तो वा पुनः पुन. ॥
अतियोगत्वमापन्नो भवेत्कुक्षिरुजाकर.॥ २२॥
विरेचनातियोगेन सतुल्याकृतिसाधन. ॥
वस्ति क्षाराम्लतीक्ष्णोष्णलवणः पैत्तिकस्य वा ॥ २३ ॥
गुददहॅह्लिखन्क्षिणवन्करोत्यस्य परिस्रवम् ॥
सविदग्धं स्रवत्यस्रं वर्णैः पित्त च भूरिभिः॥ २४ ॥
वहुशश्चातिवेगेन मोह गच्छति सोऽसकृत् ॥
रक्तपित्तातिसारघ्नी क्रिया तत्र प्रशस्यते॥२५॥
दाहादिषु त्रिवृत्कल्कं मृद्वीकावारिणा पिवेत् ॥
तद्धि पित्तशकृद्वातान्हत्वा दाहादिकाञ्जयेत् ॥ २६ ॥
विशुद्धश्च पिवेच्छीता यवागूं शर्करायुताम् ॥
युञ्ज्याद्वातिविरिक्तस्य क्षीणविट्कस्य भोजनम् ॥ २७ ॥

माषयूषणकुल्माषान्पानं दध्यथवा सुराम् ॥
सिद्धिर्बस्त्यापदामेवं स्नेहव्यस्तेस्तु वक्ष्यते ॥ २८ ॥
शीतोऽल्पो वाऽधिके वाते पित्तेत्युष्णः कफे मृदुः ॥
अतिभुक्ते गुरुर्वर्चः सञ्चयेऽल्पबलस्तथा ॥ २९ ॥
दत्तस्तैरावृतस्नेहो नायात्यभिभवादपि ॥
स्तम्भोरुसदनाध्मानज्वरशूलाङ्गमर्दनैः ॥ ३० ॥
पार्श्वरुग्वेष्टनैर्विद्याद्वायुना स्नेहमावृतम् ॥
स्निग्धाम्ललवणोष्णैस्तं रास्नापीतद्रुतैलिकैः ॥ ३१ ॥
सौवीरकसुराकोलकुलत्थयवसाधितैः ॥
निरूहैर्निर्हरेत्सम्यक्ससमूत्रैः पञ्चमूलकैः ॥ ३२ ॥
ताभ्यामेव च तैलाभ्यां सायं भुक्तेऽनुवासयेत् ॥
तृड्दाहरागसम्मोहवैवर्ण्यतमकज्वरैः ॥ ३३ ॥
विद्यात्पित्तावृतं स्वादुतिक्तैस्तं बस्तिभिर्हरेत् ॥
तन्द्राशीतज्वरालस्यप्रसेकारुचिगौरवैः ॥ ३४ ॥
संमूर्च्छाग्लानिभिर्विद्याच्छ्लेष्मणा स्नेहमावृतम् ॥
कषायतिक्तकटुकैः सुरामूत्रोपसाधितैः ॥ ३५ ॥
फलतैलयुतैः साम्लैर्बस्तिभिस्तं विनिर्हरेत् ॥
छर्दिमूर्च्छारुचिग्लानिशूलनिद्राङ्गमर्दनैः ॥ ३६ ॥
आमलिङ्गैः सदाहैस्तं विद्यादत्यशनावृतम् ॥
कटूना लवणानां च क्वाथैश्चूर्णैश्च पाचनम् ॥ ३७ ॥
मृदुर्विरेकः सर्वं च तत्रामविहितं हितम् ॥
विण्मूत्रानिलसङ्गार्तिगुरुत्वाध्मानहृद्ग्रहैः ॥ ३८ ॥

स्नेहं विडावृत ज्ञात्वा स्नेहस्वेदैः सवर्त्तिभिः ॥
श्यामाबिल्वादिसिद्धैश्च निरूहै. सानुवासनैः ॥ ३९ ॥
निर्हरेद्विधिना सम्यगुदावर्त्तहरेण च ॥
अभुक्ते श्ननपायौ वा पेयामात्राशितस्य च ॥ ४० ॥
गुदे प्रणिहित. स्नेहो वेगाद्धावत्यनावृत. ॥
उर्ध्वं कायं ततः कण्ठादूर्ध्वेभ्यः खेभ्य एत्यपि ॥ ४१ ॥
मूत्रश्यामात्रिवृत्सिद्धो यवकोलकुलत्थवान् ॥
तत्सिद्धतैलो देय.स्यान्निरूह सानुवासन. ॥ ४२ ॥
कण्ठादागच्छतः स्तम्भकण्ठग्रहविरेचनैः ॥
छर्दिघ्नीभि. क्रियाभिश्च तस्य कुर्यान्निवर्हणम् ॥ ४३ ॥
नापक्कं प्रणयेत्स्नेह गुद स ह्युपलिम्पति
तत कुर्य्यात्सतृण्मोहकण्डूशोफान्क्रियाऽत्रवा ॥ ४४ ॥
तीक्ष्णो वस्तिस्तथा तैलमर्कपत्ररसे शृतम् ॥
अनुच्छ्वास्य तु वद्धे वा दत्ते नि शेष एव च ॥ ४५ ॥
प्रविश्य क्षुभितो वायुः शूलतोदकरो भवेत् ॥
तत्राभ्यङ्गो गुदे स्वेदो वातघ्नान्यशनानि च ॥ ४६ ॥
द्रुतं प्रणीते निष्कृष्टे सहसोत्क्षिप्त एव वा ॥
स्यात्कटीगुदजंघोरुवस्तिस्तम्भार्त्तिभेदनम् ॥ ४७ ॥
भोजन तत्र वातघ्नं स्वेदाभ्यगाः सवस्तय. ॥
पीडयमानेऽन्तरा मुक्ते गुदे प्रतिहतोऽनिल. ॥ ४८ ॥
उरःशिरोरुज सादमूर्वोश्च जनयेद्बली ॥
वस्ति स्यात्तत्र बिल्वादिफलः श्यामादिमूत्रवान् ॥ ४९ ॥

अतिप्रपीडितः कोष्ठे तिष्ठत्यायाति वा गलम् ॥
तत्र बस्तिर्विरेकश्च गलपीडादिकर्म्म च ॥ ५० ॥
वमनाद्यैर्विशुद्धश्च क्षामदेहबलानलम् ॥
यथाण्डं तरुणं पूर्णं तैलपात्रं यथा तथा ॥ ५१ ॥
भिषक्प्रयत्नतो रक्षेत्सर्वस्मादपवादतः ॥
दद्यान्मधुरहृद्यानि ततोऽम्ललवणौ रसौ ॥ ५२ ॥
स्वादुतिक्तौ ततो भूयः कषायकटुकौ ततः ॥
अन्योऽन्यप्रत्यनीकानां रसानां स्निग्धरूक्षयोः ॥ ५३ ॥
व्यत्यासादुपयोगेन क्रमात्तं प्रकृतिं नयेत् ॥
सर्वसहः स्थिरबलो विज्ञेयः प्रकृतिं गतः ॥ ५४ ॥

इत्यष्टाङ्गहृदयसंहितायां कल्पस्थाने पञ्चमोऽध्यायः ॥ ५ ॥

## षष्ठोऽध्यायः ।

अथातो भेषजकल्पमध्यायं व्याख्यास्यामः ।
धन्वसाधारणे देशे समे सन्मृत्तिके शुचौ ॥
श्मशानचैत्यायतनश्वभ्रवल्मीकवर्जिते ॥ १ ॥
मृदौ प्रदक्षिणजले कुशरोहिषसंस्तृते ॥
अफालकृष्टेऽनाक्रान्ते पादपैर्बलवत्तरैः ॥ २ ॥
शस्यते भेषजं जातं युक्तं वर्णरसादिभिः ॥
जन्त्वदग्धं दवादग्धमविदग्धं च वैकृतैः ॥ ३ ॥

भूतैश्छायातपाम्ब्वाद्यैर्यथाकालं च सेवितम् ॥
अवगाढमहामूलमुदीचीं दिशमाश्रितम् ॥ ४ ॥
अथ कल्याणचरित. श्राद्धः शुचिरुपोषितः ॥
गृह्णीयादौषधं सुस्थं स्थितं काले च कल्पयेत् ॥ ५ ॥
सक्षीर तदसम्पत्तावनतिक्रान्तवत्सरम् ॥
ऋते गुडघृतक्षौद्रधान्यकृष्णाविडङ्गतः ॥ ६ ॥
पयो वाष्कयणं ग्राह्यं विण्मूत्रं तच्च नीरुजम् ॥
वयोबलवता धातुपिच्छशृङ्गखुरादिकम् ॥ ७ ॥
कषाययोनयः पञ्च रसा लवणवर्जिता ॥
रस. कल्क शृतः शीत फाण्टश्चेति प्रकल्पना ॥ ८ ॥
पञ्चधैव कषायाणा पूर्वं पूर्वं बलाधिकाः ॥
शद्यः समुद्धृतात्क्षुण्णाद्य स्रवेत्पटपीडितात् ॥ ९ ॥
स्वरस ससमुद्दिष्ट. कल्क. पिष्टो द्रवाप्लुत ॥
चूर्णोऽप्लुत·शृत क्वाथ शीतो रात्रि द्रवे स्थितः॥ १० ॥
सद्योऽभिषुतपूतस्तु फाण्टस्तन्मानकल्पने ॥
युञ्ज्याद्व्याध्यादिबलतस्तथा च वचन मुनेः ॥ ११ ॥
मात्राया न व्यवस्थाऽस्ति व्याधि कोष्ठ बल वय ॥
आलोच्य देशकालौ च योज्या तद्वच्च कल्पना ॥ १२ ॥
मध्य तु मान निर्दिष्ट स्वरसस्य चतु.पलम् ॥
पेष्यस्य कर्षमालोड्य तद्द्रवस्य पलत्रये ॥ १३ ॥
क्वाथ द्रव्यपले कुर्य्यात्प्रस्थार्ध पादशेषितम् ॥
शीतं पले पलै. षड्भिश्चतुर्भिश्चततोऽपरम् ॥ १४ ॥

स्नेहपाके त्वमानोक्तौ चतुर्गुणविवर्द्धितम् ॥
कल्कस्नेहद्रवं योज्यमधीते शौनकः पुनः ॥ १५ ॥
स्नेहे सिध्यति सिद्धाम्बुनिःक्वाथस्वरसैः क्रमात् ॥
कल्कस्य योजयेदंशं चतुर्थं षष्ठमष्टमम् ॥ १६ ॥
पृथक्स्नेहसमं दद्यात्पञ्चप्रभृति तु द्रवम् ॥
नांगुलिग्राहिता कल्के न स्नेहेऽग्नौ सशब्दता ॥ १७ ॥
वर्णादिसम्पच्च यदा तदैनं शीघ्रमाहरेत् ॥
घृतस्य फेनोपशमस्तैलस्य तु तदुद्भवः॥ १८ ॥
लेहस्य तन्तुमत्ताप्सु मज्जनं शरणं नच ॥
पाकस्तु त्रिविधो मन्दश्चिक्कणः खरचिक्कणः ॥ १९ ॥
मन्दः कल्कसमे किञ्चिच्चिक्कणो मदनोपमे ॥
किञ्चित्सीदति कृष्णे च वर्तमाने च पश्चिमः ॥ २० ॥
दग्धोऽत ऊर्ध्वं निष्कार्य्यः स्यादामस्त्वग्निसादकृत् ॥
मृदुर्नस्ये खरोऽभ्यङ्गे पाने बस्तौ च चिक्कणः ॥ २१ ॥
शाणं पाणितलं मुष्टिः कुडवं प्रस्थमाढकम् ॥
द्रोणं वहं च क्रमशो विजानीयाच्चतुर्गुणम् ॥ २२ ॥
द्विगुणं योजयेदार्द्रं कुडवादि तथा द्रवम् ॥
पेषणालोडने वारि स्नेहपाके च निर्द्रवे ॥ २३ ॥
कल्पयेत्सदृशान्भागान्प्रमाणं यत्र नोदितम् ॥
कल्कीकुर्य्याच्च भैषज्यमनिरूपितकल्पनम् ॥ २४ ॥
द्वौ शाणौ वटकः कोलं बदरं द्रंक्षणश्च तौ ॥
अक्षं पिचुःपाणि तलं सुवर्णं कवलग्रहः ॥ २५ ॥

कर्षो विडालपदक तिन्दुकः पाणिमानिका ॥
शब्दान्यत्वमभिन्नेऽर्थे शुक्तिरष्टमिका पिचू ॥ २६ ॥
पलं प्रकुञ्चो विल्वं च मुष्टिराम्रं चतुर्थिका ॥
द्वे पले प्रसृतस्तौ द्वावञ्जलिस्तौ तु मानिका ॥ २७ ॥
आढकं भाजनं कंसो द्रोण. कुम्भो घटोर्म्मणम् ॥
तुलापलशतं तानि विंशतिर्भार उच्यते ॥ २८ ॥
हिमवद्विन्ध्यशैलाभ्या प्रायो व्याप्ता वसुन्धरा ॥
सौम्यं पथ्यं च तत्राद्यमाग्नेयं वैन्ध्यमौषधम् ॥ २९ ॥

इत्यष्टाङ्गहृदयसहिताया चिकित्सास्थाने षष्ठोऽध्याय

चिकित्सास्थानञ्च समाप्तम् ।

---

# उत्तरस्थानम् ।

## प्रथमोऽध्यायः ।

अथातो वालोपचरणीयमध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥
जातमात्रं विशोध्योल्वाद्वाल सैन्धवसर्पिषा ॥
प्रसूतिक्लेशित चानुवलातैलेन सेचयेत् ॥ १ ॥
अश्मनोर्वादनं चास्य कर्णमूले समाचरेत् ॥
अथास्य दक्षिणे कर्णे मन्त्रमुच्चारयेदिमम् ॥ २ ॥
अङ्गादङ्गात्सम्भवसि हृदयादभिजायसे ॥
आत्मा वै पुत्रनामासि स जीव शरदा शतम् ॥ ३ ॥

शतायुः शतवर्षोऽसि दीर्घमायुरवाप्नुहि ॥
नक्षत्राणि दिशो रात्रिरहश्च त्वाभिरक्षतु ॥४ ॥
स्वस्थीभूतस्य नाभिंच सूत्रेण चतुरंगुलात् ॥
बद्ध्वोर्ध्वं वर्द्धयित्वा च ग्रीवायामवसंजयेत् ॥ ५ ॥
नाभिं च कुष्ठतैलेन सेचयेत्स्नपयेदनु ॥
क्षीरिवृक्षकषायेण सर्वगन्धोदकेन वा ॥ ६ ॥
कोष्णेन तप्तरजततपनीयनिमज्जनैः ॥
ततो दक्षिणतर्ज्जन्या तालून्नम्यावगुण्ठयेत् ॥ ७ ।
शिरसि स्नेहपिचुना प्राश्यं चास्य प्रयोजयेत् ॥
हरेणुमात्रं मेधायुर्बलार्थमभिमन्त्रितम् ॥ ८ ॥
ऐन्द्रीब्राह्मीवचाशंखपुष्पीकल्कं घृतं मधु ॥
चामीकरवचाब्राह्मीताप्यपथ्या रजीकृताः ॥ ९ ॥
लिह्यान्मधुघृतोपेता हेमधात्रीरजोऽथवा ॥
गर्भाम्भः सैन्धववता सर्पिषा वामयेत्ततः ॥ १० ॥
प्राजापत्येन विधिना जातकर्माणि कारयेत् ॥
शिराणां हृदयस्थानां विवृतत्वात्प्रसूतितः ॥ ११ ॥
तृतीयेऽह्नि चतुर्थे वा स्त्रीणां स्तन्यं प्रवर्त्तते ॥
प्रथमे दिवसे तस्मात्त्रिकालं मधुसर्पिषी ॥ १२ ॥
अनन्तामिश्रिते मंत्रपाविते प्राशयेच्छिशुम् ॥
द्वितीये लक्ष्मणासिद्धं तृतीये च घृतं ततः ॥ १३ ॥
प्राङ्निषिद्धस्तनस्यास्य तत्पाणितलसम्मितम् ॥
स्तन्यानुपानं द्वौ कालौ नवनीतं प्रयोजयेत् ॥ १४ ॥

मातुरेव पिबेत्स्तन्य तत्परं देहवृद्धये ॥
स्तन्यधात्र्यावुभे कार्य्ये तदसम्पदि वत्सले ॥ १५ ॥
अव्यङ्गे ब्रह्मचारिण्यौ वर्णप्रकृतित. समे ॥
नीरुजे मध्यवयसौ जीवद्वत्से न लोलुपे ॥ १६ ॥
हिता हारविहारेण यत्नादुपचरेच्च ते ॥
शुक्क्रोधलघनायासाः स्तन्यनाशस्य हेतवः ॥ १७ ॥
स्तन्यस्यसीधुवर्ज्याणि मद्यान्यानूपजा रसा ॥
क्षीर क्षीरिण्यौपधय शोकादेश्च विपर्य्यय. ॥ १८ ॥
विरुद्धाहारभुक्ताया क्षुधिताया विचेतस' ॥
प्रदुष्टधातोर्गर्भिण्या स्तन्यं रोगकर शिशोः ॥ १९ ॥
स्तन्याभावे पयश्छाग गव्य वा तद्गुण पिबेत् ॥
ह्रस्वेन पञ्चमूलेन स्थिरया वा सितायुतम् ॥ २० ॥
षष्टीनिशा विशेषेण कृतरक्षावलिक्रियाः ॥
जागृयुर्बान्धवास्तस्य दधत. परमा मुदम् ॥ २१ ॥
दशमे दिवसे पूर्णे विधिभि. स्वकुलोचितै ॥
कारयेत्सूतिकोत्थान नाम बालस्य चोचितम् ॥ २२ ॥
बिभ्रतोऽङ्गैर्मनोह्वालरोचनागुरुचन्दनम् ॥
नक्षत्रदेवतायुक्तं बान्धवं वा समाक्षरम् ॥ २३ ॥
तत. प्रकृतिभेदोक्तरूपैरायु परीक्षणम् ॥
प्रागुदक्शिरस कुर्य्याद्बालस्य ज्ञानवान्भिषक् ॥ २४ ॥
शुचिधौतोपधानानि निर्बलानि मृदूनि च ॥
शय्यास्तरणवासासि रक्षोघ्नैर्धूपितानि च ॥ २५ ॥

काको विशस्तः शस्तश्च धूपने त्रिवृतान्वितः ॥
जीवत्खड्गादिशृङ्गोत्थान्सदा चालः शुभान्मणीन् ॥२६॥
धारयेदौषधीः श्रेष्ठा ब्राह्म्यैन्द्रीजीवकादिकाः ॥
हस्ताभ्यां ग्रीवया मूर्ध्ना विशेषात्सततं वचाम् ॥ २७ ॥
आयुर्मेधास्मृतिस्वास्थ्यकरीं रक्षोऽभिरक्षिणीम् ॥
पञ्चमे मासि पुण्येऽह्नि धरण्यामुपवेशयेत् ॥ २८ ॥
षष्ठेऽन्नप्राशनं मासि क्रमात्तत्र प्रयोजयेत् ॥
षट्सप्तमाष्टमासेषु नीरुजस्य शुभेऽहनि ॥ २९ ॥
कर्णौ हिमागमे विध्येद्धात्र्यङ्कस्थस्य सान्त्वयन् ॥
प्राग्दक्षिणं कुमारस्य भिषग्वामं तु योषितः ॥ ३० ॥
दक्षिणेन दधत्सूचीं पालिमन्येन पाणिना ॥
मध्यतः कर्णपीठस्य किंचिद्गण्डाश्रयं प्रति ॥ ३१ ॥
जरायुमात्रप्रच्छन्ने रविरश्म्यवभासिते ॥
धृतस्य निश्चलं सम्यगलक्तकरसाङ्किते ॥ ३२ ॥
विध्येद्दैवकृते छिद्रे सकृदेवर्जुलाघवात् ॥
नोर्ध्वं न पार्श्वतो नाधः शिरास्तत्र हि संश्रिताः ॥३३॥
कालिका मर्मरी रक्ता तद्व्यधाद्रागरुग्ज्वराः ॥
सशोफदाहसंरम्भमन्यास्तम्भापतानकाः ॥ ३४ ॥
तेषां यथामयं कुर्य्याद्विभज्याशु चिकित्सितम् ॥
स्थानव्यधान्न रुधिरं न रुग्रागादिसम्भवः ॥ ३५ ॥
स्नेहाक्तं सूच्यनुस्यूतं सूत्रं चानु निधापयेत् ॥
आमे तैलेन सिञ्चेच्च बहलां तद्वदारया ॥ ३६ ॥

विव्येत्पाली हितभुज संचार्य्याथ स्थवीयसी ॥
वर्त्तिस्त्र्यहात्ततो रूढं वर्द्धयेत शनैः शनैः ॥ ३७ ॥
अथैन जातदशन क्रमेणापनयेत्स्तनात् ॥
पूर्वोक्त योजयेत्क्षीरमन्नं च लघु बृंहणम् ॥ ३८ ॥
प्रियालमज्जमधुकमधुलाजासितोत्पलैः ॥
अपस्तनस्य संयोज्य प्रीणनो मोदकः शिशोः ॥३९॥
दीपनो वालबिल्वैलाशर्करालाजसक्तुभिः ॥
संग्राहीधातकीपुष्पशर्करालाजतर्पणैः ॥ ४० ॥
रोगाश्चास्य जयेत्सौम्यैर्भेषजैरविषादकैः ॥
अन्यत्रात्ययिकाद्व्याधेर्विरेकं सुतरां त्यजेत् ॥ ४१ ॥
त्रासयेन्नाविधेयं तं त्रस्तं गृह्णन्ति हि ग्रहाः ॥
वस्त्रवातात्परस्पर्शात्पालयेल्लङ्घिताच्च तम् ॥ ४२ ॥
ब्राह्मीसिद्धार्थकवचासारिवाकुष्ठसैन्धवैः ॥
सकणैः साधितं पीतं वाङ्मेधास्मृतिकृद्धृतम् ॥ ४३ ॥
आयुष्यं पाप्मरक्षोघ्नं भूतोन्मादनिवर्हणम् ॥
वचेन्दुलेखा मण्डूकी शङ्खपुष्पी शतावरी ॥ ४४ ॥
ब्रह्मसोमामृताब्राह्मीः कल्कीकृत्य पलांशिकाः ॥
अष्टाङ्गं विपचेत्सर्पिः प्रस्थं क्षीरं चतुर्गुणम् ॥ ४५ ॥
तत्पीतं धन्यमायुष्यं वाङ्मेधास्मृतिबुद्धिकृत् ॥
अजाक्षीराभयाव्योषपाठोग्राशिग्रुसैन्धवैः ४६ ॥
सिद्धं सारस्वतं सर्पिर्वाङ्मेधास्मृतिवह्निकृत् ॥
वचामृताशठीपथ्याशंखिनीवेल्लनागरैः ॥ ४७ ॥

अपामार्गेण च घृतं साधितं पूर्ववद्गुणैः ॥
हेमश्वेतवचाकुष्ठमर्कपुष्पी सकांचना ॥ ४८ ॥
हेममत्स्याक्षकः शंखः कैण्डर्य्यः कनकं वचा ॥
चत्वार एते पादोक्ताः प्राश्या मधुघृतप्लुताः ॥ ४९ ॥
वर्षं लीढा वपुर्मेधाबलवर्णकराः शुभाः ॥
वचायष्ट्याह्वसिन्धूत्थपथ्यानागरदीप्यकैः ॥ ५० ॥
शुद्ध्यते वाग्घविर्लीढैः सकुष्ठकणजीरकैः ॥ ५१ ॥

इत्यष्टाङ्गहृदयसंहितायां कल्पस्थाने प्रथमोऽध्यायः ॥ १ ॥

## द्वितीयोऽध्यायः ।

अथातो बालामयप्रतिषेधमध्यायं व्याख्यास्यामः ।
त्रिविधः कथितो बालः क्षीरान्नोभयवर्त्तनः ॥
स्वास्थ्यं ताभ्यामदुष्टाभ्यां दुष्टाभ्यां रोगसम्भवः ॥ १ ॥
यदद्भिरेकतां याति न च दोषैरधिष्ठितम् ॥
तद्विशुद्धं पयो वाताद्दुष्टं तु प्लवतेऽम्भसि ॥ २ ॥
कषायं फेनिलं रूक्षं वर्चोमूत्रविबन्धकृत् ॥
पित्ताद्दुष्टाम्लकटुकं पीतराज्यप्सु दाहकृत् ॥ ३ ॥
कफात्सलवणं सान्द्रं जले मज्जति पिच्छिलम् ॥
संसृष्टलिंगंसंसर्गात्त्रिलिङ्गं सान्निपातिकम् ॥ ४ ॥
यथास्वलिङ्गास्तद्व्याधीञ्जनयत्युपयोजितम् ॥
शिशोस्तीक्ष्णामतीक्ष्णा च रोदनाल्लक्षयेद्रुजम् ॥ ५ ॥

स यं स्पृशेद्भृश देशं यत्र च स्पर्शनाक्षमः ॥
तत्र विद्याद्रुजं मूर्ध्नि रुजं चाक्षिनिमीलनात् ॥ ६ ॥
हृदि जिह्वोष्ठदशनश्वासमुष्टिनिपीडितैः ॥
कोष्ठे विबन्धवमथुस्तनदशान्त्रकूजनै. ॥ ७ ॥
आध्मानपृष्ठवमनजठरोन्नमनैरपि ॥
वस्तौ गुह्ये च विण्मूत्रसङ्गत्रासदिगीक्षणैः ॥ ८ ॥
अथ धात्र्या. क्रिया कुर्य्याद्यथादोप यथामयम् ॥
तत्र वातात्मके स्तन्ये दशमूल त्र्यह पिबेत् ॥ ९ ॥
अथ वाग्निवचापाठाकटुकाकुष्ठदीप्यकम् ॥
सभार्ङ्गीदारुसरलवृश्चिकालीकणोपणम् ॥ १० ॥
तत. पिबेदन्यतम वातव्याधिहर घृतम् ॥
अनु चाच्छसुरामेव स्निग्ध मृदु विरेचयेत् ॥ ११ ॥
वस्तिकर्म तत. कुर्य्यात्स्वेदादींश्चानिलापहान् ॥
रास्नाजमोदासरलदेवदारुरजोऽन्वितम् ॥ १२ ॥
बालो लिह्याद् घृत तैर्वा विपक्व ससितोपलम् ॥
पित्तदुष्टेऽमृताभीरुपटोलीनिम्बचन्दनम् ॥ १३ ॥
धात्र्यौ कुमारश्च पिबेत्काथयित्वा ससारिवम् ॥
अथ वा त्रिफलामुस्तभूनिम्बकटुरोहिणी' ॥ १४ ॥
सारिवादि पटोलादि पद्मकादि तथा गणम् ॥
घृतान्येभिश्च सिद्धानि पित्तघ्नं च विरेचनम् ॥ १५ ॥
शीताश्चाभ्यगलेपादीन्युञ्ज्यात् श्लेष्मात्मके पुनः ॥
यष्ट्याह्वसैन्धवयुत कुमार पाययेद्घृतम् ॥ १६ ॥

अपूपसूपसक्तून्वा त्रिफलाचूर्णसंयुतान् ॥
पायसं वा वरायुक्तं शीतं समधुशर्करम् ॥ १८ ॥
प्रातर्भुक्तस्य वा पूर्वमद्यात्पथ्या पृथक्पृथक् ॥
मृद्वीका शर्कराक्षौद्रैः सततं तिमिरातुरः ॥ १९ ॥
स्रोतोजांशाश्चतु.षष्टि ताम्रायोरूप्यकाञ्चनै· ॥
युक्तान्प्रत्येकमेकांशैरन्धमूषोदरस्थितान् ॥ २० ॥
ध्मापयित्वा समावृत्तं ततस्तच्च निषेचयेत् ॥
रसस्कन्धकषायेषु सप्तकृत्वः पृथक्पृथक् ॥ २१ ॥
वैदूर्य्यमुक्ताशङ्खाना त्रिभिर्भागैर्युतं ततः ॥
चूर्णांजनं प्रयुंजीत तत्सर्वतिमिरापहम् ॥ २२ ॥
मासीत्रिजातकाय.कुंकुमनीलोत्पलाभयातुत्थै· ॥
सितकाचशङ्खफेनकमरिचाजनपिप्पलीमधुकै· ॥ २३ ॥
चन्द्रेऽश्विनीसनाथे सुचूर्णितैरञ्जयेद्युगलमक्ष्णोः ॥
तिमिरार्मरक्तराजीकण्डूकाचादिशममिच्छन् ॥ २४ ॥
मरिचवरलवणभागौ भागौ द्वौ कणसमुद्रफेनाभ्याम् ॥
सौवीरभागनवकं चित्राया चूर्णितं कफामयजित्॥२५॥
द्राक्षामृणालीस्वरसे क्षीरमद्यवसासु च ॥
पृथक् दिव्याप्सु स्रोतोजं सप्तकृत्वो निषेचयेत् ॥ २६ ॥
तच्चूर्णितं स्थितं शङ्खे दृक्प्रसादनमंजनम् ॥
शस्तं सर्वाक्षिरोगेषु विदेहपतिनिर्म्मितम् ॥ २७ ॥
निर्दग्धं बादराङ्गारैस्तुत्थं चेत्थं निषेचितम् ॥
क्रमादजापयः सर्पिः क्षौद्रं तस्मात्पलद्वयम् ॥ २८ ॥

कर्षिकैस्ताप्यमरिचस्रोतोजकटुकानतैः ॥
पटुरोध्रशिलापथ्याकणैलांजनफेनिकैः ॥ २९ ॥
युक्तं पलेन यष्ट्याश्च मूषान्तर्ध्मातचूर्णितम् ॥
हन्ति काचार्मनक्तान्ध्यरक्तराजीः सुशीलितः ॥३० ॥
चूर्णो विशेषात्तिमिरं भास्करो भास्करो यथा ॥
त्रिंशद्भागा भुजङ्गस्य गन्धपाषाणपञ्चकम् ॥ ३१ ॥
शिल्वतालकयोर्द्वौ द्वौ वङ्गस्यैकोऽञ्जनात्रयम् ॥
अन्धमूषीकृतं ध्मातं पक्वं विमलमंजनम् ॥
तिमिरान्तकरं लोके द्वितीय इव भास्करः ॥ ३२ ॥

गोमूत्रे छगणरसेऽम्लकांजिके च
स्त्रीस्तन्ये हविषि विषे च माक्षिके च ॥
यत्तुत्थं ज्वलितमनेकशो निषिक्तं
तत्कुर्य्याद्गरुडसमं नरस्य चक्षुः ॥ ३३ ॥

श्रेष्ठाजलं भृङ्गरसं सविषाज्यमजापयः ॥
यष्टीरसं च यत्सीसं सप्तकृत्वः पृथक्पृथक् ॥ ३४ ॥
तप्तं तप्तं पायितं तच्छलाका नेत्रे युक्ता सांजनानञ्जना वा ॥
तैमिर्य्यार्मस्त्रावपैच्छिल्यपैल्लं कण्डूं जाड्यं रक्तराजीश्च हन्ति॥
रसेन्द्रभुजगौ तुल्यौ तयोस्तुल्यमथाञ्जनम् ॥
ईषत्कर्पूरसंयुक्तमंजनं नयनामृतम् ॥ ३६ ॥

यो गृध्रस्तरुणरविप्रकाशगल्ल-
स्तस्यास्यं समयमृतस्य गोशकृद्भिः ॥
निर्दग्धं समघृतमंजनं च पेष्यं
योगोऽयं नयनबलं करोति गार्ध्रम् ॥ ३७

कृष्णसर्पवदने सहविष्कं दग्धमजनमानि सृतधूमम् ॥
चूर्णित नलदपत्रविमिश्रं भिन्नतारमपिरक्षति चक्षु. ॥ ३८ ॥
कृष्ण सर्प मृत न्यस्य चतुरश्चापि वृश्चिकान् ॥
क्षीरकुम्भे त्रिसप्ताह क्लेदयित्वा च मन्थयेत् ॥ ३९ ॥
तत्र यन्नवनीतं स्यात्पुष्णीयात्तेन कुक्कुटम् ॥
अन्धस्तस्य पुरीषेण प्रेक्षते ध्रुवमजनात् ॥ ४० ॥
कृष्णसर्पवसा शखः कतकात्फलमजनम् ॥
रसक्रियेयमचिरादन्धाना दर्शनप्रदा ॥ ४१ ॥
मरिचानि दशार्द्धपिचस्ताप्यात्तुरथार्द्धपल पिचुर्यष्ट्या ॥
क्षीरार्द्धदग्धमंजनमप्रातिसाराख्यमुत्तम तिमिरे ॥ ४२ ॥
अक्षबीजमरिचामलकत्वक्तुत्थयष्टिमधुकैर्जलपिष्टै. ॥
छाययैवगुटिका.परिशुष्कानाशयन्तितिमिराण्यचिरेण॥४३॥
मरिचामलकजलोद्भवतुत्थाञ्जनताप्यधातुभि. क्रमवृद्धैः ॥
षण्माक्षिक इति योगस्तिमिरार्मक्लेदकाचकण्डूर्हन्ता ॥४४॥
रत्नानि रूप्य स्फटिकसुवर्णस्रोतोऽञ्जन ताम्रमय सशखम् ॥
कुचन्दन लोहितगैरिक च चूर्णाञ्जन सर्वदृगामयघ्नम् ॥४५॥
तिलतैलमक्षतैल भृगुस्वरसोऽसमाच्च निर्यूह ॥
आयसपात्रविपक्व करोति दृष्टेर्बल नस्यम् ॥ ४६ ॥
दोषानुरोधेन च नैकशस्त स्नेहास्रनिस्रावणरेकनस्यै ॥
उपाचरेदञ्जनमूर्द्धवस्तिवस्तिक्रियातर्पणलेपसेकैः ॥४७॥
सामान्य साधनमिद प्रतिदोषमत. शृणु ॥
वातजे तिमिरे तत्र दशमूलाम्भसा घृतम् ॥ ४८ ॥

कृष्णलोहरजोव्योषसैन्धवत्रिफलांजनैः ॥
शशगोखरसिंहोष्ट्रद्विजा लालाटमस्थि च ॥ ७१ ॥
श्वेतगोवालमरिचशंखचन्दनफेनकम् ॥
पिष्टं स्तन्याजदुग्धाभ्यां वर्त्तिस्तिमिरशुक्रजित् ॥ ७२ ॥
रक्तजे पित्तवत्सिद्धिः शीतैश्चास्त्रं प्रसादयेत् ॥
द्राक्षया नलदरोध्रयष्टिभिः शंखताम्रहिमपद्मपद्मकैः ॥ ७३ ॥
सोत्पलैश्छगलदुग्धवर्त्तितैरस्त्रजं तिमिरमाशु नश्यति ॥
संसर्गसन्निपातोत्थे यथादोषोदयां क्रियाम् ॥ ७४ ॥
सिद्धं मधूककृमिजिन्मरिचामरदारुभिः ॥
सक्षीरं नावनं तैलं पिष्टैर्लेपो मुखस्य च ॥ ७५ ॥
नतनीलोत्पलानन्तायष्ट्याह्वसुनिषण्णकैः ॥
साधितं नावने तैलं शिरोबस्तौ च शस्यते ॥ ७६ ॥
दद्यादुशीरनिर्य्यूहचूर्णितं कणसैन्धवम् ॥
तच्छृतं सघृतं भूयः पचेत्क्षौद्रं घने क्षिपेत् ॥ ७७ ॥
शीते चास्मिन्हितमिदं सर्वजे तिमिरेऽञ्जनम् ॥
अस्थीनि मज्जपूर्णानि सत्त्वानां रात्रिचारिणाम् ॥ ७८ ॥
स्रोतोजांजनयुक्तानि वहत्यम्भसि वासयेत् ॥
मासं विंशतिरात्रं वा ततश्चोद्धृत्य शोषयेत् ॥ ७९ ॥
समेषशृंगीपुष्पाणि सयष्ट्याह्वानितानि तु ॥
चूर्णितान्यंजनं श्रेष्ठं तिमिरे सान्निपातिके ॥ ८० ॥
काचेऽप्येषा क्रिया मुक्त्वा शिरां यन्त्रनिपीडिताः ॥
आन्ध्याय स्युर्मला दद्यात्स्राव्ये रक्ते जलौकसः ॥ ८१ ॥

गुड· फेनोञ्जन कृष्णा मरिच कुङ्कुमाद्रज. ॥
रसक्रियेय सक्षौद्रा काचयापनमजनम् ॥ ८२ ॥
नकुलान्धे त्रिदोपोत्थे तैसिर्य्यविहितो विवि. ॥
रसक्रियाघृतक्षौद्रगोमयस्वरसद्रुते· ॥ ८३ ॥
तार्क्ष्यगैरिकतालीसैर्निशान्ध्ये हितमजनम् ॥
दध्ना विघृष्ट मरिचं रात्र्यान्ध्यांजनमुत्तमम् ॥ ८४ ॥
करंजिकोत्पलस्वर्णगैरिकाम्भोजकेसरै ॥
पिष्टैर्गोमयतोयेन वर्त्तिर्दोपान्ध्यनाशिनी ॥ ८५ ॥
अजामूत्रेण वा कौन्तीकृष्णास्रोतोजसैन्धवै ॥
कालानुसारीत्रिकटुत्रिफलालमनश्शिला ॥ ८६ ॥
सफेनाश्छागदुग्धेन रात्र्यान्ध्ये वर्त्तयो हिता ॥
संनिवेश्य यकृन्मध्ये पिप्पलीरदहन्पचेत् ॥ ८७ ॥
ता शुष्का मधुना घृष्टा निशान्ध्ये श्रेष्ठमंजनम् ॥
खादेच्च प्लीहयकृती माहिपे तैलसर्पिषा ॥ ८८ ॥
घृते सिद्धानि जीवन्त्या· पल्लवानि च भक्षयेत् ॥
तथातिमुक्तकैरण्डशेफाल्यभिरुजानि च ॥ ८९ ॥
मृष्टं घृत कुम्भयोने· पत्रैः पाने च पूजितम् ॥
धूमराग्व्याम्लपित्तोष्णविदाहे जीर्णसर्पिषा ॥ ९० ॥
स्निग्ध विरेचयेच्छीते शीतैर्दिह्याच्च सर्वत. ॥
गोशकृद्रसदुग्धाज्यैर्विपक्वं शस्यतेऽञ्जनम् ॥ ९१ ॥
स्वर्णगैरिकतालीसचूर्णावापा रसक्रिया ॥
मेदाशावरकानन्तामजिष्ठादार्वियष्टिभि ॥ ९२ ॥

क्षीराष्टांशं घृतं पक्वं सतैलं नावनं हितम् ॥
तर्पणं क्षीरसर्पिः स्यादशाम्यति शिराव्यधः ॥ ९३ ॥
चिन्ताभिघातभीशोकरौक्ष्यात्सोत्कटकासनात् ॥
विरेकनस्यवमनपुटपाकादिविभ्रमात् ॥ ९४ ॥
विदग्धाहारवमनात्क्षुत्तृष्णादिविधारणात् ॥
अक्षिरोगावसानाच्च पश्येत्तिमिररोगवत् ॥ ९५ ॥
यथास्वं तत्र युंजीत दोपादीन्वीक्ष्य भेपजम् ॥
सूर्योपरागानलविद्युदादिविलोकनेनोपहतेक्षणस्य ॥

सन्तर्पणं स्निग्धहिमादि कार्य्यं
तथांजनं हेमघृतेन घृष्टम् ॥ ९६ ॥
चक्षूरक्षाया सर्वकालं मनुष्यै
र्यत्नः कर्त्तव्यो जीविते यावदिच्छा ॥
व्यर्थो लोकोऽयं तुल्यरात्रिन्दिवानां
पुंसामन्धानां विद्यमानेऽपि वित्ते ॥ ९७ ॥

त्रिफला रुधिरस्रुतिर्विशुद्धिर्मनसो निर्वृतिरञ्जनञ्च नस्यम्॥
शकुनाशनतासपादपूजा घृतपानञ्च सदैव नेत्ररक्षा ॥९८॥
अहितादशनात्सदानिवृत्तिर्भृशभास्वच्चलसूक्ष्मवीक्षणाच्च ॥
मुनिना निमिनोपदिष्टमेतत्परमं रक्षणमीक्षणस्य पुंसाम् ९९॥

इत्यष्टाङ्गहृदयसंहितायामुत्तरस्थाने त्रयोदशोऽध्यायः ॥ १३ ॥

# चतुर्दशोऽध्यायः ।



अथातो लिङ्गनाशप्रतिषेधमध्यायं व्याख्यास्यामः ।
विध्येत्सुजातं निष्प्रेक्ष्य लिङ्गनाशं कफोद्भवम् ॥
आवर्त्तक्यादिभिः षड्भिर्विवर्जितमुपद्रवैः ॥ १ ॥
सोऽसजातो हि विषमो दधिमस्तुनिभस्तनुः ॥
शलाकयाऽवकृष्टोऽपि पुनरूर्ध्वं प्रपद्यते ॥ २ ॥
करोति वेदनां तीव्रां दृष्टिं च स्थगयेत्पुनः ॥
श्लेष्मलैः पूर्यते चाशु सोऽन्यैः सोपद्रवैश्चिरात् ॥ ३ ॥
श्लैष्मिको लिङ्गनाशो हि सितत्वाच्छ्लेष्मणः सितः ॥
तस्यान्यदोषाभिभवाद्भवत्यानीलता गदः ॥ ४ ॥
तत्रावर्त्तचला दृष्टिरावर्त्तक्यरुणा सिता ॥
शर्करार्कपयोलेशनिचितेव घनाति च ॥ ५ ॥
राजीमतीदृङ्निचिता शालिशूकाभराजिभिः ॥
विषमच्छिन्नदग्धाभा सरुक्छिन्नांशुका स्मृता ॥ ६ ॥
दृष्टिः कांस्यसमच्छाया चन्द्रकी चन्द्रिकाकृतिः ॥
छत्राभा नैकवर्णा च छत्रकी नाम नीलिका ॥ ७ ॥
न विध्येदशिराहीणां न तृष्णापीनसकासिनाम् ॥
नाजीर्णिभीरुवमितशिरःकर्णाक्षिशूलिनाम् ॥ ८ ॥
अथ साधारणे काले शुद्धसम्भोजितात्मनः ॥
देशे प्रकाशे पूर्वाह्णे भिषग्जानूच्चपीठगः ॥ ९ ॥

यन्त्रितस्योपविष्टस्य स्विन्नाक्षस्य सुखानिलैः ॥
अङ्गुष्ठमृदिते नेत्रे दृष्टौ दृष्ट्वोत्प्लुतं मलम् ॥ १० ॥
स्वनासां प्रेक्षमाणस्य निष्कम्पं मूर्ध्नि धारिते ॥
कृष्णादर्धांगुलं मुक्त्वा तदर्धार्द्धमपाङ्गतः ॥ ११ ॥
तर्ज्जनीमध्यमांगुष्ठैः शलाकां निश्चलं धृताम् ॥
दैवच्छिद्रं नयेत्पार्श्वादूर्ध्वमासन्थयन्निव ॥ १२ ॥
सव्यं दक्षिणहस्तेन नेत्रं सव्येन चेतरत् ॥
विध्येत्सुविद्धे शब्दः स्यादरुक्चाम्बुलवस्रुतिः ॥ १३ ॥
सान्त्वयन्नातुरं चानु नेत्रं स्तन्येन सेचयेत् ॥
शलाकायास्ततोऽग्रेण निर्लिखेन्नेत्रमण्डलम् ॥ १४ ॥
अबाधमानः शनकैर्नासांप्रतिनुदंस्ततः ॥
उत्सिङ्घनाच्चापहरेद्दृष्टिमण्डलगं कफम् ॥ १५ ॥
स्थिरे दोषे चले वापि स्वेदयेदक्षि बाह्यतः ॥
अथ दृष्टेषु रूपेषु शलाकामाहरेच्छनैः ॥ १६ ॥
घृताप्लुतं पिचुं दत्त्वा बद्ध्वाक्षि शाययेत्ततः ॥
विद्धादन्येन पार्श्वेन तमुत्तानं द्वयोर्व्यधे ॥ १७ ॥
निवातेशयनेऽभ्यक्तशिरःपादं हिते रतम् ॥
क्षवथुं कासमुद्गारं ष्ठीवनं पानमम्भसः ॥ १८ ॥
अधोमुखस्थितिं स्नानं दन्तधावनभक्षणम् ॥
सप्ताहं नाचरेत्स्नेहपीतवच्चात्र यन्त्रणा ॥ १९ ॥
शक्तितो लंघयेत्सेको रुजि कोष्णेन सर्पिषा ॥
सव्योषामलकं वाट्यमश्नीयात्सघृतं द्रवम् ॥ २० ॥

विलेपी वा त्र्यहाच्चास्य क्वाथैर्मुक्त्वाक्षि सेचयेत् ॥
वातघ्ने सप्तमे त्वह्नि सर्वथैवाक्षि मोचयेत् ॥ २१ ॥
यन्त्रणामनुरुध्येत दृष्टेरा स्थैर्य्यलाभतः ॥
रूपाणि सूक्ष्मदीप्तानि सहसा नावलोकयेत् ॥ २२ ॥
शोफरागरुजादीनामविमन्थस्य चोद्भव. ॥
अहितैर्वेधदोषाच्च यथास्व तानुपाचरेत् ॥ २३ ॥
कल्किता सघृता दूर्वायवगैरिकसारिवा. ॥
मुखालेपे प्रयोक्तव्या रुजारागोपशान्तये ॥ २४ ॥
ससर्षपास्तिलास्तद्वन्मातुलुङ्गरसाप्लुता. ॥
पयस्यासारिवानन्तामञ्जिष्ठामधुयष्टिभि. ॥ २५ ॥
आजक्षीरयुतैर्लेप. सुखोष्ण. शर्म्मकृत्परम् ॥
रोध्रसैन्धवमृद्वीकामधुकैश्छागल पय. ॥ २६ ॥
शृतमाश्चोतन योज्यं रुजारागविनाशनम् ॥
मधुकोत्पलकुष्ठैर्वा द्राक्षालाक्षासितान्वितै ॥ २७ ॥
वातघ्नसिद्धे पयसि शृत सर्पिश्चतुर्गुणे ॥
पद्मकादिप्रतीवापं सर्वकर्म्मसु शस्यते ॥ २८ ॥
शिरा तथानुपशमे स्निग्धस्विन्नस्य मोक्षयेत् ॥
मन्थोक्ताश्च क्रिया कुर्य्याद्व्यधे रूढेऽञ्जन मृदु ॥ २९ ॥
आढकीमूलमरिचहरितालरसाञ्जनै. ॥
विद्धेऽक्ष्णि सगुडा वर्त्तिर्योज्या दिव्याम्बुपेषिता ॥ ३० ॥

जातीशिरीषधवमेषविषाणपुष्प
वैडूर्य्यमौक्तिकफल पयसा सुपिष्टम् ॥

आंजेन ताम्रममुना प्रतनु प्रदिग्धं
सप्ताहतः पुनरिदं पयसैव पिष्टम् ॥ ३१ ॥
पिण्डांजनं हितमनातपशुष्कमक्षिण
विद्धे प्रसादजननं बलकृच्च दृष्टेः ॥
स्रोतोजविद्रुमशिलाम्बुधिफेनतीक्ष्णै-
रस्यैव तुल्यमुदितं गुणकल्पनाभिः ॥ ३२ ॥

इत्यष्टाङ्गहृदयसंहितायामुत्तरस्थाने चतुर्दशोऽध्यायः ॥ १४ ॥

## पञ्चदशोऽध्यायः ।



अथातः सर्वाक्षिरोगविज्ञानमध्यायं व्याख्यास्यामः ।
वातेन नेत्रेऽभिष्यन्दे नासानाहोऽल्पशोफता ॥
शंखाक्षिभ्रूललाटस्य तोदस्फुरणभेदनम् ॥ १ ॥
शुष्काल्पादूषिकाशीतमच्छमश्रु चला रुजः ॥
निमेषोन्मेषणं कृच्छ्राज्जन्तूनामिव सर्पणम् ॥ २ ॥
अक्ष्याध्मातमिवाभाति सूक्ष्मैः शल्यैरिवाचितम् ॥
स्निग्धोष्णैश्चोपशमनं सोऽभिष्यन्द उपेक्षितः ॥ ३ ॥
अधिमन्थो भवेत्तत्र कर्णयोर्नदनं भ्रमः ॥
अरण्येव च मथ्यन्ते ललाटाक्षिभ्रुवादयः ॥ ४ ॥
हताधिमन्थः सोपि स्यात्प्रमादात्तेन वेदनाः ॥
अनेकरूपा जायन्ते व्रणो दृष्टौ च दृष्टिहा ॥५॥
मन्याक्षिशंखतो वायुरन्यतो वा प्रवर्त्तयेत् ॥
व्यथां तीव्रामपैच्छिल्यरागशोफं विलोचनम् ॥ ६ ॥

सङ्कोचयति पर्य्यश्रु सोऽन्यतो वातसञ्ज्ञितः ॥
तद्वन्नेत्र भवेज्जिह्ममूनवातविपर्य्यये ॥ ७ ॥
दाहो धूमायन शोफः श्यावता वर्त्मनो वहि ॥
अन्तःक्लेदोऽश्रु पीतोष्ण रागः पीताभदर्शनम् ॥ ८ ॥
क्षारोक्षितक्षताक्षित्वं पित्ताभिष्यन्दलक्षणम् ॥
ज्वलदङ्गारकीर्णाभ यकृत्पिण्डसमप्रभम् ॥ ९ ॥
अधिमन्थे भवेन्नेत्रे स्यन्दे तु कफसम्भवे ॥
जाड्यं शोफो महान्कण्डूर्निद्रान्नानभिनन्दनम् ॥ १० ॥
सान्द्रस्निग्धबहुश्वेतपिच्छावद्दूषिकाश्रुता ॥
अधिमन्थे नत कृष्णमुन्नतं शुक्लमण्डलम् ॥ ११ ॥
प्रसेको नासिकाध्मानं पांशुपूर्णमिवेक्षणम् ॥
रक्ताश्रुराजीदूषीकशुक्लमण्डलदर्शनम् ॥ १२ ॥
रक्तस्यन्देन नयनं स्यात्पित्तस्यन्दलक्षणम् ॥
मन्थेऽक्षि ताम्रपर्य्यन्तमुत्पाटनसमानरुक् ॥ १३ ॥
रागेण बन्धूकनिभं ताम्यति स्पर्शनाक्षमम् ॥
असृङ् निमग्नारिष्टाभं कृष्णमग्न्याभदर्शनम् ॥ १४ ॥
अधिमन्था यथास्वञ्च सर्वे स्यन्दाधिकव्यथाः ॥
शंखदन्तकपोलेषु कपाले चातिरुक्कराः ॥ १५ ॥
वातपित्तोत्तरं घर्षतोदभेदोपदेहवत् ॥
रूक्षदारुणवर्त्माक्षिकृच्छ्रोन्मीलनमीलनम् ॥ १६ ॥
विकूर्णन विशुष्कत्व शीतेच्छा शूलपाकवत् ॥
उक्तः शुष्काक्षिपाकोऽयं सशोफः स्यात्त्रिभिर्मलैः॥ १७ ॥

सरक्तैस्तत्र शोफोऽतिरुग्दाहष्ठीवनादिमान् ॥
पक्वोदुम्बरसङ्काशं जायते शुक्लमण्डलम् ॥ १८ ॥
अश्रूष्णशीतविशदपिच्छिलाच्छवनं मुहुः ॥
अल्पशोफेऽल्पशोफस्तु पाकोऽन्यैर्लक्षणैस्तथा ॥ १९ ॥
अक्षिपाकात्यये शोफः संरम्भः कलुषाश्रुता ॥
कफोपदिग्धमसितं सितप्रक्लेदरागवत् ॥ २० ॥
दाहो दर्शनसंरोधो वेदनाश्चानवस्थिताः ॥
अन्नसारोऽल्पतां नीतः पित्तरक्तोल्बणैर्मलैः ॥ २१ ॥
शिराभिर्नेत्रमारूढः करोति श्यावलोहितम् ॥
सशोफदाहपाकाश्रु भृशं चाविलदर्शनम् ॥ २२ ॥
अम्लोषितोऽयमित्युक्ता गदाः षोडश सर्वगाः ॥
हताधिमन्थमेतेषु साक्षिपाकात्ययं त्यजेत् ॥ २३ ॥
वातोद्भूतः पंचरात्रेण दृष्टिं सप्ताहेन श्लेष्मजातोऽधिमन्थः ॥
रक्तोत्पन्नो हन्ति तद्वत्त्रिरात्रान्मिथ्याचारात्पैत्तिकःसद्यएव२४

इत्यष्टाङ्गहृदयसहितायामुत्तरस्थाने पञ्चदशोऽध्यायः ॥ १५ ॥

## षोडशोऽध्यायः ।

अथातः सर्वाक्षिरोगप्रतिषेधमध्यायं व्याख्यास्यामः ॥
प्रागूप एव स्यन्देषु तीक्ष्णगण्डूषनावनम् ॥
कारयेदुपवासं च कोपादन्यत्र वातजात् ॥ १ ॥
दाहोपदेहरागाश्रुशोफशान्त्यै बिडालकम् ॥
कुर्य्यात्सर्वत्र पत्रैलामरिचस्वर्णगैरिकैः ॥ २ ॥

सरसाजनयष्ट्याह्वनतचन्दनसैन्धवे ॥
सैन्धवं नागरं तार्क्ष्यं भृष्टं मण्डेन सर्पिषा ॥ ३ ॥
वातजे घृतभृष्टं वा योज्यं शबरदेशजम् ॥
मासीपद्मककाकोलीयष्ट्याह्वैः पित्तरक्तयोः ॥ ४ ॥
मनोह्वाफलिनीक्षौद्रैः कफे सर्वैस्तु सर्वजे ॥
सितमरिचभागमेकं चतुर्मनोह्वं द्विरष्टशाबरकम् ॥
सचूर्ण्यं वस्त्रबद्धं प्रकुपितमात्रेऽवगुण्ठनं नेत्रे ॥ ५ ॥

आरण्यच्छगणरसे पटावबद्धा
सुस्विन्ना नखवितुषीकृता कुलत्था. ॥
तच्चूर्णं सकृदवचूर्णनान्निशीथे
नेत्राणां विधमति सद्य एव कोपम् ॥ ६ ॥

घोषाभयातुत्थकयष्टिरोध्रैर्मूर्तीससूक्ष्मे श्लथवस्त्रबद्धे ॥
ताम्रस्थधान्याम्लनिमग्नमूर्त्तिरार्तिं जयत्यक्षणि नैकरूपाम् ७
षोडशभिः सलिलपलैः पलं तथैकं कटङ्कटेर्य्याः सिद्धम् ॥
सेकोऽष्टभागशिष्टः क्षौद्रयुतः सर्वदोषकुपिते नेत्रे ॥ ८ ॥
वातपित्तकफसन्निपातजां नेत्रयोर्बहुविधामपि व्यथाम् ॥
शीघ्रमेव जयति प्रयोजितः शिग्रुपल्लवरसः समाक्षिकः ॥ ९ ॥
तरुणमुरुबूकपत्रं मूलं च विभिद्य सिद्धमाजे क्षीरे ॥
वाताभिष्यन्दरुजं सद्यो विनिहन्ति सक्तुपिण्डिकाचोष्णा १०
आश्च्योतनं मारुतजे क्वाथो बिल्वादिभिर्हितः ॥
कोष्णः सहैरण्डजटाबृहतीमधुशिग्रुभिः ॥ ११ ॥

ह्रीबेरवक्रशार्ङ्गेष्टोदुम्बरत्वक्षुसाधितम् ॥
साम्भसा पयसाजेन शूलाश्चोतनमुत्तमम् ॥ १२ ॥
मञ्जिष्ठारजनीलाक्षाद्राक्षार्द्धिमधुकोत्पलैः ॥
क्काथः सशर्करः शीतः सेचनं रक्तपित्तजित् ॥ १३ ॥
कसेरुयष्ट्याह्वरजस्तान्तवे शिथिलं स्थितम् ॥
अप्सु दिव्यासु निहितं हितं स्यन्देऽस्रपित्तजे ॥ १४ ॥
पुण्ड्रयष्टीनिशामूर्ती प्लुता स्तन्ये सशर्करे ॥
छागदुग्धेऽथवा दाहरुग्रागाश्रुनिवर्तनी ॥ १५ ॥
श्वेतरोध्रं समधुकं घृतभृष्टं सुचूर्णितम् ॥
वस्त्रस्थं स्तन्यमृदितं पित्तरक्ताभिघातजित् ॥ १६ ॥
नागरत्रिफलानिम्बवासारोध्ररसं कफे ॥
कोष्णमाश्चोतनं मिश्रैर्भेषजैः सान्निपातिके ॥ १७ ॥
सर्पिः पुराणं पवने पित्ते शर्करयान्वितम् ॥
व्योषासिद्धं कफे पीत्वा यवक्षारावचूर्णितम् ॥ १८ ॥
स्रावयेद्रुधिरं भूयस्ततः स्निग्धं विरेचयेत् ॥
आनूपवेसवारेण शिरोवदनलेपनम् ॥ १९ ॥
उष्णेन शूले दाहे तु पयः सर्पिर्युतैर्हिमैः ॥
तिमिरप्रतिषेधश्च वीक्ष्य युंज्याद्यथायथम् ॥ २० ॥
अयमेव विधिः सर्वो मन्थादिष्वपि शस्यते ॥
अशान्तौ सर्वथा मन्थे भ्रुवोरुपरि दाहयेत् ॥ २१ ॥
रूप्यं रूक्षेण गोदध्ना लिम्पेन्नीलत्वमागते ॥
शु . मस्तुना वर्तिर्वाताख्यामयनाशिनी ॥ २२ ॥

सुमनःकोरकाः शंखत्रिफला मधुकं बला ॥
पित्तरक्तापहा वर्तिः पिष्टा दिव्येन वारिणा ॥ २३ ॥
सैन्धवं त्रिफला व्योषं शंखनाभिः समुद्रजः ॥
फेनः शैलेयकं सर्जो वर्तिः श्लेष्माक्षिरोगनुत् ॥ २४ ॥
प्रपौण्डरीकं यष्ट्याह्वं दार्वीं चाष्टपलं पचेत् ॥
जलद्रोणे रसे पूते पुनः पक्वे घने क्षिपेत् ॥ २५ ॥
पुष्पाञ्जनाद्दशपलं कर्षञ्च मरिचात्ततः ॥
कृतश्चूर्णोऽथवा वर्तिः सर्वाभिष्यन्दसम्भवान् ॥ २६ ॥
हन्ति रागरुजाघर्षान्सद्यो दृष्टिं प्रसादयेत् ॥
अयं पाशुपतो योगो रहस्यं भिषजां परम् ॥ २७ ॥
शुष्काक्षिपाके हविषः पानमक्ष्णोश्च तर्पणम् ॥
घृतेन जीवनीयेन नस्यं तैलेन चाणुना ॥ २८ ॥
परिषेको हितश्चात्र पयः कोष्णं ससैन्धवम् ॥
सर्पिर्युक्तं स्तन्यपिष्टमंजनं हि महौषधम् ॥ २९ ॥
वसा चानूपसत्त्वोत्था किञ्चित्सैन्धवनागरा ॥
घृताक्तान्दर्पणे घृष्टान्केशान्मल्लकसम्पुटे ॥ ३० ॥
दग्ध्वाज्यपिष्टा लोहस्था सा मषी श्रेष्ठमंजनम् ॥
सशोफे चाल्पशोफे च स्निग्धस्य व्यधयेच्छिराम् ॥३१॥
रेकः स्निग्धैः पुनर्द्राक्षापथ्याक्वाथत्रिवृद्घृतैः ॥
श्वेतरोध्रं घृतभृष्टं चूर्णितं तान्तवास्थितम् ॥ ३२ ॥
उष्णाम्बुना विमृदितं सेकः शूलहरः परम् ॥
दार्वीप्रपौण्डरीकस्य क्वाथो वाश्च्योतने हितः ॥ ३३ ॥

सन्धावांश्च प्रयुञ्जीत घर्षरागाश्रुरुग्घरान् ॥ ३४ ॥
ताम्रे लोहे मूत्रघृष्टं प्रयुक्तं नेत्रे सर्पिर्धूपितं वेदनाघ्नम् ॥
ताम्रैर्घृष्टो गव्यदध्नःसरो वा युक्तःकृष्णासैन्धवाभ्यांवरिष्टः३५
शंखं ताम्रे स्तन्यघृष्टं घृताक्तैः शम्याः पत्रैर्धूपितं तद्यवैश्च ॥
नेत्रे युक्तं हन्ति सन्धावसंज्ञं क्षिप्रं घर्षं वेदनां चातितीव्राम्३६
उदुम्बरफलं लोहघृष्टं स्तन्येन धूपितम् ॥
साज्यैः शमीच्छदैर्दाहशूलरागाश्रुहर्षजित् ॥ ३७ ॥
शिग्रुपल्लवनिर्य्यासः सुघृष्टस्ताम्रसम्पुटे ॥
घृतेन धूपितो हन्ति शोफघर्षाश्रुवेदनाः ॥ ३८ ॥
तिलाम्भसा मृत्कपालं कांस्ये घृष्टं सुधूपितम् ॥
निम्बपत्रैर्घृताभ्यक्तैर्घर्षशूलाश्रुरागजित् ॥ ३९ ॥
सन्धावेनाञ्जिते नेत्रे विगतौषधवेदने ॥
स्तन्येनाश्चोतनं कार्य्यं त्रिः परं नांजयेच्च तैः ॥ ४० ॥
तालीसपत्रचपलानतलोहरजोंजनैः ॥
जातीमुकुलकासीससैन्धवैर्मूत्रपेषितैः ॥ ४१ ॥
ताम्रमालिप्य सप्ताहं धारयेत्पेषयेत्ततः ॥
मूत्रेणैवानु गुटिकाः कुर्य्याच्छायाविशोषिताः ॥ ४२ ॥
ताः स्तन्यघृष्टा वर्षाश्रुशोफकण्डूविनाशनाः ॥
व्याघ्रीत्वङ्मधुकं ताम्ररजोजाक्षीरकल्कितम् ॥ ४३ ॥
शम्यामलकपत्राज्यधूपितं शोणरुक्प्रणुत् ॥
अम्लोषिते प्रयुञ्जीत पित्ताभिष्यन्दसाधनम् ॥ ४४ ॥

उत्क्लिष्टा' कफपित्तास्रनिचयोत्था. कुकूणका' ॥
पक्ष्मोपरोध. शुष्काक्षिपाक. पूयालसो विसः ॥ ४५ ॥
पोथस्यम्लोपितोऽल्पाख्यस्यन्दमन्था विनानिलात् ॥
एतेऽष्टादश पिल्लाख्या दीर्घकालानुबन्धिन. ॥ ४६ ॥
चिकित्सा पृथगेतेषा स्व स्वमुक्ताथ वक्ष्यते ॥
पिल्लीभूतेषु सामान्यादथ पिल्लाक्षिरोगिण ॥ ४७ ॥
स्निग्धस्य च्छर्दितवतः शिराविद्धहृतासृज. ॥
विरिक्तस्य च वर्त्मानु निर्लिखेदा विशुद्धित ॥ ४८ ॥
तुत्थकस्य पलं श्वेतमरिचानि च विंशति' ॥
त्रिंशता काञ्जिकपलै' पिष्ट्वा ताम्रे निधापयेत् ॥ ४९ ॥
पिल्लानपिल्लान्कुरुते वहुवर्षोत्थितानपि ॥
तत्सेकेनोपदेहस्तु कण्डूशोफाश्च नाशयेत् ॥ ५० ॥
करञ्जबीजं सुरस सुमन'कोरकाणि च ॥
संक्षुद्य साधयेत्क्वाथे पूते तत्र रसक्रिया ॥ ५१ ॥
अञ्जन पिल्लभैषज्यं पक्ष्मणा च प्ररोहणम् ॥
रसाजन सर्जरसो रीतीपुष्पं मन शिला ॥ ५२ ॥
समुद्रफेन लवण गैरिक मरिचानि च ॥
अंजन मधुना पिष्ट क्लेदकण्डूघ्नमुत्तमम् ॥५३॥
अभयारसपिष्टं वा तगरं पिल्लनाशनम् ॥
भावितं वस्तमूत्रेण सस्नेह देवदारु च ॥ ५४ ॥
सैन्धवत्रिफलाकृष्णाकटुकाशङ्खनाभय ॥
सताम्ररजसो वर्त्ति पिल्लशुक्रकनाशिनी ॥ ५५ ॥

पुष्पकासीसचूर्णो वा सुरसारसभावितः ॥
ताम्रे दशाहं तत्पैल्ल्यपक्ष्मशातजिदंजनम् ॥ ५६ ॥
अलञ्च सौवीरकमञ्जनञ्च ताभ्यां समं ताम्ररजश्च सूक्ष्मम् ॥
पिल्लेषु रोमाणि निषेवितोऽसौ चूर्णः करोत्येकशलाकयापि ५७

लाक्षानिर्गुण्डीभृंगदार्वीरसेन
श्रेष्ठं कार्पासं भावितं सप्तकृत्वः ॥
दीपः प्रज्वाल्यःसर्पिषा तत्समुत्था
श्रेष्ठा पिल्लानां रोपणार्थे मषी सा ॥ ५८ ॥

वर्त्मावलेखं बहुशस्तद्वच्छोणितमोक्षणम् ॥
पुनः पुनर्विरेकञ्च नित्यमाश्चोतनांजनम् ॥ ५९ ॥
नावनं धूमपानं च पिल्लरोगातुरो भजेत् ॥
पूयालसे त्वशान्तेन्तर्दाहः सूक्ष्मशलाकया ॥ ६० ॥
चतुर्नवतिरित्यक्ष्णोर्हेतुलक्षणसाधनैः ॥
परस्परमसङ्कीर्णाः कार्त्स्न्येन गदिता गदाः ॥ ६१ ॥
सर्वदा च निषेवेत स्वस्थोऽपि नयनप्रियः ॥
पुराणयवगोधूमशालिषाष्टिककोद्रवान् ॥ ६२ ॥
मुद्गादीन्कफपित्तघ्नान्भूरिसर्पिःपरिप्लुतान् ॥
शाकं चैवंविधं मांसं जाङ्गलं दाडिमं सिताम् ॥ ६३ ॥
सैन्धवं त्रिफलां द्राक्षां वारि पाने च नाभसम् ॥
आतपत्रं पदत्राणं विधिवद्दोषशोधनम् ॥ ६४ ॥
वर्जयेद्वेगसंरोधमजीर्णाध्यशनानि च ॥
शोकक्रोधदिवास्वप्ननिशाजागरणानि च ॥ ६५ ॥

विदाहि विष्टम्भकरं यच्चेहाहारभेषजम् ॥ ६६ ॥
द्वे पादमध्ये पृथुसन्निवेशे शिरे गते ते बहुधा च नेत्रे ॥
ता म्रक्षणोद्वर्त्तनलेपनादीन्पादप्रयुक्तान्नयन नयन्ति ॥६७॥
मलोष्णसघट्टनपीडनाद्यैस्ता दूषयन्ते नयनानि दुष्टाः ॥
भजेत्सदा दृष्टिहितानि तस्मादुपानदभ्यञ्जनधावनानि ॥६८॥

इत्यष्टाङ्गहृदयसहितायामुत्तरस्थाने षोडशोऽध्याय ॥ १६ ॥

## सप्तदशोऽध्यायः ।

अथातः कर्णरोगविज्ञानीयमध्याय व्याख्यास्याम ॥
प्रतिश्यायजलक्रीडाकर्णकण्डूयनैर्मरुत् ॥
मिथ्यायोगेन शब्दस्य कुपितोऽन्यैश्च कोपनै' ॥१॥
प्राप्य श्रोत्रशिरा' कुर्य्याच्छूल स्रोतसि वेगवत् ॥
अर्द्धावभेदकं स्तम्भं शिशिरानभिनन्दनम् ॥ २ ॥
चिराच्च पाक पक्व तु लसीकामल्पश. स्रवेत् ॥
श्रोत्र शून्यमकस्माच्च स्यात्सञ्चारविचारवत् ॥ ३ ॥
शूल पित्तात्सदाहोषा शीतेच्छा श्वयथुर्ज्वर. ॥
आशुपाक प्रपक्वं च सपीतलसिकास्रुति. ॥ ४ ॥
सा लसीका स्पृशेद्यद्यत्तत्तत्पाकमुपैति च ॥
कफाच्छिरोहनुग्रीवागौरव मन्दता रुजः ॥ ५ ॥
कण्डू. श्वयथुरुष्णेच्छा पाकाच्छ्वेतघना स्रुतिः ॥
करोति श्रवणे शूलमभिघातादिदूषितम् ॥ ६ ॥

रक्तं पित्तसमानार्त्ति किञ्चिद्वाधिकलक्षणम् ॥
शूलं समुदितैर्दोषैः सशोफज्वरतीव्ररुक् ॥ ७ ॥
पर्य्यायादुष्णशीतेच्छं जायते श्रुतिजाड्यवत् ॥
पक्वं सितासितारक्तघनपूयप्रवाहि च ॥ ८ ॥
शब्दवाहिशिरासंस्थे शृणोति पवने मुहुः ॥
नादानकस्साद्विविधान्कर्णनादं वदन्ति तम् ॥ ९ ॥
श्लेष्मणानुगतो वायुर्नादो वा समुपेक्षितः ॥
उच्चैः कृच्छ्राच्छ्रुतिं कुर्य्याद्बधिरत्वं क्रमेण च ॥ १० ॥
वातेन शोषितः श्लेष्मा स्रोतो लिम्पेत्ततो भवेत् ॥
रुग्गौरवं पिधानं च स प्रतीनाहसंज्ञितः ॥ ११ ॥
कण्डूशोफौ कफाच्छ्रोत्रे स्थिरौ तत्संज्ञया स्मृतौ ॥
कफो विदग्धः पित्तेन सरुजं नीरुजं त्वपि ॥ १२ ॥
घनपूति बहुक्लेदं कुरुते पूतिकर्णकम् ॥
वातादिदूषितं श्रोत्रं मांसासृक्क्लेदजां रुजम् ॥ १३ ॥
खादन्तो जन्तवः कुर्य्युस्तीव्रां स कृमिकर्णकः ॥
श्रोत्रकण्डूयनाज्जाते क्षते स्यात्पूर्वलक्षणः ॥ १४ ॥
विद्रधिः पूर्ववच्चान्यः शोफोऽर्शोऽर्बुदमीरितम् ॥
तेषु रुक्पूतिकर्णत्वं बधिरत्वं च बाधते ॥ १५ ॥
गर्भेऽनिलात्संकुचिता शष्कुली कुचिकर्णकः ॥
एको नीरुगनेको वा गर्भे मांसांकुरः स्थिरः ॥ १६ ॥
पिप्पली पिप्पलीमानः सन्निपाताद्विदारिका ॥
सवर्णः सरुजः स्तब्धः श्वयथुः स उपेक्षितः ॥ १७ ॥

कटुतैलनिभ पक्व' स्रवेत्कृच्छ्रेण रोहति ॥
सङ्कोचयति रूढा च सा ध्रुव कर्णशष्कुलीम् ॥ १८ ॥
शिरास्थ. कुरुते वायु. पालीशोष तदाह्वयम् ॥
कृशा दृढा च तन्त्रीवत्पाली वातेन तन्त्रिका ॥ १९ ॥
सुकुमारे चिरोत्सर्गात्सहसैव प्रवर्द्धिते ॥
कर्णे शोफः सरुक्पाल्यामरुण. परिपोटवान् ॥ २० ॥
परिपोटः स पवनादुत्पात. पित्तशोणितात् ॥
गुर्वाभरणभाराद्यै. श्यावो रुग्दाहपाकवान् ॥ २१ ॥
श्वयथु' स्फोटपिटकारागोषाक्लेदसयुतः ॥
पाल्या शोफोऽनिलकफात्सर्वतो निर्व्यथ. स्थिर ॥२२॥
स्तब्ध सवर्ण. कण्डूमानुन्मन्थो गल्लिरश्च स ॥
दुर्विद्धे वर्द्धिते कर्णे सकण्डूदाहपाकरुक् ॥ २३ ॥
श्वयथु सन्निपातोत्थ स नाम्ना दु'खवर्धन ॥
कफासृक्कृमिजा' सूक्ष्मा. सकण्डूक्लेदवेदनाः ॥ २४ ॥
लेह्याख्या पिटिकास्ता हि लिह्यु. पालीमुपेक्षिता. ॥
पिप्पली सर्वज शूल विदारी कुचिकर्णक' ॥ २५ ॥
एषामसाध्या याप्यैका तन्त्रिकान्यास्तु साधयेत् ॥
पंचविंशतिरित्युक्ता कर्णरोगा विभागत ॥ २६ ॥

इत्यष्टाङ्गहृदयसंहितायामुत्तरस्थाने सप्तदशोऽध्याय ॥ १७ ॥

# अष्टादशोऽध्यायः।



अथातः कर्णरोगप्रतिषेधमध्यायं व्याख्यास्यामः ॥

कर्णशूले पवनजे पिबेद्रात्रौ रसाशितः ॥
वातघ्नसाधितं सर्पिः कर्णं स्विन्नं च पूरयेत् ॥ १ ॥
पत्राणां पृथगश्वत्थबिल्वार्कैरण्डजन्मनाम् ॥
तैलसिन्धूत्थदिग्धानां स्विन्नानां पुटपाकतः ॥ २ ॥
रसैः कवोष्णैस्तद्वच्च मूलकस्यारलोरपि ॥
गुणे वातहरेऽम्लेषु मूत्रेषु च विपाचितः ॥ ३ ॥
महास्नेहो द्रुतं हन्ति सुतीव्रामपि वेदनाम् ॥
महतः पञ्चमूलस्य काष्ठात्क्षौमेण वेष्टितात् ॥ ४ ॥
तैलसिक्तात्प्रदीप्ताग्रात्स्नेहः सद्यो रुजापहः ॥
योज्यश्चैवं भद्रकाष्ठात्कुष्ठात्काष्ठाच्च सारलात् ॥ ५ ॥
वातव्याधिप्रतिश्यायविहितं हितमत्र च ॥
वर्जयेच्छिरसा स्नानं शीताम्भःपानमह्न्यपि ॥ ६ ॥
पित्तशूले सितायुक्तं घृतस्निग्धं विरेचयेत् ॥
द्राक्षायष्टिशृतं स्तन्यं शस्यते कर्णपूरणम् ॥ ७ ॥
यष्ट्यनन्ताहिमोशीरकाकोलीरोध्रजीवकैः ॥
मृणालबिसमञ्जिष्ठासारिवाभिश्च साधयेत् ॥ ८ ॥
यष्टीमधुरसप्रस्थं क्षीरद्विप्रस्थसंयुतम् ॥
तैलस्य कुडवं नस्यपूरणाभ्यंजनैरिदम् ॥ ९ ॥

निहन्ति शूलदाहोषाः केवल क्षौद्रमेव वा ॥
यष्ट्यादिभिश्च सघृतै. कर्णौ दिह्यात्समन्तत. ॥ १० ॥
वामयेत्पिप्पलीसिद्धसर्पि.स्निग्ध कफोद्भवे ॥
धूमनावनगण्डूषस्वेदान्कुर्यात्कफापहान् ॥ ११ ॥
लशुनार्द्रकशिग्रूणा तुलस्या मूलकस्य च ॥
कदल्या. स्वरस. श्रेष्ठ. कदुष्ण. कर्णपूरणे ॥ १२ ॥
अर्काङ्कुरानम्लपिष्टास्तैलाक्तॉल्लवणान्वितान् ॥
सन्निधाय स्नुहीकाण्डे कोरिते तच्छदावृतान् ॥ १३ ॥
स्वेदयेत्पुटपाकेन स रसः शूलजित्परम् ॥
रसेन वीजपूरस्य कपित्थस्य च पूरयेत् ॥ १४ ॥
सुक्तेन पूरयित्वा वा फेनेनान्ववचूर्णयेत् ॥
अजाविमूत्रवशत्वक्सिद्ध तैल च पूरणम् ॥ १५ ॥
सिद्ध वा सार्षपं तैल हिंगुतुम्बरुनागरै. ॥
रक्तजे पित्तवत्कार्य्यं शिराश्चाशु विमोक्षयेत् ॥ १६ ॥
पक्के पूयवहे कर्णे धूमगण्डूषनावनम् ॥
युञ्ज्यान्नाडीविधान च दुष्टव्रणहरं च यत् ॥ १७ ॥
स्रोत. प्रमृज्य दिग्धं तु द्वौ कालौ पिचुवर्तिभिः ॥
पूरयेद् धूपयित्वा तु माक्षिकेण प्रपूरयेत् ॥ १८ ॥
सुरसादिगणक्काथफाणिताक्तां च योजयेत् ॥
पिचुवर्तिं सुसूक्ष्मैश्च तच्चूर्णैरवचूर्णयेत् ॥ १९ ॥
शूलक्लेदगुरुत्वाना विधिरेष निवर्त्तकः ॥
प्रियगुमधुकाम्बष्ठाधातक्युत्पलपर्णिभिः ॥ २० ॥

मञ्जिष्ठालोध्रलाक्षाभिः कपित्थस्य रसेन च ॥
पचेत्तैलं तदास्रावं निगृह्णात्याशु पूरणात् ॥ २१ ॥
नादबाधिर्य्ययोः कुर्य्याद्वातशूलोक्तमौषधम् ॥
श्लेष्मानुबन्धे श्लेष्माणं प्राग्जयेद्वमनादिभिः ॥ २२ ॥
एरण्डशिग्रुवरुणमूलकात्पत्रजे रसे ॥
चतुर्गुणे पचेत्तैलं क्षीरे चाष्टगुणोन्मिते ॥ २३ ॥
यष्ट्याह्वाक्षीरकाकोलीकल्कयुक्तं निहन्ति तत् ॥
नादबाधिर्य्यशूलानि नावनाभ्यङ्गपूरणैः ॥ २४ ॥
पक्वं प्रतिविषाहिङ्गुमिशित्वक्स्वर्जिकोषणैः ॥
ससुक्तैः पूरणात्तैलं रुक्स्रावश्रुतिनादनुत् ॥ २५ ॥
कर्णनादे हितं तैलं सर्षपोत्थञ्च पूरणे ॥
शुष्कमूलकखण्डानां क्षारो हिङ्गु महौषधम् ॥ २६ ॥
शतपुष्पावचाकुष्ठदारुशिग्रुरसांजनम् ॥
सौवर्चलयवक्षारस्वर्जिकोद्भिदसैन्धवम् ॥ २७ ॥
भूर्जग्रन्थिविडं मुस्ता मधुसुक्तं चतुर्गुणम् ॥
मातुलुङ्गरसस्तद्वत्कदलीस्वरसश्च तैः ॥ २८ ॥
पक्वं तैलं जयत्याशु सुकृच्छ्रानपि पूरणात् ॥
कण्डूं क्लेदञ्च बाधिर्य्यं पूतिकर्णञ्च रुक्कृमीन् ॥ २९ ॥
क्षारतैलमिदं श्रेष्ठं मुखदन्तामयेषु च ॥
अथ सुप्ताविव स्यातां कर्णौ रक्तं हरेत्ततः ॥ ३० ॥
सशोफक्लेदयोर्मन्दश्रुतेर्वमनमाचरेत् ॥
बाधिर्य्यं वर्जयेद् बालवृद्धयोश्चिरजं च यत् ॥ ३१ ॥

प्रतिनाहे परिक्लेद्य स्नेहस्वेदैर्विशोधयेत् ॥
कर्णशोधनकेनानु कर्णौ तैलेन पूरयेत् ॥ ३२ ॥
ससुक्तसैन्धवमधोर्मातुलुङ्गरसस्य वा ॥
शोधनाद्रूक्षतोत्पत्तौ घृतमण्डस्य पूरणम् ॥ ३३ ॥
क्रमोऽयं मलपूर्णेऽपि कर्णे कण्ड्वां कफापहम् ॥
नस्यादितद्वच्छोफेऽपि कटूष्णैश्चात्र लेपनम् ॥ ३४ ॥
कर्णस्रावोदित कुर्यात्पूतीकक्रिमिकर्णयो• ॥
पूरणं कटुतैलेन विशेषात्क्रिमिकर्णके ॥ ३५ ॥
वमिपूर्वा हिता कर्णविद्रधौ विद्रधिक्रिया ॥
पित्तोत्थकर्णशूलोक्तं कर्त्तव्यं क्षतविद्रधौ ॥ ३६ ॥
अर्शोऽर्बुदेषु नासावदामा कर्णविदारिका ॥
कर्णविद्रधिवत्साध्या यथादोषोदयेन च ॥ ३७ ॥
पालीशोषेऽनिलश्रोत्रशूलवन्नस्यलेपनम् ॥
स्वेदं च कुर्यात्स्विन्नाञ्च पालीमुद्वर्त्तयेत्तिलै• ॥ ३८ ॥
प्रियालबीजयष्ट्याह्हयगन्धायवान्वितै• ॥
तत• पुष्टिकरैः स्नेहैरभ्यङ्ग नित्यमाचरेत् ॥ ३९ ॥
शतावरीवाजिगन्धापयस्यैरण्डजीवकै• ॥
तैलं विपक्क सक्षीर पालीना पुष्टिकृत्परम् ॥ ४० ॥
कल्केन जीवनीयेन तैल पयसि पाचितम् ॥
आनूपमासक्काथे च पालीपोषणवर्द्धनम् ॥ ४१ ॥
याप्यैव तन्त्रिकाख्यापि परिपोटेऽप्ययं विधि ॥ ४२ ॥
पाली छित्त्वातिसक्षीणा शेषा सन्धाय पोषयेत् ॥
जम्ब्वाम्रपल्लवबलायष्टीरोध्रतिलोत्पलैः ॥ ४३ ॥

सधान्याम्लैः समाञ्जिष्ठैः सकदम्बैः ससारिवैः ॥
सिद्धमभ्यंजनं तैलं विसर्पोक्तघृतानि च ॥ ४४ ॥
उत्पाते शीतलैर्लेपो जलौकोहृतशोणिते ॥
उन्मन्थेऽभ्यंजनं तैलं गोधाकर्कवसान्वितम् ॥
तालपत्राश्वगन्धार्कवाकुचीतिलसैन्धवैः ॥ ४५ ॥
सुरसालाङ्गलीभ्याश्च सिद्धं तीक्ष्णञ्च नावनम् ॥
दुर्विद्धेऽश्मन्तजम्ब्वाम्रपत्रक्काथेन सेचितम् ॥ ४६ ॥
तैलेन पालीं स्वभ्यक्तां सुश्लक्ष्णैरवचूर्णयेत् ॥
चूर्णैर्मधुकमञ्जिष्ठाप्रपुण्ड्राह्वनिशोद्भवैः ॥ ४७ ॥
लाक्षाविडङ्गसिद्धश्च तैलमभ्यञ्जने हितम् ॥
स्विन्नां गोमयजैः पिण्डैर्बहुशः परिलेहिकाम् ॥ ४८ ॥
विडङ्गसारैरालिम्पेदुरभ्रीमूत्रकल्कितैः ॥
कौटजैंगुदकारञ्जबीजशम्याकवल्कलैः ॥ ४९ ॥
अथवाभ्यंजने तैर्वा कटुतैलं विपाचयेत् ॥
सनिम्बपत्रमरिचमदनैर्लेहिकाव्रणे ॥ ५० ॥
छिन्नन्तु कर्णं शुद्धस्य बन्धमालोच्य यौगिकम् ॥
शुक्तास्त्रं लागयेल्लग्ने सद्यश्छिन्ने विशोधनम् ॥ ५१ ॥
अथ ग्रथित्वा केशान्तं कृत्वा छेदनलेखनम् ॥
निवेश्य सन्धिं सुषमं न निम्नं न समुन्नतम् ॥ ५२ ॥
अभ्यज्य मधुसर्पिर्भ्यां पिचुप्लोतावगुण्ठितम् ॥
सूत्रेणागाढशिथिलं बद्ध्वा चूर्णैरवाकिरन् ॥ ५३ ॥
शोणितस्थापनैर्व्रण्यमाचारं चादिशेत्ततः ॥
सप्ताहादामतैलाक्तं शनैरपनयेत्पिचुम् ॥ ५४ ॥

सुरूढं जातरोमाणं श्लिष्टसन्धिसमस्थिरम् ॥
सुवर्ष्माण सुरागञ्च शनै कर्णं विवर्द्धयेत् ॥ ५५ ॥
जलशूकः स्वयगुप्ता रजन्यौ बृहतीद्वयम् ॥
अश्वगन्धावलाहस्तिपिप्पलीगौरसर्षपा ॥ ५६ ॥
मूल कोशातकाश्वघ्नरूपिकासप्तपर्णजम् ॥
चुच्छुन्दरी कालमृता गृह मधुकरीकृतम्॥ ५७ ॥
जन्तूका जलजन्मा च तथा शाबरकन्दकम् ॥
एभिः कल्कै.खरपक्क सतैल माहिषं घृतम् ॥ ५८॥
हस्त्यश्वमूत्रेण परमभ्यगात्कर्णवर्द्धनम् ॥
अथ कुर्य्याद्वयस्थस्य छिन्ना शुष्कस्य नासिकाम् ॥ ५९ ॥
छिद्यान्नासासमं पत्रं तत्तुल्यं च कपोलत ॥
स्वड्मास नासिकासन्नेरक्षस्तत्तनुता नयेत् ॥ ६० ॥
सीव्येद्गण्डं ततः सूच्या सेविन्यापिचुयुक्तया ॥
नासाच्छेदे च लिखिते परीवर्त्योपरि त्वचम् ॥६१ ॥
कपोलबन्धं सन्दध्यात्सीव्येन्नासा च यत्नत ॥
नाडीभ्यामुत्क्षिपेदन्त. सुखोच्छ्वासप्रवृत्तये ॥ ६२ ॥
आमतैलेन सिक्त्वा तु पतङ्गमधुकाञ्जनै ॥
शोणितस्थापनैश्चान्यै सुश्लक्ष्णैरवचूर्णयेत् ॥ ६३ ॥
ततो मधुघृताभ्यक्त वद्ध्वाचारिकमादिशेत् ॥
ज्ञात्वावस्थान्तरं कुर्य्यात्सद्योव्रणविधि तत.॥६४॥
छिन्द्याद्रूढेऽधिकं मासं नासोपान्ते च चर्मवत् ॥
सीव्येत्ततश्च सुश्लक्ष्ण हीनं संवर्द्धयेत्पुन. ॥ ६५ ॥

निवेशिते यथान्यासं सद्यश्छेदेऽप्ययं विधिः ॥
नाडीयोगाद्विनौष्ठस्य नासासन्धानवद्विधिः ॥ ६६ ॥

इत्यष्टाङ्गहृदयसंहितायामुत्तरस्थाने अष्टादशोऽध्यायः ॥ १८ ॥

# एकोनविंशोऽध्यायः ।



अथातो नासारोगविज्ञानीयमध्यायं व्याख्यास्यामः ।
अवश्यायानिलरजोभाषातिस्वप्नजागरैः ॥
नीचात्युच्चोपधानेन पीतेनान्येन वारिणा ॥ १ ॥
अत्यम्बुपानरमणच्छर्दिबाष्पग्रहादिभिः ॥
क्रुद्धा वातोल्बणा दोषा नासायां स्त्यानतां गताः ॥ २ ॥
जनयन्ति प्रतिश्यायं वर्द्धमानं क्षयप्रदम् ॥
तत्र वातात्प्रतिश्याये मुखशोषो भृशं क्षवः ॥ ३ ॥
घ्राणोपरोधनिस्तोददन्तशंखशिरोव्यथाः ॥
कीटका इव सर्पन्ति मन्यते परितो भ्रुवौ ॥ ४ ॥
स्वरसादश्चिरात्पाकः शिशिराच्छकफस्रुतिः ॥
पित्तात्तृष्णाज्वरघ्राणपिटिकासम्भवभ्रमाः ॥ ५ ॥
नासाग्रपाको रूक्षोष्णस्ताम्रपीतकफस्रुतिः ॥
कफात्कासोऽरुचिः श्वासो वमथुर्गात्रगौरवम् ॥ ६ ॥
माधुर्य्यं वदने कण्डूः स्निग्धशुक्लघना स्रुतिः ॥
सर्वजो लक्षणैः सर्वैरकस्माद्वृद्धिशान्तिमान् ॥ ७ ॥
दुष्टं नासाशिराः प्राप्य प्रतिश्यायं करोत्यसृक् ॥
उरसः सुप्तता ताम्रनेत्रत्वं श्वासपूतिता ॥ ८ ॥

कण्डूः श्रोत्राक्षिनासासु पित्तोक्तं चात्र लक्षणम् ॥
सर्व एव प्रतिश्याया दुष्टतां यान्त्युपेक्षिता. ॥ ९ ॥
यथोक्तोपद्रवाधिक्यात्ससर्वेन्द्रियतापन. ॥
साग्निसादज्वरश्वासकासोरःपार्श्ववेदन. ॥ १० ॥
कुप्यत्यकस्माद्बहुशो मुखदौर्गन्ध्यशोफकृत् ॥
नासिकाक्लेदसंशोषशुद्धिरोधकरो मुहु. ॥ ११ ॥
पूयोपमासिता रक्तग्रथिता श्लेष्मसंस्रुति. ॥
मूर्च्छन्ति चात्र कृमयो दीर्घास्निग्धसिताणवः ॥ १२ ॥
पक्वलिङ्गानि तेष्वङ्गलाघवं क्षवथो. शमः ॥
श्लेष्मा सचिक्कणः पीतो ज्ञानं च रसगन्धयो ॥ १३ ॥
तीक्ष्णघ्राणोपयोगार्करश्मिसूत्रतृणादिभि ॥
वातकोपिभिरन्यैर्वा नासिकातरुणास्थनि ॥ १४ ॥
विघट्टितेऽनिलः क्रुद्धो रुद्ध. शृङ्गाटकं व्रजेत् ॥
निवृत्तः कुरुतेऽत्यर्थं क्षवथुं स भृशंक्षव. ॥ १५ ॥
शोषयन्नासिकास्रोत. कफश्च कुरुतेऽनिल. ॥
शूकपूर्णाभनासात्वं कृच्छ्रादुच्छ्वसनं ततः ॥ १६ ॥
स्मृतोऽसौ नासिकाशोषो नासानाहे तु जायते ॥
नद्धत्वमिव नासायाः श्लेष्मरुद्धेन वायुना ॥ १७ ॥
नि.श्वासोच्छ्वाससंरोधात्स्रोतसी संवृते इव ॥
पचेन्नासापुटे पित्तं त्वङ्मासं दाहशूलवत् ॥ १८ ॥
स घ्राणपाक. स्रावस्तु तत्सञ्ज्ञ श्लेष्मसम्भवः ॥
अच्छोजलोपमोऽजस्रं विशेषान्निशि जायते ॥ १९ ॥

कफः प्रवृद्धो नासायां रुद्ध्वा स्रोतांस्यपीनसम् ॥
कुर्य्यात्स घुर्घुरं श्वासं पीनसाधिकवेदनम् ॥ २० ॥
अवेरिव स्रवत्यस्य प्रक्लिन्ना तेन नासिका ॥
अजस्रं पिच्छिलं पीतं पक्कं सिंघाणकं घनम् ॥ २१ ॥
रक्तेन नासादग्धेन बाह्यान्तःस्पर्शनासहा ॥
भवेद्धूमोपमोच्छ्वासा सा दीप्तिर्दहतीव च ॥ २२ ॥
तालुमूले मलैर्दुष्टैर्मारुतो मुखनासिकात् ॥
श्लेष्मा च पूतिर्निर्गच्छेत्पूतिनासं वदन्ति तम् ॥ २३ ॥
निचयादभिघाताद्वा पूयासृङ्नासिका स्रवेत् ॥
तत्पूयरक्तमाख्यातं शिरोदाहरुजाकरम् ॥ २४ ॥
पित्तश्लेष्मावरुद्धोऽन्तर्नासायां शोषयेन्मरुत् ॥
कफं सशुष्कपुटतां प्राप्नोति पुटकन्तु तत् ॥ २५ ॥
अर्शोऽर्बुदानि विभजेद्दोषलिङ्गैर्यथायथम् ॥
सर्वेषु कृच्छ्राच्छ्वसनं पीनसः प्रततं क्षवः ॥ २६ ॥
सानुनासिकवादित्वं पूतिनासः शिरोव्यथा ॥
अष्टादशानामित्येषां यापयेद्दुष्टपीनसम् ॥ २७ ॥

इत्यष्टाङ्गहृदयसंहितायामुत्तरस्थाने एकोनविंशोऽध्यायः समाप्तः ॥ १९ ॥

## विंशोऽध्यायः ।

अथातो नासारोगप्रतिषेधमध्यायं व्याख्यास्यामः ।
सर्वेषु पीनसेष्वादौ निवातागारगो भवेत् ॥
स्नेहनस्वेदवमनधूमगण्डूषधारणम् ॥ १ ॥

वासो गुरूष्णं शिरसःसुघनं परिवेष्टनम् ॥
लघ्वम्ललवणं स्निग्धमुष्णं भोजनमद्रवम् ॥२॥
धन्वमासगुडक्षीरचणकत्रिकटूत्कटम् ॥
यवगोधूमभूयिष्ठ दधिदाडिमसाधितम् ॥ ३ ॥
वालमूलकजो यूप. कुलत्थोत्थश्च पूजित. ॥
कवोष्णं दशमूलाम्बु जीर्णां वा वारुणी पिबेत् ॥ ४ ॥
जिघ्रेच्चोरकतर्कारीवचाजाज्युपकुञ्चिका. ॥
व्योषतालीसचविकातिन्तिडीकाम्लवेतसम् ॥ ५ ॥
साग्न्यजाजीद्विपलिकात्वगेलापत्रपादिकम् ॥
जीर्णाद्गुडात्तुलार्द्धेन पक्केन वटकीकृतम् ॥ ६ ॥
पीनसश्वासकासघ्नं रुचिस्वरकरं परम् ॥
शताह्वात्वग्बलामूल श्योनाकैरण्डविल्वजम् ॥ ७॥
सारग्वधं पिबेद्धूम वसाज्यमदनाऽन्वितम् ॥
अथवा सघृतान्सक्तून्कृत्वा मल्लकसम्पुटे ॥ ८ ॥
त्यजेत्स्नानं शुच क्रोध भृशं शय्या हिमं जलम् ॥
पिबेद्वातप्रतिश्याये सर्पिर्वातघ्नसाधितम्॥ ९ ॥
पटुपञ्चकसिद्धं वा विदार्य्यादिगणेन वा ॥
स्वेदनस्यादिकां कुर्याच्चिकित्सामर्दितोदिताम् ॥ १० ॥
पित्तरक्तोत्थयो. पेयं सर्पिर्मधुरकैः शृतम् ॥
परिषेकात्प्रदेहाश्च शीतै कुर्वीत शीतलान् ॥ ११ ॥
धवत्वक्त्रिफलाश्यामाश्रीपर्णीयष्टिविल्वकै ॥
क्षीरे दशगुणे तैलं नावनं सनिशै पचेत् ॥ १२ ॥

कफजे लंघनं लेपः शिरसो गौरसर्षपैः ॥
सक्षारं वा घृतं पीत्वा वमेत्पिष्टैस्तु नावनम् ॥ १३ ॥
वस्ताम्बुना पटुव्योषवेल्लवत्सकजीरकैः ॥
कटुतीक्ष्णैर्घृतैर्नस्यैः कवलैः सर्वजं जयेत् ॥ १४ ॥
यक्ष्मकृमिक्रमं कुर्वन्पाययेद्दुष्टपीनसे ॥
व्योषोरुवूककृमिजिद्दारुमाद्रीगदे गुदम् ॥ १५ ॥
वार्त्ताकबीजं त्रिवृता सिद्धार्थः पूतिमत्स्यकः ॥
अग्निमन्थस्य पुष्पाणि पीलुशिग्रुफलानि च ॥ १६ ॥
अश्वविड्सम्रूत्राभ्यां बास्तिमूत्रेण चैकतः ॥
क्षौमगर्भां कृतां वर्त्तिं धूमं घ्राणास्यतः पिबेत् ॥ १७ ॥
क्षवथौ पुटपाकाख्ये तीक्ष्णैः प्रधमनं हितम् ॥
शुण्ठीं कुष्ठकणावेल्लद्राक्षाकल्ककषायवत् ॥ १८ ॥
साधितं तैलमाज्यं वा नस्यं क्षवपुटप्रणुत् ॥
नासाशोषे बलातैलं पानादौ भोजनं रसैः ॥ १९ ॥
स्निग्धो धूमस्तथा स्वेदो नासानाहेऽप्ययं विधिः ॥
पाके दीप्तौ च पित्तघ्नं तीक्ष्णं नस्यादिसंसृतौ ॥ २० ॥
कफपीनसवत्पूतिनासापीनसयोः क्रिया ॥
लाक्षाकरञ्जमरिचवेल्लहिङ्गुकणागुडैः ॥ २१ ॥
अविमूत्रद्रुतैर्नस्यं कारयेद्वमने कृते ॥
शिग्रुसिंहीनिकुम्भानां बीजैः सव्योषसैन्धवैः ॥ २२ ॥
सवेल्लसुरसैस्तैलं नावनं परमं हितम् ॥
पूयरक्ते नवे कुर्याद्रक्तपीनसवत्क्रियाम् ॥ २३ ॥

अतिप्रवृद्धे नाडीवद्दग्धेष्वर्शोऽर्बुदेषु च ॥
निकुम्भकुम्भसिन्धूत्थमनोह्वालकणाग्निकैः ॥ २४ ॥
कल्कितैर्घृतमध्वक्ता घ्राणे वर्त्तिं प्रवेशयेत् ॥
शिग्र्वादि नावनं चात्र पूतिनासोऽपि तं भजेत् ॥ २५ ॥

इत्यष्टाङ्गहृदयसंहितायामुत्तरस्थाने विंशोऽध्यायः ॥ २० ॥

## एकविंशोऽध्यायः

अथातो मुखरोगविज्ञानमध्यायं व्याख्यास्यामः ।
मात्स्यमाहिषवाराहपिशितामकमूलकम् ॥
माषसूपदधिक्षीरसुक्तेक्षुरसफाणितम् ॥ १ ॥
अवाक्छय्या च भजतो द्विषतो दन्तधावनम् ॥
धूमच्छर्दनगण्डूषानुचितं च शिराव्यधम् ॥ २ ॥
क्रुद्धाः श्लेष्मोल्बणा दोषाः कुर्वन्त्यन्तर्मुखे गदान् ॥
तत्र खण्डौष्ठ इत्युक्तो वातेनोष्ठौ द्विधा कृतः ॥ ३ ॥
ओष्ठकोपे तु पवनात्स्तब्धावोष्ठौ महारुजौ ॥
दाल्येते परिपाट्येते परुषासितकर्कशौ ॥ ४ ॥
पित्तात्तीक्ष्णासहौ पीतौ सर्षपाकृतिभिश्चितौ ॥
पिटिकाभिर्महाक्लेदावाशुपाकौ कफात्पुनः ॥ ५ ॥
शीतासहौ गुरू शूनौ सवर्णपिटिकाचितौ ॥
सन्निपातादनेकाभौ दुर्गन्धास्रावपिच्छिलौ ॥ ६ ॥
अकस्मान्म्लानसंशूनरुजौ विषमपाकिनौ ॥
रक्तोपसृष्टौ रुधिरं स्रवतः शोणितप्रभौ ॥ ७ ॥

खर्जूरसदृशं चात्र क्षीणे रक्तेऽर्बुदं भवेत् ॥
मांसपिण्डोपमौ मासात्स्यातां मूर्च्छेत्कृमी क्रमात् ॥ ८ ॥
तैलाभश्वयथुक्लेदौ सकण्डू मेदसा मृदु ॥
क्षतजाववदीर्येते पाटयेते चासकृत्पुनः ॥ ९ ॥
ग्रथितौ च पुनः स्यातां कण्डूलौ दशनच्छदौ ॥
जलबुद्बुदवद्वातकफादोष्ठे जलार्बुदम् ॥ १० ॥
गण्डालजी स्थिरः शोफो गण्डे दाहज्वरान्वितः ॥
वातादुष्णसहा दन्ताः शीतस्पर्शाधिकव्यथाः ॥ ११ ॥
दाल्यन्त इव शूलेन शीताख्यो दालनश्च सः ॥
दन्तहर्षे प्रवाताम्लशीतभक्ष्याक्षमा द्विजाः ॥ १२ ॥
भवन्त्यम्लाशनेनैव सरुजाश्चलिता इव ॥
दन्तभेदे द्विजास्तोदभेदरुक्स्फुटनान्विताः ॥ १३ ॥
चालश्चलद्भिर्दशनैर्भक्षणादधिकव्यथैः ॥
करालः सुकरालानां दशनानां समुद्भवः ॥ १४ ॥
दन्ताधिकोऽधिदन्ताख्यः स चोक्तः खलु वर्द्धनः ॥
जायते जायमानेऽतिरुक् जाते तत्र शाम्यति ॥ १५ ॥
अधावनान्मलो दन्ते कफो वा वातशोषितः ॥
पूतिगन्धः स्थिरीभूतः शर्करा सोऽप्युपेक्षितः ॥ १६ ॥
शातयत्यणुशो दन्तान्कपालानि कपालिका ॥
श्यावः श्यावत्वमायाता रक्तपित्तानिलैर्द्विजाः ॥ १७ ॥
समूलं दन्तमाश्रित्य दोषैरुल्बणमारुतैः ॥
शोषिते मज्ज्ञि शुषिरे दन्तेऽन्नमलपूरिते ॥ १८ ॥

पूतित्वात्कृमय सूक्ष्मा जायन्ते जायते तत ॥
अहेतुतीव्रार्त्तिशम. ससंरम्भोऽसितश्चलः ॥ १९ ॥
प्रभूतपूयरक्तस्तु स चोक्त. कृमिदन्तक. ॥
श्लेष्मरक्तेन पूतीनि वहन्त्यस्रमहेतुकम् ॥ २० ॥
शीर्य्यन्ते दन्तमासानि मृदुक्लिन्नासितानि च ॥
शीतादोऽसौ उपकुश· पाक. पित्तासृगुद्भव ॥ २१ ॥
दन्तमासानि दह्यन्ते रक्तान्युत्सेदवन्त्यत ॥
कण्डूमन्ति स्रवन्त्यस्रमाध्मायन्तेऽसृजि स्थिते ॥ २२ ॥
चला मन्दरुजो दन्ता· पूतिवक्त्रं च जायते ॥
दन्तयोस्त्रिषु वा शोफो वदरास्थिनिभो घन ॥ २३ ॥
कफास्रात्तीव्ररुक्शीघ्र पच्यते दन्तपुप्पुट· ॥
दन्तमासे मलैः सास्रैर्बाह्यान्त श्वयथुर्गुरु ॥ २४ ॥
सरुग्दाह. स्रवेद्भिन्न पूयास्र दन्तविद्रधिः ॥
श्वयथुर्दन्तमूलेषु रुजावान्पित्तरक्तजः ॥ २५ ॥
लालास्रावी स सुषिरो दन्तमासप्रशातन ॥
ससन्निपातज्वरवान्सपूयरुधिरस्रुतिः ॥ २६ ॥
महासुषिर इत्युक्तो विशीर्णद्विजबन्धनः ॥
दन्तान्ते कीलवच्छोफो हनुकर्णरुजाकरः ॥ २७ ॥
प्रतिहन्त्यभ्यवहृति श्लेश्मणा सोऽधिमासकः ॥
घृष्टेषु दन्तमासेषु सरम्भो जायते महान् ॥ २८ ॥
यस्मिंश्चलन्ति दन्ताश्च स विदर्भोऽभिघातजः ॥
दन्तमासाश्रितान्रोगान्यः साध्यानप्युपेक्षते ॥ २९ ॥

अन्तस्तस्याः स्त्रवन्दोषः सूक्ष्मां सञ्जनयेद्गतिम् ॥
पूयं मुहुः सा स्त्रवति त्वङ्मांसास्थिप्रभेदिनी ॥ ३० ॥
ताः पुनः पञ्च विज्ञेया लक्षणैः स्वैर्यथोदितैः ॥
शाकपत्रखरा सुप्ता स्फुटिता वातदूषिता ॥ ३१ ॥
जिह्वा पित्तात्सदाहोषा रक्तैर्मांसांकुरैश्चिता ॥
शाल्मलीकण्टकाभैस्तु कफेन बहुला गुरुः ॥ ३२ ॥
कफपित्तादधः शोफो जिह्वास्तम्भकृदुन्नतः ॥
मत्स्यगन्धिर्भवेत्पक्वः सोऽलसो मांसशातनः ॥ ३३ ॥
प्रबन्धनेऽधो जिह्वायाः शोफो जिह्वाग्रसन्निभः ॥
साङ्कुरः कफपित्तास्त्रैर्लालोषास्तम्भवान्खरः ॥ ३४ ॥
अधिजिह्वः सरुक्कण्डूर्वाक्याहारविघातकृत् ॥
तादृगेवोपजिह्वस्तु जिह्वाया उपरि स्थितः ॥ ३५ ॥
तालुमांसेऽनिलाद्दुष्टे पिटिकाः सरुजः खराः ॥
बह्वयो घनाः स्त्रावयुक्तास्तास्तालुपिटिकाः स्मृताः॥३६॥
तालुमूले कफात्सास्त्रान्मत्स्यबस्तिनिभो मृदुः ॥
प्रलम्बः पिच्छिलः शोफो नासयाऽऽहारमीरयन् ॥ ३७॥
कण्ठोपरोधतृट्कासवमिकृद्गलशुण्डिका ॥
तालुमध्ये निरुङ्मांसं संहतं तालुसंहतिः ॥ ३८ ॥
पद्माकृतिस्तालुमध्ये रक्ताच्छ्वयथुरर्बुदम् ॥
कच्छपः कच्छपाकारश्चिरवृद्धिः कफादरुक् ॥ ३९ ॥
कोलाभः श्लेष्ममेदोभ्यां पुप्पुटो नीरुजः स्थिरः ॥
पित्तेन पाकः पाकाख्यः पूयास्त्रावी महारुजः ॥ ४० ॥

वातपित्तज्वरायासैस्तालुशोषस्तदाह्वयः ॥
जिह्वाप्रबन्धजाः कण्ठे दारुणा मार्गरोधिनः ॥ ४१ ॥
मांसाङ्कुराः शीघ्रचया रोहिणी शीघ्रकारिणी ॥
कण्ठास्यशोषकृद्वातात्सा हनुश्रोत्ररुक्करी ॥ ४२ ॥
पित्ताज्ज्वरोषातृण्मोहकण्ठधूमायनान्विता ॥
क्षिप्रजा क्षिप्रपाकार्त्तिरागिणी स्पर्शनासहा ॥ ४३ ॥
कफेन पिच्छिला पाण्डुरसृजा स्फोटकाचिता ॥
तप्ताङ्गारनिभा कर्णरुक्करी पित्तजाकृतिः ॥ ४४ ॥
गम्भीरपाका निचयात्सर्वलिङ्गसमन्विता ॥
दोषैः कफोल्बणैः शोफः कोलवद्ग्रथितोन्नतः ॥ ४५ ॥
शूककण्टकवत्कण्ठे शालूको मार्गरोधनः ॥
वृन्दो वृत्तोन्नतोदाहज्वरकृद्गलपार्श्वगः ॥ ४६ ॥
हनुसन्ध्याश्रितः कण्ठे कार्पासीफलसन्निभः ॥
पिच्छिलो मन्दरुक्छोफः कठिनस्तुण्डिकेरिका ॥ ४७ ॥
बाह्यान्तःश्वयथुर्घोरो गलमार्गार्गलोपमः ॥
गलौघो मूर्छगुरुतातन्द्रालालाज्वरप्रदः ॥ ४८ ॥
वलयं नातिरुक्छोफस्तद्वदेवायतोन्नतः ॥
मांसकीलो गले दोषैरेकोऽनेकोऽथ वाल्परुक् ॥ ४९ ॥
कृच्छ्रोच्छ्वासाभ्यवहृतिः पृथुमूलो गलायुकः ॥
भूरिमांसाङ्कुरावृत्ता तीव्रतृड्ज्वरमूर्छरुक् ॥ ५० ॥
शतघ्नी निचिता वर्तिः शतघ्नीवातिरुक्करी ॥
व्याप्तसर्वगलः शीघ्रजन्मपाको महारुजः ॥ ५१ ॥

पूतिपूयनिभस्रावी श्वयथुर्गलविद्रधिः ॥
जिह्वावसाने कण्ठादावपाकं श्वयथुं मलाः ॥ ५२ ॥
जनयन्ति स्थिरं रक्तं नीरुजं तद्गलार्बुदम् ॥
पवनश्लेष्ममेदोभिर्गलगण्डो भवेद्बहिः ॥
वर्द्धमानः स कालेन मुष्कवल्लम्बते निरुक् ॥ ५३ ॥
कृष्णोऽरुणो वा तोदाढ्यः स वातात्कृष्णराजिमान् ॥
वृद्धस्तालुगले शोषं कुर्याच्च विरसास्यताम् ॥ ५४ ॥
स्थिरः सवर्णः कण्डूमाञ्छीतस्पर्शो गुरुः कफात् ॥
वृद्धस्तालुगले लेपं कुर्याच्च मधुरास्यताम् ॥ ५५ ॥
मेदसः श्लेष्मवद्धानिवृद्ध्योः सोऽनु विधीयते ॥
देहं वृद्धश्च कुरुते गले शब्दं स्वरेऽल्पताम् ॥ ५६ ॥
श्लेष्मरुद्धाऽनिलगतिः शुष्ककण्ठो हतस्वरः ॥
ताम्यन्प्रसक्तं श्वसिति येन स स्वरहानिलात् ॥ ५७ ॥
करोति वदनस्यान्तर्व्रणान्सर्वसरोऽनिलः ॥
सञ्चारिणोऽरुणान्रूक्षानोष्ठौ ताम्रौ चलत्वचौ ॥ ५८ ॥
जिह्वा शीतासहा गुर्वी स्फुटिता कण्टकाचिता ॥
विवृणोति च कृच्छ्रेण मुखपाको मुखस्य च ॥ ५९ ॥
अधः प्रतिहतो वायुरर्शोगुल्मकफादिभिः ॥
यात्यूर्ध्वं वक्त्रदौर्गन्ध्यं कुर्वन्नूर्ध्वगदस्तु सः ॥ ६० ॥
मुखस्य पित्तजे पाके दाहोषे तिक्तवक्त्रता ॥
क्षारोक्षितक्षतसमा व्रणास्तद्वच्च रक्तजे ॥ ६१ ॥

कफजे मधुरास्यत्वं कण्डूमतिपिच्छिला व्रणा. ॥
अन्तः कपोलमाश्रित्य श्यावपाण्डु कफोऽर्बुदम् ॥ ६२ ॥
कुर्य्यात्तत्पाटित छिन्न मृदितं च विवर्द्धते ॥
मुखपाको भवेत्सास्त्रैः सर्वैः सर्वाकृतिर्म्मलैः ॥ ६३ ॥
पूत्यास्यता च तैरेव दन्तकाष्ठादिविद्विष. ॥
ओष्ठे गंडे द्विजे मूले जिह्वाया तालुके गले ॥ ६४ ॥
वक्त्रे सर्वत्र चेत्युक्ता. पंचसप्ततिरामया. ॥
एकादशैकौ दश च त्रयोदश तथा च षट् ॥ ६५ ॥
अष्टावष्टादशाष्टौ च क्रमात् तेष्वनुपक्रमा. ॥
करालो मासरक्तोष्ठात्वर्बुदानि जलार्द्विना ॥ ६६ ॥
कच्छपस्तालुपिटिका गलौघः सुपिरो महान् ॥
स्वरघ्नोर्ध्वगद.श्याव. शतघ्नीवलयालसा. ॥६७ ॥
नाड्योष्ठकोपोनिचयाद्रक्तात्सर्वैश्च रोहिणी ॥
दशने स्फुटिते दन्तभेद. पकोपजिह्विका ॥ ६८ ॥
गलगडः स्वरभ्रंशः कृच्छ्राच्छ्वासोऽतिवत्सर. ॥
याप्यस्तु हर्षो भेदश्च शेषाञ्छस्त्रौपधैर्जयेत् ॥ ६९ ॥

इत्यष्टाङ्गहृदयसहितायामुत्तरस्थाने एकविंशोऽध्याय ॥ २१ ॥

## द्वाविंशोऽध्यायः ॥

अथातो मुखरोगप्रतिषेधमध्याय व्याख्यास्यामः ।
खण्डोष्ठस्य विलिख्यान्तौ स्यूत्वा व्रणवदाचरेत् ॥
यष्टीज्योतिष्मतीरोध्रश्रावणीसारिवोत्पलैः ॥ १ ॥

पटोल्या काकमाच्या च तैलमभ्यञ्जनं पचेत् ॥
नस्यं च तैलं वातघ्नमधुरस्कन्धसाधितम् ॥ २ ॥
महास्नेहेन वातौष्टे सिद्धेनाक्तः पिचुर्हितः ॥
देवधूपमधूच्छिष्टगुग्गुल्वमरदारुभिः ॥ ३ ॥
यष्ट्याह्वचूर्णयुक्तेन तेनैव प्रतिसारणम् ॥
नाड्योष्ठं स्वेदयेद्दुग्धसिद्धैरेरण्डपल्लवैः ॥ ४ ॥
खण्डोष्ठविहितं नस्यं तस्य मूर्ध्नि च तर्पणम् ॥
पित्ताभिघातजावोष्ठौ जलौकाभिरुपाचरेत् ॥ ५ ॥
रोध्रसर्ज्जरसक्षौद्रमधुकैः प्रतिसारणम् ॥
गुडूचीयष्टिपत्तङ्गसिद्धमभ्यञ्जने घृतम् ॥ ६ ॥
पित्तविद्रधिवच्चात्र क्रिया शोणितजेऽपि च ॥
इदमेव भवेत्कार्य्यं क ओष्ठे तु कफोत्तरे ॥ ७ ॥
पाठाक्षारमधुव्योषैर्हृतास्रे प्रतिसारणम् ॥
धूमनावनगण्डूषाः प्रयोज्याश्च कफच्छिदः ॥ ८ ॥
स्विन्नं भिन्नं विमेदस्कं दहेन्मेदोजमग्निना ॥
प्रियङ्गुरोध्रत्रिफलामाक्षिकैः प्रतिसारयेत् ॥ ९ ॥
सक्षौद्राघर्षणं तीक्ष्णा भिन्नशुद्धे जलार्बुदे ॥
अवगाढेऽतिवृद्धे वा क्षारोऽग्निर्वा प्रतिक्रिया ॥ १० ॥
आमाद्यवस्थास्वलजीं गण्डे शोफवदाचरेत् ॥
स्विन्नस्य शीतदन्तस्य पालीं विलिखितां दहेत् ॥ ११ ॥
तैलेन प्रतिसार्य्याच्चसक्षौद्रघनसैन्धवैः ॥
दाडिमत्वग्वरातार्क्ष्यकान्ताजम्ब्वास्थिनागरैः॥ १२ ॥

कवल.क्षीरिणा काथैरणुतैलं च नावनम् ॥
दन्तहर्षे तथा भेदे सर्वा वातहरा क्रिया ॥ १३ ॥
तिलयष्टीमधुशृत क्षीर गण्डूषधारणम् ॥
सस्नेह दशमूलाम्बु गण्डूषः प्रचलद्द्विजे ॥ १४ ॥
तुत्थरोध्रकणाश्रेष्ठापत्तङ्गपटुघर्षणम् ॥
स्निग्धा शील्या यथावस्थ नस्यान्नकवलादय.॥ १५ ॥
अधिदन्तकमालिप्त यदा क्षारेण जर्ज्जरम् ॥
कृमिदन्तमिवोत्पाद्य तद्वच्चोपचरेत्तदा ॥ १६ ॥
अनवास्थितरक्ते च दग्धे व्रण इव क्रिया ॥
आहिसन्दन्तमूलानि दन्तेभ्यः शर्करा हरेत् ॥ १७ ॥
क्षारचूर्णैर्म्मधुयुतैस्ततश्च प्रतिसारयेत् ॥
कपालिकायामप्येवं हर्षोक्त च समाचरेत् ॥ १८ ॥
जयेद्विस्रावणै. स्विन्नमचल कृमिदन्तकम् ॥
स्निग्धैश्चालेपगण्डूषनस्याहारैश्चलापहै. ॥ १९ ॥
गुडेन पूर्ण सुषिर मधूच्छिष्टेन वा दहेत् ॥
सप्तच्छदार्कक्षीराभ्यां पूरणं कृमिशूलजित् ॥ २० ॥
हिंगुकट्फलकासीससर्जिकाकुष्ठवेल्लजम् ॥
रजो रुजं जयत्याशु वस्त्रस्थ दशने धृतम् ॥ २१ ॥
गण्डूष धारयेत्तैलमेभिरेव च साधितम् ॥
क्वाथैर्वा युक्तमेरण्डद्विव्याघ्रीभूकदम्बजैः ॥ २२ ॥
क्रियायोगैर्बहुविधैरित्यशान्तरुज भृशम् ॥
दृढमप्युद्धरेद्दन्तं पूर्वं मूलाद्विमोक्षितम् ॥ २३ ॥

सन्दंशकेन लघुना दन्तनिर्घातनेन वा ॥
तैलं सयष्ट्याह्वरजो गण्डूषो मधुना ततः ॥ २४ ॥
ततो विदारियष्ट्याह्वशृङ्गाटककसेरुभिः ॥
तैलं दशगुणक्षीरं सिद्धं युञ्जीत नावनम् ॥ २५ ॥
कृशदुर्बलवृद्धानां वातार्तानां च नोद्धरेत् ॥
नोद्धरेच्चोत्तरं दन्तं बहूपद्रवकृद्धि सः ॥ २६ ॥
एषामप्युद्धृतैः स्निग्धः स्वादुः शीतः क्रमो हितः ॥
विस्राविताग्रे शीतादे सक्षौद्रैः प्रतिसारणम् ॥ २७ ॥
मुस्तार्ज्जुनत्वक्त्रिफलाफलिनीतार्क्ष्यनागरैः ॥
तत्क्वाथः कवलो नस्यं तैलं मधुरसाधितम् ॥ २८ ॥
दन्तमांसान्युपकुशे स्विन्नान्युष्णाम्बुधारणैः ॥
मण्डलाग्रेण शाकादिपत्रैर्वा बहुशो लिखेत् ॥ २९ ॥
ततश्च प्रतिसार्य्याणि घृतमण्डमधुद्रुतैः ॥
लाक्षाप्रियंगुपत्तंगलवणोत्तमगैरिकैः ॥ ३० ॥
सकुष्ठशुण्ठीमरिचयष्टीमधुरसाञ्जनैः ॥
सुखोष्णो घृतमण्डोऽनु तैलं वा कवलग्रहः ॥ ३१ ॥
घृतं च मधुरैः सिद्धं हितं कवलनस्ययोः ॥
दन्तपुप्पुटके स्विन्नच्छिन्नभिन्नविलेखिते ॥ ३२ ॥
यष्ट्याह्वस्वर्जिकाशुण्ठीसैन्धवैः प्रतिसारणम् ॥
विद्रधौ कटुतीक्ष्णोष्णरूक्षैः कवललेपनम् ॥ ३३ ॥
घर्षणं कटुकाकुष्ठवृश्चिकालीयवोद्भवैः ॥
रक्षेत्पाकं हिमैः पक्वः पाट्यो दाह्योऽवगाढकः ॥ ३४ ॥

सौपिरे छिन्नलिखिते सक्षौद्रे. प्रतिसारणम् ॥
रोध्रमुस्ताभिशिश्रेष्ठाताक्ष्र्यपत्तङ्गकिंशुकै ॥३५॥
सकट्फलैः कषायैश्च तेपा गण्डूष इष्यते ॥
यष्टीरोध्रोत्पलानन्तासारिवागरुचन्दनैः ॥ ३६ ॥
सगैरिकसितापुण्ड्रै सिद्ध तैल च नावनम् ॥
छित्त्वाधिमांसकं चूर्णै सक्षौद्रै. प्रतिसारयेत् ॥ ३७ ॥
वचातेजोवतीपाठास्वर्जिकायवशूकजै ॥
पटोलनिम्बत्रिफलाकषाय कवलो हित. ॥ ३८ ॥
विदर्भे दन्तमूलानि मण्डलाग्रेण शोधयेत् ॥
क्षारं युञ्ज्यात्ततो नस्यं गण्डूपादि च शीतलम् ॥३९ ॥
सशोध्योभयतः काय शिरश्चोपचरेत्तत ॥
नाडी दन्तानुगा दन्त समुद्धृत्याग्निना हरेत् ॥ ४० ॥
कुब्जा नैकगति पूर्णा मदनेन गुडेन वा ॥
धावन जातिमदनखदिरस्वादुकण्टकै. ॥ ४१ ॥
क्षीरिवृक्षाम्बुगण्डूपो नस्यं तैल च तत्कृतम् ॥
कुर्य्याद्वातोष्ठकोपोक्तं कण्टकेष्वनिलात्मसु ॥ ४२ ॥
जिह्वाया पित्तजातेपु घृष्टेषु रुधिरे स्रुते ॥
प्रतिसारणगण्डूपनावन मधुरैर्हितम् ॥ ४३ ॥
तीक्ष्णै. कफोत्थेष्वप्येवं सर्षपत्र्यूषणादिभि ॥
नवे जिह्वालसेऽप्येव त तु शस्त्रेण न स्पृशेत् ॥ ४४ ॥
उन्नम्य जिह्वामाकृष्टा बडिशेनाधिजिह्विकाम् ॥
छेदयेन्मण्डलाग्रेण तीक्ष्णोष्णैर्घर्षणादि च ॥ ४५ ॥

उपजिह्वां परिस्राव्य यवक्षारेण घर्षयेत् ॥
कफघ्नैः शुण्डिका साध्या नस्यगण्डूषघर्षणैः ॥ ४६ ॥
ऐर्वारुबीजप्रतिमं वृद्धायामशिराततम् ॥
अग्रे निरिष्टं जिह्वाया वडिशाद्यवलम्बितम् ॥ ४७ ॥
छेदयेन्मंडलाग्रेण नात्यग्रे न च मूलतः ॥
छेदेऽत्यस्त्रक्षयान्मृत्युर्हीने व्याधिर्विवर्धते ॥ ४८ ॥
मरिचातिविषापाठावचाकुष्ठकुटन्नटैः ॥
छिन्नायासपटुक्षौद्रैर्घर्षणं कवलः पुनः ॥ ४९ ॥
कटुकातिविषापाठानिम्बरास्नावचाम्बुभिः ॥
संघाते पुप्पुटे कूर्मे विलिख्यैवं समाचरेत् ॥ ५० ॥
अपक्के तालुपाके तु कासीसक्षौद्रताक्ष्यजैः ॥
घर्षणं कवलः शीतकषायमधुरौषधैः ॥ ५१ ॥
पक्केऽष्टापदवाद्भिन्ने तीक्ष्णोष्णैः प्रतिसारणम् ॥
वृषनिम्बपटोलाद्यैस्तिक्तैः कवलधारणम् ॥ ५२ ॥
तालुशोषे त्वतृष्णस्य सर्पिरुत्तरभाक्तिकम् ॥
कणाशुण्ठीशृतं पानमम्लैर्गण्डूषधारणम् ॥ ५३ ॥
धन्वमांसरसाः स्निग्धाः क्षीरसर्पिश्च नावनम् ॥
कण्ठरोगेष्वसृङ्मोक्षस्तीक्ष्णैर्नस्यादिकर्म्म च ॥ ५४ ॥
क्वाथः पानं च दार्वीत्वङ्निम्बताक्ष्यकलिङ्गजः ॥
हरीतकीकषायो वा पेयो माक्षिकसंयुतः ॥ ५५ ॥
श्रेष्ठाव्योषयवक्षारदार्वीद्वीपिरसाञ्जनैः ॥
सपाठातेजिनीनिम्बैः सुक्तगोमूत्रसाधितैः ॥ ५६ ॥

कवलो गुटिका चात्र कल्पिता प्रतिसारणम् ॥
निचुलं कटभी मुस्त देवदारु महौषधम् ॥ ५७ ॥
वचा दन्ती च मूर्वा च लेप' कोष्णोऽतिशोफहा ॥
अथान्तर्बाह्यतः स्विन्ना वातरोहिणिका लिखेत् ॥ ५८ ॥
अंगुलीशस्त्रकेणाशु पटुयुक्तनखेन वा ॥
पञ्चमूलाम्बुकवलस्तैलं गण्डूषनावनम् ॥ ५९ ॥
विस्राव्य पित्तसम्भूतां सिताक्षौद्रप्रियगुभि ॥
घर्षेत्सरोध्रपत्तङ्गै कवल क्वथितैश्च तैः ॥ ६० ॥
द्राक्षापरूषकक्वाथो हितश्च कवलग्रहे ॥
उपाचरेदेवमेव प्रत्याख्यायास्रसम्भवाम् ॥ ६१ ॥
सागारधूमै. कटुकै. कफजा प्रतिसारयेत् ॥
नस्यगण्डूपयोस्तैल साधित च प्रशस्यते ॥ ६२ ॥
अपामार्गफलश्वेतादन्तीजन्तुघ्नसैन्धवै. ॥
तद्वच्च वृन्दशालूकतुण्डकेरीगिलायुषु ॥ ६३ ॥
विद्रधीस्राविते श्रेष्ठा रोचनातार्क्ष्यगैरिकैः ॥
सरोध्रपटुपत्तङ्गकणैर्गण्डूषघर्षणे ॥ ६४ ॥
गलगण्ड' पवनज. स्विन्नो निस्रुतशोणित' ॥
तिलैर्बीजैश्च लङ्घोमाप्रियालशणसम्भवै ॥ ६५ ॥
उपानाह्यो व्रणे रूढे प्रलेप्यश्च पुन पुनः ॥
शिग्रुतिल्वकतर्कारीगजकृष्णापुनर्नवै' ॥ ६६ ॥
कालामृतार्कमूलैश्च पुष्पैश्च करहाटजैः ॥
एकैषिकान्वितै' पिष्टै' सुरया काञ्जिकेन वा ॥ ६७ ॥

गुडूचीनिम्बकुटजहंसपादीबलाढ्यैः ॥
साधितं पाययेत्तैलं सकृष्णादेवदारुभिः ॥ ६८ ॥
कर्त्तव्यं कफजेऽप्येतत्स्वेदविम्लापने त्वति ॥
लेपोजगन्धातिविषाविशल्यासविषाणिकाः ॥ ६९ ॥
गुञ्जालाबुशुकाह्वाश्च पलाशक्षारकल्किताः ॥
मूत्रशृतं हठक्षारं पक्त्वा कोद्रवभुक्पिबेत् ॥ ७० ॥
साधितं वत्सकाद्यैर्वा तैलं सपटुपञ्चकैः ॥
कफघ्नान्धूमवमननावनादींश्च शीलयेत् ॥ ७१ ॥
मेदोभवे शिरां विध्येत्कफघ्नं च विधिं भजेत् ॥
असनादिरजश्चैनं प्रातर्मूत्रेण पाययेत् ॥ ७२ ॥
अशान्तौ पाटयित्वा च सर्वान्व्रणवदाचरेत् ॥
मुखपाकेषु सक्षौद्राः प्रयोज्या मुखधावनाः ॥ ७३ ॥
क्वथितास्त्रिफलापाठामृद्वीकाजातिपल्लवाः ॥
निष्ठ्व्या भक्षयित्वा वा कुठेरादिगणोऽथ वा ॥ ७४ ॥
मुखपाकेऽनिलात्कृष्णापट्वेलाप्रतिसारणम् ॥
तैलं वातहरैः सिद्धं हितं कवलनस्ययोः ॥ ७५ ॥
पित्तास्रे रक्तपित्तघ्नः कफघ्नश्च कफे विधिः ॥
लिखेच्छाखादिपत्रैश्च पिटिकाः कठिनाः स्थिराः ॥७६॥
यथादोषोदयं कुर्यात्सन्निपाते चिकित्सितम् ॥
नवेऽर्बुदे त्वसंवृद्धे छेदिते प्रतिसारणम् ॥ ७७ ॥
स्वर्जिकानागरक्षौद्रैः क्वाथो गण्डूष इष्यते ॥
गुडूचीनिम्बकल्कोत्थो मधुतैलसमन्वितः ॥ ७८ ॥

यवान्नभुक्तीक्ष्णतैलनस्याभ्यङ्गास्तथाचरेत्॥
वमिते पूतिवदने धूमस्तीक्ष्णः सनावन.॥ ७९॥
समङ्गाधातकीरोध्रफलिनीपद्मकैर्जलम्॥
धावन वदनस्यान्तश्चूर्णितैरवचूर्णनम्॥ ८०॥
शीतादोपकुशोक्तं च नावनादि च शीलयेत्॥ ८१॥
फलत्रयद्वीपिकिराततिक्तयष्ट्याह्वसिद्धार्थकटुत्रिकाणि॥
मुस्ताहरिद्राद्वययावशूकवृक्षाम्लकाम्लाग्निमवेतसाश्च॥८२॥
अश्वत्थजम्ब्वाम्रधनञ्जयत्वक्त्वक्चाहिमारात्खदिरस्यसारः॥
क्वाथेन तेषा घनता गतेन तच्चूर्णयुक्ता गुटिका विधेया.॥८३॥
ता धारिता घ्नन्ति मुखेन नित्य
कण्ठौष्ठताल्वादिगदान्सुकृच्छ्रान्॥
विशेपतो रोहिणिकास्यशोप-
गन्धान्विदेहाधिपतिप्रणीता.॥ ८४॥
खदिरतुलामम्बुघटे पक्त्वा तोयेन तेन पिष्टैश्च॥
चन्दनजोङ्गककुङ्कुमपरिपेलवबालकोशीरै.॥ ८५॥
सुरतरुरोध्रद्राक्षामञ्जिष्ठाचोचपद्मकविडङ्गै॥
स्पृक्कानतनखकट्फलसूक्ष्मैलाध्यामकै. सपत्तङ्गैः॥ ८६॥
तैलप्रस्थ विपचेत्कर्षांशै. पाननस्यगण्डूषैस्तत्॥
हत्वास्ये सर्वगदाञ्जनयति शीघ्र दृश श्रुति च वाराहीम्॥८७॥
उद्वर्तितं च प्रपुनाटरोध्रदार्वीभिरभ्यक्तमनेन वक्त्रम्॥
निर्व्यङ्गनीलीमुखदूपिकादि सञ्जायते चन्द्रसमानकांति॥८८॥

पलशतं बाणात्तोयघटे पक्त्वा रसेऽस्मिंश्च पलार्द्धिकैः ॥
खदिरजम्बूयष्ट्यनन्ताश्चैराहिमारनीलोत्पलान्वितैः ॥ ८९ ॥
तैलप्रस्थं पाचयेच्छ्लक्ष्णपिष्टै-
रेभिर्द्रव्यैर्धारितं तन्मुखेन ॥
रोगान्सर्वान्हन्ति वक्त्रे विशेषा-
त्स्थैर्य्यं धत्ते दन्तपंक्तेश्चलायाः ॥ ९० ॥
खदिरसाराद्वे तुले पचेद्वल्कात्तुला चारिमेदसः ॥
घटचतुष्के पादशेषेऽस्मिन्पूते पुनः क्वाथनाद्धने ॥ ९१ ॥
आक्षिकं क्षिपेत्सुसूक्ष्मं रजः सेव्याम्बु पत्तङ्गगैरिकम् ॥
चन्दनद्वयरोध्रपुण्ड्राह्वयष्ट्याह्वलाक्षाञ्जनद्वयम् ॥ ९२ ॥
धातकीकट्फलद्विनिशात्रिफलाचतुर्जातजोङ्गकम् ॥
मुस्तमञ्जिष्ठान्यग्रोधप्ररोहमांसीयवासकम् ॥ ९३ ॥
पद्मकैलेयसमङ्गाश्च शीते तस्मिंस्तथा पालिकां पृथक् ॥
जातिपत्रिकां सजातीफलां सहलवङ्गकङ्कोल्लकाम् ॥ ९४ ॥
स्फटिकशुभ्रसुरभिकर्पूरकुडवं च तत्रावपेत्ततः ॥
कारयेद्गुटिकाः सदा चैता धार्य्या मुखे तद्गदापहाः ॥ ९५ ॥
सर्वास्यरोगोद्धृतये तदाहुर्दन्तस्थिरत्वेत्विदमेव मुख्यम् ॥
क्वाथौषधव्यत्यययोजनेन तैलं पचेत्कल्पनयाऽनयैव ९६ ॥
खदिरेणैता गुटिकास्तैलमिदं वारिसेदसा प्रथितम् ॥
अनुशीलयन्प्रतिदिनं स्वस्थोऽपि दृढद्विजो भवति ॥ ९७ ॥
क्षुद्रागुडूचीसुमनःप्रवालदार्वीयवासत्रिफलाकषायः ॥
क्षौद्रेणयुक्तःकवलग्रहोऽयं सर्वास्यान्वक्त्रगतान्निहन्ति ९८

पाठादार्वीत्वक्कुष्ठमुस्तासमङ्गा-
तिक्तापीताङ्गारोध्रतेजोवतीनाम् ॥
चूर्णं सक्षौद्रो दन्तमांसार्तिकण्डू-
पाकस्रावाणां नाशनो घर्षणेन ॥ ९९ ॥

गृहधूमतार्क्ष्यपाठाव्योषक्षाराग्न्ययोवरातेजोह्वैः ॥
मुखदन्तगलविकारे सक्षौद्रः कालको विधार्य्यश्चूर्णः ॥१००॥

दार्वीत्वक्सिन्धूद्भवमनःशिलायावशूकहरितालैः ॥
धार्य्यः पीतकचूर्णो दन्तास्यगलामये समध्वाज्यः ॥१०१॥

द्विक्षारधूमवरापञ्चपटुव्योषवेल्लगिरितार्क्ष्यैः ॥
गोमूत्रेण विपक्वा गलामयघ्नी रसक्रियैषा ॥ १०२ ॥

गोमूत्रक्वथनविलीनविग्रहाणां
पथ्यानां जलमिशिकुष्ठभावितानाम् ॥
अत्तारं नरमणवोऽपि वक्त्ररोगाः
श्रोतारं नृपमिव न स्पृशन्त्यनर्थाः ॥१०३॥

सप्तच्छदोशीरपटोलमुस्तहरीतकीतिक्तकरोहिणीभिः ॥
यष्ट्याह्वराजद्रुमचन्दनैश्च क्वाथं पिबेत्पाकहरं मुखस्य॥१०४॥

पटोलशुण्ठीत्रिफलाविशाला
त्रायन्तितिक्ताद्विनिशामृतानाम् ॥
पीतः कषायो मधुना निहन्ति
मुखस्थितश्चास्यगदानशेषान् ॥ १०५ ॥

स्वरसः क्वथितो दार्व्या घनीभूतः सगैरिकः ॥
आस्यस्थः समधुर्वक्त्रपाकनाडीव्रणापहः ॥ १०६ ॥

पटोलनिम्बयष्ट्याह्ववासाजात्यरिमेदसाम् ॥
खदिरस्य वरायाश्च पृथगेवं प्रकल्पना ॥ १०७ ॥
खदिरायोवरापार्थमदयन्त्यहिमारकैः ॥
गण्डूषोऽम्बुशृतैर्धार्यो दुर्बलद्विजशान्तये ॥ १०८ ॥
मुखदन्तमूलगलजाः प्रायो रोगाः कफास्रभूयिष्ठाः ॥
तस्मात्तेषामसकृद्रुधिरं विस्रावयेद्दुष्टम् ॥ १०९ ॥
कायशिरसोर्विरेको वमनं कवलग्रहाश्च कटुकातिक्ताः ॥
प्रायः शस्तं तेषां कफरक्तहरं तथा कर्म्म ॥ ११० ॥
यवतृणधान्यं भक्तं विदलैः क्षारोषितैरपस्नेहाः ॥
यूषा भक्ष्याश्च हिता यच्चान्यच्छ्लेष्मनाशाय ॥ १११ ॥
घ्राणानिलपथसंस्थाः श्वसितमपि निरुन्धते प्रमादवतः॥
कण्ठामयाश्चिकित्सितमतो द्रुतं तेषु कुर्वीत ॥ ११२ ॥

इत्यष्टाङ्गहृदयसंहितायामुत्तरस्थाने द्वाविंशोऽध्यायः ॥ २२ ॥

## त्रयोविंशोऽध्यायः।

अथातः शिरोरोगविज्ञानं नामाध्यायं व्याख्यास्यामः ।
धूमातपतुषाराम्बुक्रीडातिस्वप्नजागरैः ॥
उत्स्वेदाधिपुरोवातबाष्पनिग्रहरोदनैः ॥ १ ॥
अत्यम्बुमद्यपानेन कृमिभिर्वेगधारणैः ॥
उपधानमृजाभ्यङ्गद्वेषाधःप्रततेक्षणैः ॥ २ ॥
असात्म्यगन्धदुष्टामभाषाद्यैश्च शिरोगताः ॥
जनयन्त्यामयान्दोषांस्तत्र मारुतकोपतः ॥ ३ ॥

निस्तुद्येते भृशं शखौ घाटा सम्भिद्यते तथा ॥
भ्रुवोर्म्मध्य ललाट च पततीवातिवेदनम् ॥ ४ ॥
बाध्येते स्वनत. श्रोत्रे निष्क्रष्येते इवाक्षिणी॥
घूर्णतीव शिरःसर्वं सन्धिभ्य इव मुच्यते॥ ५॥
स्फुरत्यतिशिराजालं कन्दराहनुसग्रह' ॥
प्रकाशासहता घ्राणस्रावोऽकस्माद्व्यथाशमौ ॥ ६ ॥
मार्दवं मर्दनस्नेहस्वेदवन्धैश्च जायते ॥
शिरस्तापोऽयम्, अर्द्धे तु मूर्ध्न. सोऽर्द्धावभेदक ॥ ७ ॥
पक्षात्कुप्यति मासाद्वा स्वयमेव च शाम्यति ॥
अतिवृद्धस्तु नयन श्रवणं वा विनाशयेत् ॥ ८ ॥
शिरोऽभितापे पित्तोत्थे शिरोधूमायन ज्वर ॥
स्वेदोऽक्षिदहन मूर्च्छा निशि शीतैश्च मार्दवम् ॥ ९ ॥
अरुचि कफजे मूर्ध्नो गुरुस्तिमितशीतता ॥
शिरानिस्पन्दतालस्यं रुग्मन्दाह्न्यधिका निशि॥ १० ॥
तन्द्रा शूनाक्षिकूटत्व कर्णकण्डूयन वमि ॥
रक्तात्पित्ताधिकरुज सर्वैं स्यात्सर्वलक्षण ॥ ११ ॥
सङ्कीर्णैर्भोजनैर्मूर्ध्नि क्लेदिते रुधिरामिषे ॥
कोपिते सान्निपाते च जायन्ते मूर्ध्नि जन्तवः ॥ १२ ॥
शिरसस्ते पिवन्तोऽस्र घोरा कुर्वन्ति वेदना ॥
चित्तविभ्रंशजननीर्ज्वरः कासो वलक्षय ॥१३ ॥
रौक्ष्यशोफव्य वच्छेददाहस्फुटनपूतिता ॥
कपाले तालुशिरसो.कण्डू शोपः प्रमीलकः ॥ १४ ॥

ताम्राच्छसिंघाणकता कर्णनादश्च जन्तुजे ॥
वातोल्बणे शिरःकम्पं तत्संज्ञं कुर्वते मलाः ॥ १५ ॥
पित्तप्रधानैर्वाताद्यैः शंखे शोफः सशोणितैः ॥
तीव्रदाहरुजारागप्रलापज्वरतृड्भ्रमाः ॥ १६ ॥
तिक्तास्यः पीतवदनः क्षिप्रकारी सशंखकः ॥
त्रिरात्राज्जीवितं हन्ति सिध्यत्यप्याशु साधितः ॥ १७ ॥
पित्तानुबद्धः शंखाक्षिभ्रूललाटेषु मारुतः ॥
रुजं सस्यन्दनां कुर्यादनुसूर्य्योदयोदयाम् ॥ १८ ॥
आमध्याह्नं विवर्धिष्णुः क्षुद्वतः सा विशेषतः ॥
अव्यवस्थितशीतोष्णसुखा शाम्यत्यतः परम् ॥ १९ ॥
सूर्य्यावर्त्तः स इत्युक्ता दश रोगाः शिरोगताः ॥
शिरस्येवञ्च वक्ष्यन्ते कपाले व्याधयो नव ॥ २० ॥
कपाले पवने दुष्टे गर्भस्थस्यापि जायते ॥
सवर्णो नीरुजः शोफस्तं विद्यादुपशीर्षकम् ॥ २१ ॥
यथादोषोदयं ब्रूयात्पिटिकार्बुदविद्रधीन् ॥
कपाले क्लेदबहुलाः पित्तासृक्श्लेष्मजन्तुभिः ॥ २२ ॥
कंगुसिद्धार्थकनिभाः पिटिकाः स्युररूंषिकाः ॥
कण्डूकचच्युतिस्वापरौक्ष्यकृत्स्फुटनं त्वचः ॥ २३ ॥
सुसूक्ष्मं कफवाताभ्यां विद्याद्दारुणकं तु तत् ॥
रोमकूपानुगं पित्तं वातेन सह मूर्च्छितम् ॥ २४ ॥
प्रच्यावयति रोमाणि ततः श्लेष्मा सशोणितः ॥
रोमकूपान्रुणद्ध्यस्य तेनान्येषामसम्भवः ॥ २५ ॥

तदिन्द्रलुप्तं रूढ्या च प्राहुश्चाचेति चापरे ॥
खलतेरपि जन्मैवं सदन तत्र तु क्रमात् ॥ २६ ॥
सा वाताद्ग्निदग्धाभा पित्तात्स्विन्नशिरावृता ॥
कफाद्घनत्वग्वर्णाश्च यथास्वं निर्दिशेत्त्वाचि ॥ २७ ॥
दोषैः सर्वाकृतिः सर्वैरसाध्या सा नखप्रभा ॥
दग्धाग्निनेव निर्लोमा सदाहा या च जायते ॥ २८ ॥
शोकश्रमक्रोधकृतः शरीरोष्मा शिरोगतः ॥
केशान्सदोप. पचति पलित सम्भवत्यत॰ ॥ २९ ॥
तद्वातात्स्फुटित श्याव खरं रूक्ष जलप्रभम् ॥
पित्तात्सदाहं पीताभ कफात्स्निग्ध विवृद्धिमत् ॥ ३० ॥
स्थूल सुशुक्र सर्वैस्तु विद्याद्व्यामिश्रलक्षणम् ॥
शिरोरुजोद्भव चान्यद्विवर्ण स्पर्शनासहम् ॥ ३१ ॥
असाध्या सन्निपातेन खलति पलितानि च ॥
शरीरपरिणामोत्थान्यपेक्षन्ते रसायनम् ॥ ३२ ॥

इत्यष्टाङ्गहृदयसंहितायामुत्तरस्थाने त्रयोविंशोऽध्याय ॥ २३ ॥

## चतुर्विंशोऽध्यायः ।

अथात॰ शिरोरोगप्रतिषेधमध्याय व्याख्यास्याम॰ ।
शिरोऽभितापेऽनिलजे वातव्याधिविधि चरेत् ॥
घृताभ्यक्तशिरा रात्रौ पिबदुष्णपयोनुप ॥ १ ॥
माषान्मुद्गान्कुलत्थान्वा तद्वत्खादेद्घृतान्वितान् ॥
तैल तिलाना कल्कं वा क्षीरेण सह पाययेत् ॥ २ ॥

पिण्डोपनाहस्वेदाश्च मांसधान्यकृता हिताः ॥
वातघ्नदशमूलादिसिद्धक्षीरेण सेचनम् ॥ ३ ॥
स्निग्धं नस्यं तथा धूमः शिरःश्रवणतर्पणम् ॥
वरणादौ गणे क्षुण्णे क्षीरमर्द्धोदकं पचेत् ॥ ४ ॥
क्षीरावशिष्टं तच्छीतं मथित्वा सारमाहरेत् ॥
ततो मधुरकैः सिद्धं नस्यं तत्पूजितं हविः ॥ ५ ॥
वर्गैऽत्र पक्वं क्षीरे च पेयं सर्पिः सशर्करम् ॥
कार्पासमज्जात्वङ्मुस्तासुमन-कोरकाणि च ॥ ६ ॥
नस्यमुष्णाम्बुपिष्टानि सर्वमूर्द्धरुजापहम् ॥
शर्कराकुङ्कुमशृतं घृतं पित्तासृगन्वये ॥ ७ ॥
प्रलेपः सघृतैः कुष्टकुटिलोत्पलचन्दनैः ॥
वातोद्रेकभयाद्रक्तं न चास्मिन्नवसेचयेत् ॥ ८ ॥
इत्यशान्तौ चले दाहः कफे चोष्णं यथोदितम् ॥
अर्द्धावभेदकेऽप्येषा यथादोषान्वया क्रिया ॥ ९ ॥
शिरीषबीजापामार्गमूलं नस्यं बिडान्वितम् ॥
स्थिरारसो वा लेपे तु प्रपुन्नाटोऽम्लकल्कितः ॥ १० ॥
सूर्य्यावर्ते तु तस्मिंस्तु शिरयापहरेदसृक् ॥
शिरोऽभितापे पित्तोत्थे स्निग्धस्य व्यधयेच्छिराम् ॥११॥
शीताशिरामुखालेपसेकशोधनबस्तयः ॥
जीवनीयशृते क्षीरसर्पिषी पाननस्ययोः ॥ १२ ॥
कर्त्तव्यं रक्तजेऽप्येतत्प्रत्याख्याय च शंखके ॥
श्लेष्माभितापेजीर्णाज्यस्नेहितः कटुकैर्वमेत् ॥ १३ ॥

स्वेदप्रलेपनस्याद्या रूक्षतीक्ष्णोष्णभेषजैः ॥
शस्यन्ते चोपवासोऽत्र निचये मिश्रमाचरेत् ॥ १४ ॥
कृमिजे शोणितं नस्यं तेन मूर्च्छन्ति जन्तवः ॥
मत्ता शोणितगन्धेन निर्यान्ति घ्राणवक्त्रयोः ॥ १५ ॥
सुतीक्ष्णनस्यधूमाभ्या कुर्यान्निर्हरण तत. ॥
विडङ्गस्वर्जिकादन्तीहिंगुगोमूत्रसाधितम् ॥ १६ ॥
कटुनिम्बेगुदीपीलुतैलं नस्यं पृथक्पृथक् ॥
अजामूत्रद्रुत नस्ये कृमिजित्कृमिजित्परम् ॥ १७ ॥
पूतिमत्स्ययुते. कुर्याद्धमं नावनभेषजैः ॥
कृमिभिः पीतरक्तत्वाद्रक्तमत्र न निर्हरेत् ॥ १८ ॥
वाताभितापविहित कम्पे दाहादिना क्रम. ॥
नवे जन्मोत्तरं जाते योजयेदुपशीर्षके ॥ १९ ॥
वातव्याधिक्रिया पक्के कर्म विद्रधिचोदितम् ॥
आमपक्के यथायोग्य विद्रधीपिटिकार्बुदे ॥ २० ॥
अरूषिकाजलौकोभिर्हृतास्रा निम्बवारिणा ॥
सिक्ता प्रभूतलवणैर्लिम्पेदश्वशकृद्रसैः ॥ २१ ॥
पटोलनिम्बपत्रैर्वा सहारिद्रै सुकल्कितैः ॥
गोमूत्रजीर्णपिण्याककुक्कवाकुमलैरपि ॥ २२ ॥
कपालभृष्ट कुष्ठ वा चूर्णितं तैलसयुतम् ॥
रूपिकालेपन कण्डूच्छेददाहार्तिनाशनम् ॥ २३ ॥
मालतीचित्रकाश्वघ्ननक्तमालप्रसाधितम् ॥
वचारूपिकयोस्तैलमभ्यङ्ग. क्षुरघृष्टयोः ॥ २४ ॥

अशान्तौ शिरसः शुद्ध्यै यतेत वमनादिभिः ॥
विध्येच्छिरां दारुणके ललाट्यां शीलयेन्मृजाम् ॥ २५ ॥
नावनं मूर्ध्नि बस्तिश्च लेपयेच्च समाक्षिकैः ॥
प्रियालबीजमधुककुष्ठमाषैः ससर्षपैः ॥ २६ ॥
लाक्षाशम्याकपत्रैडगजधात्रीफलैस्तथा ॥
कोरदूषतृणक्षारवारिप्रक्षालनं हितम् ॥ २७ ॥
इन्द्रलुप्ते यथासन्नं शिरां विद्ध्वा प्रलेपयेत् ॥
प्रच्छायगाढं कासीसमनोह्वातुत्थकोषणैः ॥ २८ ॥
वन्यामरतरुभ्यां वा गुञ्जामूलफलैस्तथा ॥
तथा लाङ्गलिकामूलैः करवीररसेन वा ॥ २९ ॥
सक्षौद्रक्षुद्रवार्ताकस्वरसेन रसेन वा ॥
धत्तूरकस्य पत्राणां भल्लातकरसेन वा ॥ ३० ॥
अथवा माक्षिकहविस्तिलपुष्पत्रिकण्टकैः ॥
तैलाक्ता हस्तिदन्तस्य मषी वा चौषधं परम् ॥ ३१ ॥
शुक्रोमोद्गमे तद्वन्मषी मेषविषाणजा ॥
वर्जयेद्वारिणा सेकं यावद्रोमसमुद्भवः ॥ ३२ ॥
खलतौ पलिते वल्यां हरिल्लोम्नि च शोधितम् ॥
नस्यवक्त्रशिरोऽभ्यङ्गप्रदेहैः समुपाचरेत् ॥ ३३ ॥
सिद्धं तैलं बृहत्याद्यैर्जीवनीयैश्च नावनम् ॥
मांसं वा निम्बजं तैलं क्षीरभुङ् नावयेद्यतिः ॥ ३४ ॥
नीलीशिरीषकोरण्टभृङ्गस्वरसभावितम् ॥
शैलक्षतिलरामाणां बीजं काकाण्डकीसमम् ॥ ३५ ॥

पिष्ट्वाजपयसा लोहाल्लिप्तादर्कांशुतापितात् ॥
तैल शृतं क्षीरभुजो नावनात्पलितान्तकृत् ॥ ३६ ॥
क्षीरात्सहचराद् भृङ्गरजस. सौरसाद्रसात् ॥
प्रस्थैस्तैलस्य कुडवासिद्धो यष्टीपलान्वितः ॥ ३७ ॥
नस्य शैलोद्भवे भाण्डे शृङ्गे मेषस्य वा स्थित ॥
क्षीरेण श्लक्ष्णपिष्टौ वा दुग्धिकाकरवीरकौ ॥ ३८ ॥
उत्पाट्य पलित देयावाशये पलितापहौ ॥
क्षीर प्रियाल यष्ट्याह्वं जीवनीयो गणस्तिला. ॥ ३९ ॥
कृष्णा. प्रलेपो वक्त्रस्य हरीलोमवलीहित. ॥
तिला सामलकाः पद्मकिञ्जल्को मधुकं मधु ॥ ४० ॥
बृहयेच्च रजे चैतत्केशान्मूर्द्धप्रलेपनात् ॥
माम्नी कुष्ठं तिला. कृष्णाः सारिवा नीलमुत्पलम् ॥४१॥
क्षौद्र च क्षीरपिष्टानि केशसंवर्द्धन परम् ॥
अयोरजो भृङ्गरजस्त्रिफला कृष्णमृत्तिका ॥ ४२ ॥
स्थितमिक्षुरसे मास समूलं पलित रजेत् ॥
माषकोद्रवधान्याम्लैर्यवागूस्त्रिदिनोषिता ॥ ४३ ॥
लोहशुक्लोत्कटा पिष्टा बलाकामपि रजयेत् ॥
प्रपौण्डरीकमधुकपिप्पलीचन्दनोत्पलैः ॥ ४४ ॥
सिद्धं धात्रीरसे तैल नस्येनाभ्यंजनेन च ॥
सर्वान्मूर्द्धगदान्हन्ति पलितानि च शीलितम् ॥ ४५ ॥
वरीजीवन्तिनिर्य्यासपयोभिर्यमक पचेत् ॥
जीवनीयैश्च तन्नस्य सर्वजत्रूर्ध्वरोगजित् ॥ ४६ ॥

मयूरं पक्षपित्तान्त्रपादविट्तुण्डवर्जितम् ॥
दशमूलबलारास्ना मधुकैस्त्रिपलैर्युतम् ॥ ४७ ॥
जले पक्त्वा घृतप्रस्थं तस्मिन्क्षीरसमं पचेत् ॥
कल्कितैर्मधुरद्रव्यैः सर्वजत्रूर्ध्वरोगजित् ॥ ४८ ॥
तदभ्यासीकृतं पानं बस्त्यभ्यञ्जननावनैः ॥
एतेनैव कषायेण घृतप्रस्थं विपाचयेत् ॥ ४९ ॥
चतुर्गुणेन पयसा कल्कैरभिश्च कार्षिकैः ॥
जीवन्तीत्रिफलामेदामृद्वीकादिपरूषकैः ॥ ५० ॥
समङ्गाचविकाभार्ङ्गीकाश्मरीकर्कटाह्वयैः ॥
आत्मगुप्तामहामेदातालखर्जूरमुस्तकैः ॥ ५१ ॥
मृणालबिसखर्जूरयष्टीमधुकजीवकैः ॥
शतावरीविदारीक्षुबृहतीसारिवायुगैः ॥ ५२ ॥
दूर्वाश्वदंष्ट्रर्षभकशृङ्गाटककसेरुकैः ॥
रास्नास्थिरातामलकीसूक्ष्मैला शठिपौष्करैः ॥ ५३ ॥
पुनर्नवातुगाक्षीरीकाकोलीधन्वयासकैः ॥
मधूकाक्षोटवाताममुंजाताभिषुकैरपि ॥ ५४ ॥
महामायूरमित्येतन्मायूरादधिकं गुणैः ॥
धात्विन्द्रियस्वरभ्रंशश्वासकासार्दितापहम् ॥ ५५ ॥
योन्यसृक्छुक्रदोषेषु शस्तं वन्ध्यासुतप्रदम् ॥
आखुभिः कर्कटैर्हंसैः शशैश्चेति प्रकल्पयेत् ॥ ५६ ॥
जत्रूर्ध्वजानां व्याधीनामेकत्रिंशच्छतद्वयम् ॥
परस्परमसङ्कीर्णं विस्तरेण प्रकाशितम् ॥ ५७ ॥

ऊर्ध्वमूलमधःशाखमृषयः पुरुषं विदुः ॥
मूलप्रहारिणस्तस्माद्रोगाञ्छीघ्रतरं जयेत् ॥ ५८ ॥
सर्वेन्द्रियाणि येनास्मिन्प्राणा येन च संश्रिताः ॥
तेन तस्योत्तमाङ्गस्य रक्षायामादृतो भवेत् ॥ ५९ ॥

इत्यष्टाङ्गहृदयसंहितायामुत्तरस्थाने चतुर्विंशोऽध्यायः ॥ २४ ॥

## पञ्चविंशोऽध्यायः ।

अथातो व्रणविज्ञानीयप्रतिषेधमध्यायं व्याख्यास्यामः ॥
व्रणो द्विधा निजागन्तुदुष्टशुद्धविभेदतः ॥
निजो दोषैः शरीरोत्थैरागन्तुर्बाह्यहेतुजः ॥ १ ॥
दोषैरधिष्ठितो दुष्टः शुद्धस्तैरनधिष्ठितः ॥
संवृतत्वं विवृतता काठिन्यं मृदुताऽपि वा ॥ २ ॥
अत्युत्सन्नावसन्नत्वमत्यौष्ण्यमतिशीतता ॥
रक्तत्वं पाण्डुता कार्ष्ण्यं पूतिपूयपरिस्रुतिः ॥ ३ ॥
पूतिमांसशिरास्नायुच्छन्नतोत्सङ्गितातिरुक् ॥
संरम्भदाहश्वयथुकण्ड्वादिभिरुपद्रुतिः ॥ ४ ॥
दीर्घकालानुबन्धश्च विद्याद्दुष्टव्रणाकृतिम् ॥
स पञ्चदशधा दोषैः सरक्तैस्तत्र मारुतात् ॥ ५ ॥
श्यावः कृष्णोऽरुणो भस्मकपोतास्थिनिभोऽपि च ॥
मस्तुमांसपुलाकाम्बुतुल्यतन्वल्पसंस्रुतिः ॥ ६ ॥
निर्मांसस्तोदभेदाढ्यो रूक्षश्चटचटायते ॥
पित्तेन क्षिप्रजः पीतो नीलः कपिलपिङ्गलः ॥ ७ ॥

मूत्रकिंशुकभस्माम्बुतैलोऽम्भोप्णवहुस्रुतिः ॥
क्षारोक्षितक्षतसमव्यथो रागोष्मपाकवान् ॥ ८ ॥
कफेन पाण्डुः कण्डूमान्वहुश्वेतघनस्रुतिः ॥
स्थूलौष्ठः कठिनः स्नायुशिराजालस्ततोऽल्परुक् ॥ ९ ॥
प्रवालरक्तो रक्तेन सरक्तं पूयमुद्गिरेत् ॥
वाजिस्थानसमो गन्धे युक्तो लिङ्गैश्च पैत्तिकैः ॥ १० ॥
द्वाभ्या त्रिभिश्च सर्वैश्च विद्याल्लक्षणसङ्करात् ॥
जिह्वाप्रभो मृदुः श्लक्ष्णः श्यावौष्ठपिटिकः समः ॥ ११ ॥
किञ्चिदुन्नतमध्यो वा व्रणः शुद्धोऽनुपद्रवः ॥
त्वगामिषशिरास्नायुसन्ध्यस्थीनि व्रणाशयाः ॥ १२ ॥
कोष्ठो मर्म्म च तान्यष्टौ दुःसाध्यान्युत्तरोत्तरम् ॥
सुसाध्यः सत्त्वमांसाग्निवयोबलवति व्रणः ॥ १३ ॥
वृत्तो दीर्घस्त्रिपुटकश्चतुरस्राकृतिश्च यः ॥
तथास्फिक्पायुमेढ्रोष्ठपृष्ठान्तर्वक्त्रगण्डगः ॥ १४ ॥
कृच्छ्रसाध्योऽक्षिदशननासिकापाङ्गनाभिषु ॥
सेवनीजठरश्रोत्रपार्श्वकक्षास्तनेषु च ॥ १५ ॥
फेनपूयानिलवहः शल्यवानूर्ध्वनिर्वमी ॥
भगन्दरोऽन्तर्वदनस्तथा कट्यास्थिसंश्रितः ॥ १६ ॥
कुष्ठिनां विषजुष्टानां शोषिणां मधुमेहिनाम् ॥
व्रणाः कृच्छ्रेण सिद्ध्यन्ति येषां च स्युर्व्रणे व्रणाः ॥१७॥
नैव सिद्ध्यन्ति वीसर्पज्वरातीसारकासिनाम् ॥
पिपासूनामनिद्राणां श्वासिनामविपाकिनाम् ॥ १८ ॥

भिन्ने शिरःकपाले वा मुस्तुलुङ्गस्य दर्शने ॥
स्नायुक्लेदाच्छिराछेदाद्गाम्भीर्य्यात्क्रिमिभक्षणात् ॥ १९ ॥
अस्थिभेदात्सशल्यत्वात्सविषत्वादतर्कितात् ॥
मिथ्याबन्धादतिस्नेहाद्रौक्ष्याद्रोमातिघट्टनात् ॥ २० ॥
क्षोभादशुद्धकोष्ठत्वात्सौहित्यादतिकर्षणात् ॥
मद्यपानाद्दिवास्वापाद्व्यवायाद्रात्रिजागरात् ॥ २१ ॥
व्रणो मिथ्योपचाराच्च नैव साध्योऽपि रोहति ॥
कपोतवर्णप्रतिमा यस्यान्ताः क्लेदवर्जिताः ॥ २२ ॥
स्थिराश्चिपिटिकावन्तो रोहतीति तमादिशेत् ॥
अथात्र शोफावस्थाया यथासन्न विशोधनम् ॥ २३ ॥
योज्य शोफो हि शुद्धाना व्रणश्चाशु प्रशाम्यति ॥
कुर्य्याच्छीतोपचारं तु शोफावस्थस्य सन्ततम् ॥ २४ ॥
दोषाग्निरग्निवत्तेन प्रयाति सहसा शमम् ॥
शोफे व्रणे च कठिने विवर्णे वेदनान्विते ॥ २५ ॥
विषयुक्ते विशेषेण जलौकाद्यैर्हरेदसृक् ॥
दुष्टास्रेऽपगदे सद्यः शोफरागरुजा शमः ॥ २६ ॥
हृते हृते च रुधिरे सुशीतैः स्पर्शवीर्य्ययो ॥
सुश्लक्ष्णैस्तदह पिष्टैः क्षीरेक्षुस्वरसद्रवैः ॥ २७ ॥
शतधौतघृतोपेतैर्मुहुरन्यैरशोषिभिः ॥
प्रतिलोम हितो लेपः सेकाभ्यङ्गाश्च तत्कृताः ॥ २८ ॥
न्यग्रोधोदुम्बराश्वत्थप्लक्षवेतसवल्कलैः ॥
प्रदेहो भूरिसर्पिर्भिः शोफनिर्वापण परम् ॥ २९ ॥

वातोल्बणानां स्तब्धानां कठिनानां महारुजाम् ॥
स्रुतासृजां च शोफानां व्रणानामपि चेदृशाम् ॥ ३० ॥
आनूपवेसवाराद्यैः स्वेदः सोमास्तिलाः पुनः ॥
भृष्टा निर्वापिताः क्षीरे तत्पिष्टादाहरुग्घराः ॥ ३१ ॥
स्थिरान्मन्दरुजः शोफान्स्नेहैर्वातकफापहैः ॥
अभ्यज्य स्वेदयित्वा च वेणुनाड्या शनैः शनैः ॥ ३२ ॥
विम्लापनार्थं मृद्नीयात्तलेनाङ्गुष्ठकेन वा ॥
यवगोधूममुद्गैश्च सिद्धपिष्टैः प्रलेपयेत् ॥ ३३ ॥
विलीयते स चेन्नैवं ततस्तमुपनाहयेत् ॥
अविदग्धस्तथा शान्तिं विदग्धः पाकमश्नुते ॥ ३४ ॥
सकोलतिलवल्लोमा दध्यम्ला सक्तुपिण्डिका ॥
सकिण्वकुष्ठलवणा कोष्णा शस्तोपनाहने ॥ ३५ ॥
सुपक्के पिण्डिते शोफे पीडनैरुपपीडिते ॥
दारणं दारणार्हस्य सुकुमारस्य चेष्यते ॥ ३६ ॥
गुग्गुल्वतसिगोदन्तस्वर्णक्षीरीकपोतविट् ॥
क्षारौषधानि क्षाराश्च पक्वशोफविदारणम् ॥ ३७ ॥
पूयगर्भानणुद्वारान्सोत्सङ्गान्मर्म्मगानपि ॥
निःस्नेहैः पीडनद्रव्यैः समन्तात्प्रतिपीडयेत् ॥ ३८ ॥
शुष्यन्तं समुपेक्षेत प्रलेपं पीडनं प्रति ॥
न मुखे चैनमालिम्पेत्तथा दोषः प्रसिच्यते ॥ ३९ ॥
कलाययवगोधूममाषमुद्गहरेणवः ॥
द्रव्याणां पिच्छिलानां च त्वङ्मूलानि प्रपीडनम् ॥ ४० ॥

सतत क्षालनार्थेषु सुरसारग्वधादिकौ ॥
भृशं दुष्टे व्रणे योज्यौ मेहकुष्ठव्रणेषु च ॥ ४१ ॥
अथवा क्षालन काथ पटोलीनिम्बपत्रजः ॥
अविशुद्धे विशुद्धे तु न्यग्रोधादित्वगुद्भवः ॥ ४२ ॥
पटोलीतिलयष्ट्याह्वत्रिवृद्दन्तीनिशाद्वयम् ॥
निम्बपत्राणि चालेपः सपटुर्व्रणशोधन ॥ ४३ ॥
व्रणान्विशोधयेद्वर्त्या सूक्ष्मास्यान्सन्धिमर्म्मगान् ॥
कृतया त्रिवृतादन्तीलाङ्गलीमधुसैन्धवैः ॥ ४४ ॥
वाताभिभूतान्सास्रावान्धूपयेदुग्रवेदनान् ॥
यवाज्यभूर्जमदनश्रीवेष्टकसुराह्वयै. ॥ ४५ ॥
निर्वापयेद्भृशं शीतै. पित्तरक्तविषोल्वणान् ॥
शुष्काल्पमासे गम्भीरे व्रण उत्सादनं हितम् ॥ ४६ ॥
न्यग्रोधपद्मकादिभ्यामश्वगन्धाबलातिलै. ॥
अद्यान्मासादमासानि विधिनोपहितानि च ॥ ४७ ॥
मास मासादमासेन वर्द्धते शुद्धचेतसः ॥
उत्सन्नमृदुमासाना व्रणानामवसादनम् ॥ ४८ ॥
जातीमुकुलकासीसमनोह्वालपुराग्निकै ॥
उत्सन्नमासान्कठिनान्कण्डूयुक्ताश्चिरोत्थितान् ॥ ४९ ॥
व्रणान्सुदु'खशोध्याश्च शोधयेत्क्षारकर्म्मणा ॥
स्रवन्तोऽश्मरिजामूत्र ये चान्ये रक्तवाहिन. ॥ ५० ॥
छिन्नाश्च सन्धयो येषां यथोक्तैर्ये च शोधनैः ॥
शोध्यमाना न शुध्यन्ति शोध्याः स्युस्तेऽग्निकर्मणा॥५१॥

शुद्धाना रोपणं योज्यमुत्सादाय यदीरितम् ॥
अश्वगन्धारुहारोध्रं कट्फलं मधुयष्टिका ॥ ५२ ॥
समङ्गाधातकीपुष्पं परमं व्रणरोपणम् ॥
अपेतपूतिमांसानां मांसस्थानामरोहताम् ॥ ५३ ॥
कल्कं सरोहणं कुर्यात्तिलानां मधुकान्वितम् ॥
स्निग्धोष्णतिक्तमधुरकषायत्वैः स सर्वजित् ॥ ५४ ॥
सक्षौद्रनिम्बपत्राभ्यां युक्तः संशोधनं परम् ॥
पूर्वाभ्यां सर्पिषा चासौ युक्तः स्यादाशुरोपणः ॥ ५५ ॥
तिलवद्यवकल्कं तु केचिदिच्छन्ति तद्विदः ॥
सास्रपित्तविषागन्तुगम्भीरान्सोष्मणो व्रणान् ॥ ५६ ॥
क्षीररोपणभैषज्यं शृतेनाज्येन रोपयेत् ॥
रोपणौषधसिद्धेन तैलेन कफवातजान् ॥ ५७ ॥
काच्छीरोध्राभयासर्जसिन्दूराञ्जनतुत्थकम् ॥
चूर्णितं तैलमदनैर्युक्तं रोपणमुत्तमम् ॥ ५८ ॥
समानां स्थिरमांसानां त्वक्स्थानां चूर्ण इष्यते ॥
ककुभोदुम्बराश्वत्थजम्बूकट्फलरोध्रजैः ॥ ५९ ॥
त्वचमाशु निगृह्णन्ति त्वक्चूर्णैश्चूर्णिता व्रणाः ॥
लाक्षामनोह्वामञ्जिष्ठाहरितालनिशाद्वयैः ॥ ६० ॥
प्रलेपः सघृतक्षौद्रस्त्वग्विशुद्धिकरः परम् ॥
कालीयकलताम्रास्थिहेमकालारसोत्तमैः ॥ ६१ ॥
लेपः सगोमयरसः सवर्णकरणः परम् ॥
दग्धो वारणदन्तोऽन्तर्धूमं तैलं रसाञ्जनम् ॥ ६२ ॥

रामसञ्जननो लेपस्तद्वत्तैलपरिप्लुता ॥
चतुष्पान्नखरोमास्थित्वक्छृङ्गखुरजा मषी ॥ ६३ ॥
व्रणिन शस्त्रकर्म्मोक्तं पथ्यापथ्यान्नमादिशेत् ॥
द्वे पञ्चमूले वर्गश्च वातघ्नो वातिके हितः ॥ ६४ ॥
न्यग्रोधपद्मकाद्यौ तु तद्वात्पित्तप्रदूषिते ॥
आरग्वधादि श्लेष्मघ्न' कफे मिश्रस्तु मिश्रके ॥ ६५ ॥
एभि प्रक्षालनालेपघृततैलरसक्रिया ॥
चूर्णो वर्त्तिश्च संयोज्या व्रणे सप्त यथायथम् ॥ ६६ ॥
जातीनिम्बपटोलपत्रकटुकादार्वीनिशासारिवा
मञ्जिष्ठाभयसि क्थतुत्थमधुकैर्नक्ताह्वबीजान्वितै• ॥
सर्पि साध्यमनेन सूक्ष्मवदना मर्म्माश्रिता क्लेदिनो
गम्भीराः सरुजो व्रणा सगतयःशुध्यन्ति रोहन्ति च ६७

इत्यष्टाङ्गहृदयसंहितायामुत्तरस्थाने पञ्चविंशोऽध्याय समाप्त ॥ २५ ॥

## षड्विंशोऽध्यायः ।

अथात सद्योव्रणप्रतिषेधमध्यायं व्याख्यास्याम• ।
सद्योव्रणा ये सहसा सम्भवन्त्यभिघातत• ॥
अनन्तैरपि तैरङ्गमुच्यते जुष्टमष्टधा ॥ १ ॥
घृष्टावकृत्तविच्छिन्नप्रविलम्बितपातितम् ॥
विद्ध भिन्न विदलित तत्र घृष्ट लसीकया ॥ २ ॥
रक्तलेशेन वा युक्तं सप्लोप छेदनात्स्रवेत् ॥
अवगाढ तत• कृत्त विच्छिन्नं स्यात्ततोऽपि च ॥ ३ ॥

अविलम्बि सशोपेऽस्थि पातितं पतितं तनोः ॥
सूक्ष्मास्यं शल्यविद्धं तु विद्धं कोष्ठविवर्जितम् ॥ ४ ॥
भिन्नसन्ध्यद्विदलितं मज्जरक्तपरिस्रुते ॥
प्रहारपीडनोत्पेषात्सहास्थ्ना पृथुतां गतम् ॥ ५ ॥
सद्यः सद्योव्रणं सिञ्चेदथ यष्ट्याह्वसर्पिषा ॥
तीव्रव्यथं कवोष्णेन बलातैलेन वा पुनः ॥ ६ ॥
क्षतोष्मणो निग्रहार्थं तत्कालं विसृतस्य च ॥
कषायशीतमधुरस्निग्धा लेपादयो हिताः ॥ ७ ॥
सद्योव्रणेष्वायतेषु सन्धानार्थं विशेषतः ॥
मधु सर्पिश्च युञ्जीत पित्तघ्नीश्च हिमाः क्रियाः ॥ ८ ॥
ससंरम्भेषु कर्त्तव्यमूर्ध्वं चाधश्च शोधनम् ॥
उपवासो हितं भुक्तं प्रततं रक्तमोक्षणम् ॥ ९ ॥
घृष्टे विदलिते चैष सुतरामिष्यते विधिः ॥
तयोर्ह्यल्पं स्रवत्यस्रं पाकस्तेनाशु जायते ॥ १० ॥
अत्यर्थमस्रं स्रवति प्रायशोऽन्यत्र विक्षते ॥
ततो रक्तक्षयाद्वायौ कुपितेऽतिरुजाकरे ॥ ११ ॥
स्नेहपानपरीषेकस्वेदलेपोपनाहनम् ॥
स्नेहबस्तिं च कुर्वीत वातघ्नौषधसाधितम् ॥ १२ ॥
इति साप्ताहिकः प्रोक्तः सद्योव्रणहितो विधिः ॥
सप्ताहाद्गतवेगे तु पूर्वोक्तं विधिमाचरेत् ॥ १३ ॥
प्रायः सामान्यकर्म्मेदं वक्ष्यते तु पृथक्पृथक् ॥
घृष्टे रुजं निगृह्याशु व्रणे चूर्णानि योजयेत् ॥ १४ ॥

कल्कादीन्यवकृत्ते तु विच्छिन्नप्रविलम्बिनो' ॥
सीवन विधिनोक्तेन बन्धनं चानुपीडनम् ॥ १५ ॥
असाध्यं स्फुटित नेत्रमदीर्णं लम्बते तु यत् ॥
सन्निवेश्य यथास्थानमव्याविद्धसिर भिषक् ॥ १६ ॥
पीडयेत्पाणिना पद्मपलाशान्तरितेन तत् ॥
ततोऽस्य सेचने नस्ये तर्पणे च हित हवि' ॥ १७ ॥
विपक्वमाजं यष्ट्याह्वजीवकर्षभकोत्पलै· ॥
सवयस्कैः परं तद्धि सर्वनेत्राभिघातजित् ॥ १८ ॥
गलपीडावसन्नेऽक्षिण वमनोत्क्लेशनक्षवा· ॥
प्राणायामोऽथ वा कार्य्यः क्रिया च क्षतनेत्रवत् ॥ १९ ॥
कर्णे स्थानाच्युते स्यूते स्रोतस्तैलेन पूरयेत् ॥
कृकाटिकाया छिन्नाया निर्गच्छत्यपि मारुते ॥ २० ॥
समं निवेश्य बध्नीयात्स्यूत्वा शीघ्रं निरन्तरम् ॥
आजेन सर्पिषा चात्र परिषेक· प्रशस्यते ॥ २१ ॥
उत्तानोऽन्नानि भुञ्जीत शयीत च सुयन्त्रित' ॥
घातं शाखासु तिर्यक्स्थ गात्रे सम्यङ्निवेशिते ॥ २२ ॥
स्यूत्वा वेल्लितबन्धेन बध्नीयाद्घनवाससा ॥
चर्मणा गोष्फणाबन्ध· कार्यश्चासंगते व्रणे ॥ २३ ॥
पादौ विलम्बिमुष्कस्य प्रोक्ष्य नेत्रे च वारिणा ॥
प्रवेश्य वृषणौ सीव्येत्सेवन्या तुन्नसंज्ञया ॥ २४ ॥
कार्यश्च गोष्फणाबन्ध· कट्यामावेश्य पट्टकम् ॥
स्नेहसेकं न कुर्वीत तत्र क्लिद्यति हि व्रणः ॥ २५ ॥

कालानुसार्य्यगुर्वेलाजातीचन्दनपर्पटैः ॥
शिलादार्व्यमृतातुत्थैः सिद्धं तैलं च रोपणम् ॥ २६ ॥
छिन्नां निःशेषतः शाखां दग्ध्वा तैलेन युक्तितः ॥
बध्नीयात्कोशबन्धेन ततो व्रणवदाचरेत् ॥ २७ ॥
कार्य्या शल्याहृते विद्धे भङ्गाद्विदलिते क्रिया ॥
शिरसोऽपहृते शल्ये बालवर्तिं प्रवेशयेत् ॥ २८ ॥
मस्तुलुङ्गे स्रुते क्रुद्धो हन्यादेनं चलोऽन्यथा ॥
व्रणे रोहति चैकैकं शनैरपनयेत्कचम् ॥ २९ ॥
मस्तुलुङ्गस्रुतौ खादेन्मास्तिष्कानन्यजीवजान् ॥
शल्ये हृतेऽङ्गादन्यस्मात्स्नेहवर्तिं निधापयेत् ॥ ३० ॥
दूरावगाढाः सूक्ष्मास्या ये व्रणाः स्रुतशोणिताः ॥
सेचयेच्चक्रतैलेन सूक्ष्मनेत्रार्पितेन तान् ॥ ३१ ॥
भिन्ने कोष्ठेऽसृजाऽपूर्णे मूर्छाहृत्पार्श्ववेदनाः ॥
ज्वरो दाहतृडाध्मानं भक्तस्यानभिनन्दनम् ॥ ३२ ॥
संगो विण्मूत्रमरुतां श्वासः स्वेदोऽक्षिरक्तता ॥
लोहगन्धित्वमास्यस्य स्याद्गात्रे च विगन्धता ॥ ३३ ॥
आमाशयस्थे रुधिरे रुधिरं छर्दयत्यपि ॥
आध्मानेनातिमात्रेण शूलेन च विशस्यते ॥ ३४ ॥
पक्वाशयस्थे रुधिरे सशूलं गौरवं भवेत् ॥
नाभेरधस्ताच्छीतत्वं खेभ्यो रक्तस्य चागमः ॥ ३५ ॥
अभिन्नोऽप्याशयः सूक्ष्मैः स्रोतोभिरभिपूर्य्यते ॥
असृजा स्पन्दमानेन पार्श्वे मूत्रेण बस्तिवत् ॥ ३६ ॥

तत्रान्तर्लोहितं शीतपादोच्छ्वासकराननम् ॥
रक्ताक्षं पाण्डुवदनमानद्धं च विवर्जयेत् ॥ ३७ ॥
आमाशयस्थे वमनं हितं पक्वाशयाश्रये ॥
विरेचनं निरूहं च निःस्नेहोष्णैर्विशोधनैः ॥ ३८ ॥
यवकोलकुलत्थानां रसैः स्नेहविवर्जितैः ॥
भुंजीतान्नं यवागूं वा पिबेत्सैन्धवसंयुताम् ॥ ३९ ॥
अतिनिस्स्रुतरक्तस्तु भिन्नकोष्ठः पिबेदसृक् ॥
छिन्नभिन्नान्त्रभेदेन कोष्ठभेदो द्विधा स्मृतः ॥ ४० ॥
मूर्च्छादयोऽल्पाः प्रथमे द्वितीये त्वतिबाधकाः ॥
छिन्नान्त्रः संशयी देही भिन्नान्त्रो नैव जीवति ॥ ४१ ॥
यथास्वमार्गमापन्ना यस्य विण्मूत्रमारुताः ॥
व्युपद्रवः सभिन्नेऽपि कोष्ठे जीवत्यसंशयम् ॥ ४२ ॥
अभिन्नमन्त्रं निष्क्रान्तं प्रवेश्यं न त्वतोऽन्यथा ॥
उत्पङ्किलशिरोग्रस्तं तदप्येके वदन्ति तु ॥ ४३ ॥
प्रक्षाल्य पयसा दिग्धं तृणशोणितपांशुभिः ॥
प्रवेशयेत्स्लक्ष्णनखो घृतेनाक्तं शनैःशनैः ॥ ४४ ॥
क्षीरेणार्द्रीकृतं शुष्कं भूरिसर्पिः परिप्लुतम् ॥
अङ्गुल्या प्रमृशेत्कण्ठं जलेनोद्वेजयेदपि ॥ ४५ ॥
तथान्त्राणि विशन्त्यन्तस्तत्कालं पीडयन्ति च ॥
व्रणसौक्ष्म्याद्बहुत्वाद्वा कोष्ठमन्त्रमनाविशत् ॥ ४६ ॥
तत्प्रमाणेन जठरं पाटयित्वा प्रवेशयेत् ॥
यथास्थानं स्थिते सम्यगन्त्रे सीव्येदनुव्रणम् ॥ ४७ ॥

स्थानादपेतमादत्ते जीवितं कुपितं च तत् ॥
वेष्टयित्वानुपट्टेन घृतेन परिषेचयेत् ॥ ४८ ॥
पाययेत्तं ततः कोष्णं चित्रातैलयुतं पयः ॥
मृदुक्रियार्थं शकृतो वायोश्चाधः प्रवृत्तये ॥४९ ॥
अनुवर्तेत वर्षं च यथोक्तां व्रणयन्त्रणाम् ॥
उदरान्मेदसो वर्तिं निर्गतां भस्मना मृदा ॥ ५० ॥
अवकीर्य्य कषायैर्वा श्लक्ष्णैर्मूलैस्ततः समम् ॥
दृढं बद्ध्वा च सूत्रेण वर्द्धयेत्कुशलो भिषक् ॥ ५१ ॥
तीक्ष्णेनाग्निप्रतप्तेन शस्त्रेण सकृदेव तु ॥
स्यादन्यथा रुगाटोपो मृत्युर्वा छिद्यमानया ॥ ५२ ॥
सक्षौद्रे च व्रणे बद्धे सुजीर्णेऽन्ने घृतं पिबेत् ॥
क्षीरं वा शर्कराचित्रालाक्षागोक्षुरकैः शृतम् ॥ ५३ ॥
रुग्दाहजित्सयष्ट्याह्वैः परं पूर्वोदितो विधिः ॥
मेदोग्रन्थ्युदितं तत्र तैलमभ्यञ्जने हितम् ॥ ५४ ॥
तालीशं पद्मकं मांसी हरेण्वगुरुचन्दनम् ॥
हरिद्रे पद्मबीजानि सोशीरं मधुकं च तैः ॥ ५५ ॥
पक्वं सद्योव्रणेषूक्तं तैलं रोपणमुत्तमम् ॥
गूढप्रहाराभिहते पतिते विषमोच्चकैः ॥ ५६ ॥
कार्य्यं वातास्रजित्तृप्तिमर्दनाभ्यंजनादिकम् ॥ ५७ ॥
विश्लिष्टदेहं मथितं क्षीणं मर्माहताहतम् ॥
वासयेत्तैलपूर्णायां द्रोण्यां मांसरसाशिनम् ॥ ५८ ॥

इत्यष्टाङ्गहृदयसंहितायामुत्तरस्थाने षड्विंशोऽध्यायः॥ २६ ॥

# सप्तविंशोऽध्यायः ।



अथातो भङ्गप्रतिषेधमध्याय व्याख्यास्यामः ।
पातघातादिभिर्द्वेधा भङ्गोऽस्थ्ना सन्ध्यसन्धित ॥
प्रसारणाकुञ्चनयोरशक्तिः सन्धिमुक्तता ॥ १ ॥
इतरस्मिन्भृशं शोफ. सर्वावस्थास्वतिव्यथा ॥
अशक्तिश्चेष्टितेऽल्पेऽपि पीड्यमाने सशब्दता ॥ २ ॥
समासादिति भङ्गस्य लक्षण वहुधा तु तत् ॥
भिद्यते भङ्गभेदेन तस्य सर्वस्य साधनम् ॥ ३ ॥
यथा स्यादुपयोगाय तथा तदुपदेक्ष्यते ॥
प्राज्याणुदारि यत्त्वस्थिस्पर्शे शब्द करोति यत् ॥ ४ ॥
यत्रास्थिलेश प्रविशेन्मध्यमस्थो विदारित ॥
भग्नं यच्चाभिघातेन किञ्चिदेवावशेषितम् ॥ ५ ॥
उन्नम्यमान क्षतवद्यच्च मज्जानि मज्जति ॥
तद्दुःसाध्य कृशाशक्तवातलाल्पाशिनामपि ॥ ६ ॥
भिन्न कपालं यत्कट्या सन्धिमुक्त च्युत च यत् ॥
जघन प्रतिपिष्टं च भग्नं यत्तद्विवर्जयेत् ॥ ७ ॥
असश्लिष्टकपाल च ललाटं चूर्णित तथा ॥
यच्च भग्न भवेच्छंखशिर पृष्ठस्तनान्तरे ॥ ८ ॥
सम्यग्यमितमप्यस्थि दुर्न्यासाद्दुर्निबन्धनात् ॥
सक्षोभादपि यद्गच्छेद्विक्रिया तद्विवर्जयेत् ॥ ९ ॥

आदितो यच्च दुर्जातमस्थिसन्धिरथापि वा ॥
तरुणास्थीनि भुज्यन्ते भुज्यन्ते नलकानि तु ॥ १० ॥
कपालानि विभिद्यन्ते स्फुटन्त्यन्यानि भूयसा ॥
अथावनतमुन्नम्यमुन्नतं चावपीडयेत् ॥ ११ ॥
आञ्छेदति क्षिप्तमधोगतं चोपरि वर्त्तयेत् ॥
आञ्छनोत्पीडनोन्नामचर्म्मसंक्षेपबन्धनैः ॥ १२ ॥
सन्धीञ्छरीरगान्सर्वाश्चलानप्यचलानपि ॥
इत्येतैः स्थापनोपायैः सम्यक्संस्थाप्य निश्चलम् ॥ १३॥
पट्टैः प्रभूतसर्पिर्भिर्वेष्टयित्वा सुखैस्ततः ॥
कदम्बोदुम्बराश्वत्थसर्ज्जार्जुनपलाशजैः ॥ १४ ॥
वंशोद्भवैर्वा पृथुभिस्तनूभिः सुनिवेशितैः ॥
सुश्लक्ष्णैः सुप्रतिस्तम्भैर्वल्कलैः शकलैरपि ॥ १५ ॥
कुशाह्वयैः समं बन्धं पक्षस्योपरि योजयेत् ॥
शिथिलेन हि बन्धेन सन्धेः स्थैर्य्यं न जायते ॥ १६ ॥
गाढेनातिरुजादाहपाकश्वयथुसम्भवः ॥
त्र्यहात्त्र्यहादृतौ घर्मे सप्ताहान्मोक्षयेद्धिमे ॥ १७
साधारणे तु पञ्चाहाद्भङ्गदोषवशेन वा ॥
न्यग्रोधादिकषायेण ततः शीतेन सेचयेत् ॥ १८ ॥
तं पञ्चमूलपक्वेन पयसा तु सवेदनम् ॥
सुखोष्णं वावचार्य्यं स्याच्चक्रतैलं विजानता ॥ १९ ॥
विभज्य देशं कालं च वातघ्नौषधसंयुतम् ॥
प्रततं सेकलेपांश्च विदध्याद् भृशशीतलान् ॥ २० ॥

गृष्टिक्षीरंससर्पिष्कं मधुरौषधसाधितम् ॥
प्रातःप्रातः पिबेद्भग्नः शीतलं लाक्षया युतम् ॥ २१ ॥
सव्रणस्य तु भग्नस्य व्रणो मधुघृतोत्तरैः ॥
कषायैः प्रतिसार्य्योऽथ शेषो भङ्गोदितः क्रमः ॥ २२ ॥
लम्बानि व्रणमांसानि प्रलिप्य मधुसर्पिषा ॥
सन्दधीत व्रणान्वैद्यो बन्धनैश्चोपपादयेत् ॥ २३ ॥
तान्समान्सुस्थिताञ्ज्ञात्वा फलिनीरोध्रकट्फलैः ॥
समङ्गाधातकीयुक्तैश्चूर्णितैरवचूर्णयेत् ॥ २४ ॥
धातकीरोध्रचूर्णैर्वा रोहन्त्याशु तथा व्रणाः ॥
इति भङ्ग उपक्रान्तः स्थिरधातोर्ऋतौ हिमे ॥ २५ ॥
मांसलस्याल्पदोषस्य सुसाध्यो दारुणोऽन्यथा ॥
पूर्वमध्यान्तवयसामेकद्वित्रिगुणैः क्रमात् ॥ २६ ॥
मासैः स्थैर्य्यं भवेत्सन्धेर्यथोक्तं भजतो विधिम् ॥
कटीजंघोरुभग्नानां कपाटशयनं हितम् ॥ २७ ॥
यन्त्रणार्थं तथा कीलाः पञ्च कार्य्या निबन्धनाः ॥
जघोर्वोः पार्श्वयोर्द्वौ द्वौ तले एकश्च कीलकः ॥ २८ ॥
श्रोण्यां वा पृष्ठवंशे वा वक्षस्याक्षकयोस्तथा ॥
विमोक्षे भग्नसन्धीनां विधिमेवं समाचरेत् ॥ २९ ॥
सन्धींश्चिरविमुक्तांस्तु स्निग्धस्विन्नान्मृदूकृतान् ॥
उक्तैर्विधानैर्बुद्ध्या च यथास्वं स्थानमानयेत् ॥ ३० ॥
असन्धिभग्ने रूढे तु विषमोल्बणसाधिते ॥
आपोथ्य भङ्गं यमयेत्ततो भग्नवदाचरेत् ॥ ३१ ॥

भग्नं नैति यथा पाकं प्रयतेत तथा भिषक् ॥
पक्वमांसशिरास्नायुसन्धिः श्लेषं न गच्छति ॥ ३२ ॥
वातव्याधिविनिर्दिष्टान्स्नेहान्भग्नस्य योजयेत् ॥
चतुःप्रयोगान्बल्यांश्च वस्तिकर्म्म च शीलयेत् ॥ ३३ ॥
शाल्याज्यरसदुग्धाद्यैः पैष्टिकैरविदाहिभिः ॥
साक्षयोपचरेद्भग्नं सन्धिसंश्लेषकारिभिः ॥ ३४ ॥
ग्लानिर्न शस्यते तस्य सन्धिविश्लेषकृद्धि सा ॥
लवणं कटुकं क्षारमम्लं मैथुनमातपम् ॥
व्यायामं च न सेवेत भग्नो रूक्षं च भोजनम् ॥ ३५ ॥

कृष्णांस्तिलान्विरजसो दृढवस्त्रबद्धा
न्सप्तक्षपा वहति वारिणि वासयेत ॥
संशोषयेदनुदिनं प्रविसार्य चैता
न्क्षीरे तथैव मधुककथिते च तोये ॥ ३६ ॥

पुनरपि पीतपयस्कांस्तान्पूर्ववदेव शोषितान्बाढम् ॥
विगततुषानरजस्कान्संचूर्ण्य सुचूर्णितैर्युंज्यात् ॥ ३७ ॥
नलदवालकलोहितयष्टिकानखमिशिप्लुवकुष्ठबलात्रयैः ॥
अगरुचन्दनकुंकुमसारिवासरलसर्जरसामरदारुभिः ॥ ३८ ॥
पद्मकादिगणोपेतैस्तिलपिष्टं ततश्च तत् ॥
समस्तगन्धभैषज्यसिद्धदुग्धेन पीडयेत् ॥ ३९ ॥
शैलेयरास्नांशुमतीकसेरुकालानुसारीनतपत्ररोध्रैः ॥
सक्षीरयुक्तैः सपयस्कदूर्वैस्तैलं पचेत्तन्नलदादिभिश्च॥४०॥

गन्धतैलमिदमुत्तममस्थिस्थैर्य्यकृज्जयति चाशु विकारान् ॥
वातपित्तजनितानतिवीर्य्यान्व्यापिनोऽपि विविधैरुपयोगैः॥४१

इत्यष्टाङ्गहृदयसंहितायामुत्तरस्थाने सप्तविंशोऽध्यायः ॥ २७ ॥

## अष्टाविंशोऽध्यायः।

अथातो भगन्दरप्रतिषेधमध्यायं व्याख्यास्यामः।
हस्त्यश्वपृष्ठगमनकठिनोत्कटकासनैः ॥
अर्शोनिदानाभिहितैरपरैश्च निषेवितैः ॥ १ ॥
अनिष्टादृष्टपाकेन सद्यो वा साधुगर्हणैः ॥
प्रायेण पिटिकापूर्वो योऽङ्गुले द्व्यङ्गुलेऽपि वा ॥ २ ॥
पायोर्व्रणोऽन्तर्बाह्यो वा दुष्टासृङ्मांसगो भवेत् ॥
बस्तिमूत्राशयाभ्यासगतत्वात्स्यन्दनात्मकः ॥ ३ ॥
भगन्दरः स सर्वश्च दारयत्यक्रियावतः ॥
भगबस्तिगुदांस्तेषु दीर्य्यमाणेषु भूरिभिः ॥ ४ ॥
वातमूत्रशकृच्छुक्रं खैः सूक्ष्मैर्वमति क्रमात् ॥
दोषैः पृथग्युतैः सर्वैरागन्तुः सोऽष्टमः स्मृतः ॥ ५ ॥
अपक्वं पिटिकामाहुः पाकप्राप्तं भगन्दरम् ॥
गूढमूला ससंरम्भा रुगाढ्या रूढकोपिनीम् ॥ ६ ॥
भगन्दरकरीं विद्यात्पिटिकां न त्वतोऽन्यथा ॥
तत्र श्यावारुणा तोदभेदस्फुरणरुक्करी ॥ ७ ॥
पिटिका मारुतात्पित्तादुष्ट्रग्रीवावदुच्छ्रिता ॥
रागिणी तनुरूष्माढ्या ज्वरधूमायनान्विता ॥ ८ ॥

स्थिरा स्निग्धा महामूला पाण्डुः कण्डूमती कफात् ॥
श्यावा ताम्रा सदाहोषा घोररुग्वातपित्तजा ॥ ९ ॥
पांडुरा किञ्चिदाश्यावा कृच्छ्रपाका कफानिलात् ॥
पादाङ्गुष्ठसमा सर्वैर्दोषैर्नानाविधव्यथा ॥ १० ॥
शूलारोचकतृड्दाहज्वरच्छर्दिरुपद्रुता ॥
व्रणतां यान्ति ताः पक्काः प्रमादात्तत्र वातजाः ॥ ११ ॥
दीर्य्यतेऽणुमुखैश्छिद्रैः शतपोनकवत्क्रमात् ॥
अच्छं स्रवद्भिरास्रावमजस्रं फेनसंयुतम् ॥ १२ ॥
शतपोनकसंज्ञोऽयमुष्ट्रग्रीवस्तु पित्तजः ॥
बहुपिच्छापरिस्रावी परिस्रावी कफोद्भवः ॥ १३ ॥
वातपित्तात्परिक्षेपी परिक्षिप्य गुदं गतिः ॥
जायते परितस्तत्र प्राकारपरिखेव च ॥ १४ ॥
ऋजुर्वातकफादृज्व्या गुदो गत्या तु दीर्य्यते ॥
कफपित्ते तु पूर्वोत्थं दुर्नामाश्रित्य कुप्यतः ॥ १५ ॥
अर्शोमूले ततः शोफः कण्डूदाहादिमान्भवेत् ॥
स शीघ्रं पक्वभिन्नोऽस्य क्लेदयन्मूलमर्शसः ॥ १६ ॥
स्रवत्यजस्रं गतिभिरयमर्शो भगन्दरः ॥
सर्वजः शम्बुकावर्त्तः शम्बुकावर्त्तसन्निभः ॥ १७ ॥
गतयो दारयन्त्यस्मिन्रुग्वेगैर्दारुणैर्गुदम् ॥
अस्थिलेशोऽभ्यवहृतो मांसवृद्ध्या यदा गुदम् ॥ १८ ॥
क्षणोति तिर्य्यङ्ङ् निर्गच्छन्नुन्मार्गं क्षततो गतिः ॥
स्याच्ततः पूयदीर्णायां मांसकोथेन तत्र च ॥ १९ ॥

जायन्ते कृमयस्तस्य खादन्त परितो गुदम् ॥
विदारयन्ति न चिरादुन्मार्गी क्षतजश्च स ॥ २० ॥
तेषु रुग्दाहकण्ड्वादीन्विद्याद्व्रणनिषेधत. ॥
षट्कृच्छ्रसाधनास्तेषा निचयक्षतजौ त्यजेत् ॥ २१ ॥
प्रवाहिनी वली प्राप्त सेवनी वा समाश्रितम् ॥
अथास्य पिटिकामेव तथा यत्नादुपाचरेत् ॥ २२ ॥
शुद्ध्यासृक्स्रुतिसेकाद्यैर्यथा पाकं न गच्छति ॥
पाके पुनरुपस्निग्ध स्वेदित चावगाहत. ॥ २३ ॥
यन्त्रयित्वार्शसमिव पश्येत्सम्यग्भगन्दरम् ॥
अर्वाचीन पराचीनमन्तर्मुखवहिर्मुखम् ॥ २४ ॥
अथान्तर्मुखमेषित्वा सम्यक्छस्त्रेण पाटयेत् ॥
वहिर्मुख च नि शेष तत. क्षारेण साधयेत् ॥ २५ ॥
अग्निना वा भिषक्साधुक्षारेणैवोष्ट्रकन्धरम् ॥
नाडीरेकान्तरा कृत्वा पाटयेच्छतपोनकम्॥ २६ ॥
तासु रूढासु शेषाश्च मृत्युदीर्णे गुदेऽन्यथा ॥
परिक्षेपिणि चाप्येवं नाड्युक्तै क्षारसूत्रकै. ॥ २७ ॥
अर्शोभगन्दरे पूर्वमर्शांसि प्रतिसाधयेत् ॥
त्यक्त्वोपचर्य्य. क्षतज शल्य शल्यवतस्ततः॥ २८ ॥
आहरेच्च तथा दद्यात्कृमिघ्न लेपभोजनम् ॥
पिण्डनाड्यादय स्वेदा सुस्निग्धा रुजि पूजिता ॥ २९ ॥
सर्वत्र च वहुच्छिद्रे छेदानालोच्य योजयेत् ॥
गोतीर्थसर्वतोभद्रदललाङ्गललाङ्गलान् ॥ ३० ॥

पार्श्वं गतेन शस्त्रेणच्छेदो गोतीर्थको मतः ॥
सर्वतः सर्वतोभद्रः पार्श्वच्छेदोऽर्द्धलाङ्गलः ॥ ३१ ॥
पार्श्वद्वये लाङ्गलकः समस्तांश्चाग्निना दहेत् ॥
आस्रावमार्गान्निःशेषान्नैवं विकुरुते पुनः ॥ ३२ ॥
सततं कोष्ठशुद्धौ च भिषक्तस्यान्तरान्तरा ॥
लेपो व्रणे बिडालास्थित्रिफलारसकल्कितम् ॥ ३३ ॥

ज्योतिष्मतीमलयुलाङ्गलिशेलुपाठा-
कुंभाग्निसर्जकरवीरवचासुधार्कैः ॥
अभ्यञ्जनाय विपचेत भगन्दराणां
तैलं वदन्ति परमं हितमेतदेषाम् ॥ ३४ ॥

मधुकरोध्रकणात्रुटिरेणुकाद्विरजनीफलिनीपटुसारिवाः ॥
कमलकेसरपद्मकधातकीमदनसर्जरसामयरोध्रकाः ॥३५॥
सबीजपूरच्छदनैरेभिस्तैलं विपाचितम् ॥
भगन्दरापचीकुष्ठमधुमेहव्रणापहम् ॥ ३६ ॥
मधुतैलयुता विडङ्गसारत्रिफलामागधिकाकणाश्च लीढाः ॥
कृमिकुष्ठभगन्दरप्रमेहक्षतनाडीव्रणरोहणा भवन्ति ॥ ३७ ॥
अमृतात्रुटिवेल्लवत्सकं कलिपथ्यामलकानि गुग्गुलुः ॥
क्रमवृद्धमिदं मधुप्लुतं पिटिकास्थौल्यभगन्दराञ्जयेत् ॥ ३८ ॥
गन्धिकाग्निकलिङ्गविडङ्गैर्बिल्वघृतैः सवरापलषट्कैः ॥
मागो थर सद्दशेन समेतैः क्षौद्रयुतैः सकलामयनाशः ॥ ३९ ॥
गुग्गुलु ति कं पलिकोंशा मागधिका त्रिफला च पृथक्स्यात् ॥
गुग्गुलुपञ्च ः पूय मधुलीढं कुष्ठभगन्दरगुल्मगतिघ्नम् ॥ ४० ॥
त्वक्त्रुटिकर्षयुतं

शृङ्गवेररजोयुक्तं तदेव च सुभावितम् ॥
काथेन दशमूलस्य विशेषाद्वातरोगजित् ॥ ४१ ॥
उत्तमाखदिरसारज रजः शीलयन्नसनवारिभावितम् ॥
हन्ति तुल्यमहिषाख्यमाक्षिक कुष्ठमेहपिटिकाभगन्दरान्४२
भगन्दरेष्वेष विशेष उक्त
शेषाणि तु व्यञ्जनसाधनानि ॥
व्रणाधिकारात्परिशीलनाच्च
सम्यग्विदित्वौषधिक विदध्यात् ॥ ४३ ॥
अश्वपृष्ठगमनं चलरोधं मद्यमैथुनमजीर्णमसात्म्यम् ॥
साहसानि विविधानि च रूढे वत्सर परिहरेदधिकं वा ॥४४॥

इत्यष्टाङ्गहृदयसहितायामुत्तरस्थाने अष्टाविंशोऽध्याय ॥ २८ ॥

## एकोनत्रिंशोऽध्यायः।



अथातो ग्रन्थ्यर्बुदश्लीपदापचीनाडी
विज्ञानमध्याय व्याख्यास्याम.।
कफप्रधाना. कुर्वन्ति मेदोमासास्रगामला ॥
वृत्तोन्नतं य श्वयथु स ग्रन्थिर्ग्रथनात्स्मृत.॥ १ ॥
दोषास्रमासमेदोऽस्थिशिराव्रणभवा नव ॥
ते तत्र वातादायामतोदभेदान्वितोऽसित ॥ २ ॥
स्थानात्स्थानान्तरगतिरकस्माद्धानिवृद्धिमान् ॥
मृदुर्बस्तिरिवानद्धो विभिन्नोऽच्छ स्रवत्यसृक् ॥ ३ ॥

पित्तात्सदाहः पीताभो रक्तो वा पच्यते द्रुतम् ॥
भिन्नोऽस्रमुष्णं स्रवति श्लेष्मणा नीरुजो घनः ॥ ४ ॥
शीतः सवर्णः कण्डूमान् पक्वः पूयं स्रवेद् घनम् ॥
दोषैर्दुष्टेऽसृजि ग्रन्थिर्भवेन्मूर्च्छत्सु जन्तुषु ॥ ५ ॥
शिरामांसं च संश्रित्य स स्वापः पित्तलक्षणः ॥
मांसलैर्दूषितं मांसमाहारैर्ग्रन्थिमावहेत् ॥ ६ ॥
स्निग्धं महान्तं कठिनं शिरानद्धं कफाकृतिम् ॥
प्रवृद्धं मेदुरैर्मेदोनीतं मांसेऽथ वा त्वचि ॥ ७ ॥
वायुना कुरुते ग्रन्थिं भृशं स्निग्धं मृदुं चलम् ॥
श्लेष्मतुल्याकृतिं देहक्षयवृद्धिक्षयोदयम् ॥ ८ ॥
स विभिन्नो घनं मेदस्ताम्रासितसितं स्रवेत् ॥
अस्थिभङ्गाभिघाताभ्यामुन्नतावनतं तु यत् ॥ ९ ॥
सोऽस्थिग्रन्थिः पदातेस्तु सहसाम्भोऽवगाहनात् ॥
व्यायामाद्वा प्रतान्तस्य शिराजालं सशोणितम् ॥ १० ॥
वायुः संपीड्य सङ्कोच्य वक्रीकृत्याविशोष्य च ॥
निःस्फुरं नीरुजं ग्रन्थिं कुरुते सशिराह्वयः ॥ ११ ॥
अरूढे रूढमात्रे वा व्रणे सर्वरसाशिनः ॥
सार्द्रे वा बन्धरहिते गात्रेऽश्माभिहतेऽथ वा ॥ १२ ॥
वातास्रमस्रुतं दुष्टं संशोष्य ग्रथितं व्रणम् ॥
कुर्य्यात्सदाहः कण्डूमान्व्रणग्रन्थिरयं स्मृतः ॥ १३ ॥
साध्या दोषास्रमेदोजा न तु स्थूलखराश्चलाः ॥
मर्म्मकण्ठोदरस्थाश्च महत्तु ग्रन्थितोऽर्बुदम् ॥ १४ ॥

तल्लक्षण च मेदोऽन्तै. पोढा दोपादिभिस्तु तत्॥
प्रायो मेद कफाढ्यत्वास्थिरत्वाच्च न पच्यते ॥ १५ ॥
शिरास्थ शोणित दोप. सङ्कोच्यान्त प्रपीडय च ॥
पाचयेत तदा नद्ध सास्राव मासपिण्डितम् ॥ १६ ॥
मासाङ्कुरैश्चितं याति वृद्धि चाशु स्रवेत्तत. ॥
अजस्रं दुष्टरुधिर भूरि तच्छोणितार्बुदम् ॥ १७ ॥
तेष्वसृङ्मासजे वर्ज्यें चत्वार्य्यन्यानि साधयेत् ॥
प्रस्थिता वंक्षणोर्वादिमध'काय कफोल्बणा' ॥ १८ ॥
दोपा मासास्रगा' पादौ कालेनाश्रित्य कुर्वते ॥
शनै.शनैर्घन शोफ श्लीपदं तत्प्रचक्षते ॥ १९ ॥
परिपोटयुतं कृष्णमनिमित्तरुजं खरम् ॥
रूक्षं च वातात् पित्तात्तु पीत दाहज्वरान्वितम् ॥ २० ॥
कफाद् गुरु स्निग्धमरुञ्चित मासाकुरैर्बृहत् ॥
तत्त्यजेद्वत्सरातीतं सुमहत्सुपरिस्रुति ॥ २१ ॥
पाणिना सौष्ठकर्णेषु वदन्त्येके तु पादवत् ॥
श्लीपदं जायते तच्च देशेऽनूपे भृशभृशम् ॥ २२ ॥
मेद'स्था कण्ठमन्याक्षिकक्षावक्षणगा मला ॥
सवर्णान्कठिनान्स्निग्धान्वार्ताकामलकाकृतीन् ॥ २३ ॥
अवगाढान्बहून्गण्डाश्चिरपाकाश्च कुर्वते ॥
पच्यन्तेऽल्परुजस्त्वन्ये स्रवन्त्यन्येऽतिकण्डुरा ॥ २४ ॥
नश्यन्त्यन्ये भवन्त्यन्ये दीर्घकालानुबन्धिनः ॥
गण्डमालापची चेय दूर्वेव क्षयवृद्धिभाक् ॥ २५ ॥

तां त्यजेत्सज्वरच्छर्दिपार्श्वरुक्कासपीनसाम् ॥
अभेदात्पक्वशोफस्य व्रणे चापथ्यसेविनः ॥ २६ ॥
अनुप्रविश्य मांसादीन्दूरं पूयोऽभिधावति ॥
गतिः सा दूरगमनान्नाडी नाडीव संस्रुतेः ॥ २७ ॥
नाड्येकानृजुरन्येषां सैवानेकगतिर्गतिः ॥
सा दोषैः पृथगेकस्थैः शल्यहेतुश्च पञ्चमी ॥ २८ ॥
वातात्सरुक्सूक्ष्ममुखी विवर्णा फेनिलोद्गमा ॥
स्रवत्यभ्यधिकं रात्रौ पित्तात्तृड्ज्वरदाहकृत् ॥ २९ ॥
पीतोष्णपूतिपूयास्रुर्दिवा चातिनिषिञ्चति ॥
घनपिच्छिलसंस्रावा कण्डूला कठिना कफात् ॥
निशि चाभ्यधिकक्लेदात् सर्वैः सर्वाकृतिं त्यजेत् ॥ ३० ॥
अन्तःस्थितं शल्यमनाहृतं तु करोति नाडीं वहते च सास्य ॥
फेनानुविद्धं तनुमल्पमुष्णं सास्रं च पूयं सरुजं च नित्यम् ३१

इत्यष्टाङ्गहृदयसंहितायामुत्तरस्थाने एकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

## अथ त्रिंशोऽध्यायः ।

अथातो ग्रन्थ्यर्बुदश्लीपदापचीनाडीप्रतिषेधमध्यायं व्याख्यास्यामः ।

ग्रन्थिष्वामेषु कर्त्तव्या यथास्वं शोफवत्क्रिया ॥
बृहतीचित्रकव्याघ्रीकणासिद्धेन सर्पिषा ॥ १ ॥
स्नेहयेच्छुद्धिकामं च तीक्ष्णैः शुद्धस्य लेपनम् ॥
संस्वेद्य बहुशो ग्रन्थिं विमृद्नीयात्पुनःपुनः ॥ २ ॥

एष वाते विशेषेण क्रम पित्तास्रजे पुन. ॥
जलौकसो हिम सर्वं कफजे वानिको विधि ॥ ३ ॥
तथाप्यपक छित्त्वैनं स्थिते रक्तेऽग्निना दहेत् ॥
साध्वशेषं सशेपो हि पुनराप्यायते ध्रुवम् ॥ ४ ॥
मासव्रणोद्भवौ ग्रन्थी पाटयेदेवमेव च ॥
कार्य्यं मेदोभवेऽप्येतत्तत्तैः फालादिभिश्च तम् ॥ ५ ॥
प्रमृद्यात्तिलदिग्धेनच्छन्न द्विगुणवाससा ॥
शस्त्रेण पाटयित्वा वा दहेन्मेदसि सूद्धृते ॥ ६ ॥
शिराग्रन्थौ नवे पेयं तैलं साहचर तथा ॥
उपनाहोऽनिलहरैर्वस्तिकर्म्माशिराव्यध ॥ ७ ॥
अर्बुदे ग्रन्थिवत्कुर्य्याद्यथास्वं सुतरा हितम् ॥
श्लीपदेऽनिलजे विध्येत्स्निग्धस्विन्नोपनाहिते ॥ ८ ॥
शिरामुपरि गुल्फस्य द्व्यगुले पाययेच्च तम् ॥
मासमेरण्डज तैल गोमूत्रेण समन्वितम् ॥ ९ ॥
जीर्णे जीर्णान्नमश्नीयाच्छुण्ठीशृतपयोऽन्वितम् ॥
त्रैवृत वा पिबेदेवमशान्तावग्निना दहेत् ॥ १० ॥
गुल्फस्याध. शिरामोक्ष पैत्ते सर्वं च पित्तजित् ॥
शिरामगुष्ठके विद्ध्वा कफजे शीलयेद्यवान् ॥ ११ ॥
सक्षौद्राणि कषायाणि वर्द्धमानास्तथाभयाः ॥
लिम्पेत्सर्षपवार्ताकीमूलाभ्या धान्ययाथ वा ॥ १२ ॥
ऊर्ध्वाध.शोधन पेयमपथ्या साधितं घृतम् ॥
दन्तीद्रवन्तीत्रिवृताजालिनीदेवदालिभि' ॥ १३ ॥

शीलयेत्कफमेदोघ्नं धूमगण्डूषनावनम् ॥
शिरयाऽपहरेद्रक्तं पिबेन्मूत्रेण ताक्ष्यर्जम् ॥ १४ ॥
ग्रन्थीनपक्वानालिम्पेन्नाकुलीपटुनागरैः ॥
स्विन्नाल्लँवणपोटल्या कठिनाननुमर्दयेत् ॥ १५ ॥
शमीमूलकशिग्रूणां बीजैः सयवसर्षपैः ॥
लेपः पिष्टोऽम्लतक्रेण ग्रन्थिगण्डविलापनः ॥ १६ ॥
पाकोन्मुखान्स्रुतास्रस्य पित्तश्लेष्महरैर्जयेत् ॥
अपक्वानेव चोद्धृत्य क्षाराग्निभ्यामुपाचरेत् ॥ १७ ॥
क्षुण्णानि निम्बपत्राणि क्लिन्नैर्भल्लातकैः सह ॥
शरावसम्पुटे दग्ध्वा सार्धं सिद्धार्थकैः समैः ॥ १८ ॥
एतच्छागाम्बुना पिष्टं गण्डमालाप्रलेपनम् ॥
काकादनीलाङ्गलिकानाहिकोत्तुण्डिकीफलैः ॥ १९ ॥
जीमूतबीजकर्कोटीविशालाकृतवेधनैः ॥
पाठान्वितैः पलार्द्धांशैर्विषकर्षयुतैः पचेत् ॥ २० ॥
प्रस्थं करञ्जतैलस्य निर्गुण्डीस्वरसाढकैः ॥
अनेन माला गण्डानां चिरजा पूयवाहिनी ॥ २१ ॥
सिध्यत्यसाध्यकल्पापि पानाभ्यञ्जननावनैः ॥
तैलं लाङ्गलिकीकन्दकल्कपादे चतुर्गुणे ॥ २२ ॥
निर्गुण्डीस्वरसे पक्वं नस्याद्यैरपचीप्रणुत् ॥
भद्रश्रीदारुमरिचद्विहरिद्रात्रिवृद्घनैः ॥ २३ ॥
मनःशिलालनलदविशालाकरवीरकैः ॥
गोमूत्रपिष्टैः पलिकैर्विषस्यार्द्धपलेन च ॥ २४ ॥

ब्राह्मीरसार्कजक्षीरगोशकृद्रससंयुतम् ॥
प्रस्थं सर्षपतैलस्य सिद्धमाशु व्यपोहति ॥ २५ ॥
पानाद्यैः शीलितं कुष्ठं दुष्टनाडीव्रणापची. ॥
वचाहरीतकीलाक्षाकटुरोहिणिचन्दनैः ॥ २६ ॥
तैलं प्रसाधितं पीतं समूलामपचीं जयेत् ॥
शरपुङ्खोद्भवं मूलं पिष्टं तण्डुलवारिणा ॥ २७ ॥
नस्याल्लेपाच्च दुष्टारुरपचीविषजन्तुजित् ॥
मूलैरुत्तमकारुण्याः पीलुपर्ण्याः सहाचरात् ॥ २८ ॥
सरोध्राभययष्ट्याह्वशताह्वाद्वीपिदारुभि ॥
तैलं क्षीरसमं सिद्धं नस्येऽभ्यङ्गे च पूजितम् ॥ २९ ॥
गोव्यजाश्वखुरादग्धाकटुतैलेन लेपनम् ॥
ऐङ्गुदेन तु कृष्णाहिर्वायसो वा स्वयं मृत ॥ ३० ॥
इत्यशान्तौ गदस्यान्यपार्श्वजंघासमाश्रितम् ॥
वस्तेरूर्ध्वमधस्ताद्वा मेदो हृत्वाग्निना दहेत् ॥ ३१ ॥
स्थितस्योर्ध्वं पदं मित्त्वा तन्मानेन च पार्ष्णित ॥
तत ऊर्ध्वं हरेद् ग्रन्थीनित्याह भगवान्निमि ॥ ३२ ॥

पार्ष्णिं प्रति द्वादश चाङ्गुलानि
मुक्त्वेन्द्रवस्तिं च गदान्यपार्श्वे ॥
विदार्य मत्स्याण्डनिभानि
मध्याज्जालानि कर्षेदिति सुश्रुतोक्तिः ॥३३॥

आगुल्फकर्णात्सुमितस्य जन्तोस्तस्याष्टभागं खुडकाद्विभज्य॥
घ्राणार्जवेधः सुरराजवस्तेर्भित्त्वाक्षमात्रं त्वपरे वदन्ति॥३४॥

उपनाह्यानिलान्नाडीं पाटितां साधु लेपयेत् ॥
प्रत्यक्पुष्पीफलयुतैस्तैलैः पिष्टैः ससैन्धवैः ॥ ३५ ॥
पैत्तीं तु तिलमञ्जिष्ठानागदन्तीशिलाह्वयैः ॥
श्लैष्मिकीं तिलसौराष्ट्रीनिकुम्भारिष्टसैन्धवैः ॥ ३६ ॥
शल्यजां तिलमध्वाज्यैर्लेपयेच्छिन्नशोधिताम् ॥
अशस्त्रकृत्यामेषिण्या भित्त्वान्ते सम्यगेषिताम् ॥ ३७ ॥
क्षारपीतेन सूत्रेण बहुशो दारयेद्गतिम् ॥
व्रणेषु दुष्टसूक्ष्मास्यगम्भीरादिषु साधनम् ॥ ३८ ॥
या वर्त्यो यानि तैलानि तन्नाडीष्वपि शस्यते ॥
पिष्टं चंचुफलं लेपान्नाडीव्रणहरं परम् ॥ ३९ ॥
घोण्टाफलत्वग्लवणं सलाक्षं बूकस्य पत्रं वनितापयश्च ॥
स्नुगर्कदुग्धान्वित एष कल्को वर्त्तीकृतो हन्त्यचिरेण नाडीम् ॥४०॥
सामुद्रसौवर्चलसिन्धुजन्मसुपक्वघोण्टाफलवेश्मधूमाः ॥
आम्रातगायत्रिजपल्लवाश्च कटङ्कटेर्य्यावथ चेतकी च ॥४१॥
कल्केऽभ्यङ्गे चूर्णे वर्त्त्यां चैतेषु सेव्यमानेषु ॥
अगतिरिव नश्यति गतिश्चपला चपलेषु भूतिरिव ॥ ४२ ॥

इत्यष्टाङ्गहृदयसंहितायामुत्तरस्थाने त्रिंशोऽध्यायः ॥ ३० ॥

## एकत्रिंशोऽध्यायः ।

अथातः क्षुद्ररोगविज्ञानीयमध्यायं व्याख्यास्यामः ।
स्निग्धा सवर्णा ग्रथिता नीरुजा मुद्गसम्मिता ॥
पिटिका कफवाताभ्यां बालानामजगल्लिका ॥ १ ॥

यवप्रख्या यवप्रख्या ताभ्या मासाश्रिता घना ॥
अवक्राश्चालजीवृत्तास्तोकपूया घनोन्नता ॥ २ ॥
ग्रन्थय पञ्च वा षड्वा कच्छपी कच्छपोन्नता ॥
कर्णस्योर्ध्वं समन्ताद्वा पिटिका कठिनोग्ररुक् ॥ ३ ॥
शालूकाभा पनसिका शोफस्त्वल्परुज. स्थिरा ॥
हनुसन्धिसमुद्भूतास्ताभ्या पाषाणगर्दभ ॥ ४ ॥
शाल्मलीकण्टकाकारा पिटिका. सरुजो घना ॥
मेदोगर्भा मुखे यूना ताभ्या च मुखदूषिका ॥ ५ ॥
ते पद्मकण्टका ज्ञेया यै, पद्ममिव कण्टकैः ॥
चीयते नीरुजैश्चैतै शरीरं कफवातजै ॥ ६ ॥
पित्तेन पिटिका वृत्ता पक्वोदुम्बरसन्निभा ॥
महादाहज्वरकरी विवृता विवृतानना ॥ ७ ॥
गात्रेष्वन्तश्च वक्त्रस्य दाहज्वररुजान्विता. ॥
मसूरमात्रास्तद्वर्णास्तत्सज्ञाः पिटिका घना ॥ ८ ॥
तत कष्टतराः स्फोटा विस्फोटाख्या महारुजा. ॥
या पद्मकर्णिकाकारा पिटिका पिटिकान्विता ॥ ९ ॥
सा विद्धा वातपित्ताभ्या ताभ्यामेव च गर्दभी ॥
मण्डला विपुलोत्सन्ना सरागपिटिकाचिता ॥ १० ॥
कक्षेति कक्षासन्नेषु प्रायो देशेषु सानिलात् ॥
पित्ताद्भवन्ति पिटिका सूक्ष्मा लाजोपमा घना ॥ ११ ॥
तादृशी महती त्वेका गन्धनामेति कीर्त्तिता ॥
धर्मस्वेदपरीतेऽङ्गे पिटिका. सरुजो घना ॥ १२ ॥

राजिकावर्णसंस्थानप्रमाणा राजिकाह्वयाः ॥
दोषैः पित्तोल्बणैर्मन्दैर्विसर्पति विसर्पवत् ॥ १३ ॥
शोफोऽपाकस्तनुस्ताम्रो ज्वरकृज्जालगर्दभः ॥
मलैः पित्तोल्बणैः स्फोटा ज्वरिणो मांसदारणाः ॥१४॥
कक्षाभागेषु जायन्ते येऽग्न्याभाः साऽग्निरोहिणी ॥
पञ्चाहात्सप्तरात्राद्वा पक्षाद्वा हन्ति जीवितम् ॥ १५ ॥
त्रिलिङ्गा पिटिका वृत्ता जत्रूर्ध्वमिरिवेल्लिका ॥
विदारीकन्दकठिना विदारी कक्षवङ्क्षणे ॥ १६ ॥
मेदोऽनिलकफैर्ग्रन्थिः स्नायुमांसशिराश्रयैः ॥
भिन्नो वसाज्यमध्वाभं स्रवेत्तत्रोल्बणोऽनिलः ॥ १७ ॥
मांसं विशोष्य ग्रथितां शर्करामुपपादयेत् ॥
दुर्गन्धं रुधिरं क्लिन्नं नानावर्णं ततो मलाः ॥ १८ ॥
तां स्रावयन्ति निचितां विद्यात्तच्छर्करार्बुदम् ॥
पाणिपादतले सन्धौ जत्रूर्ध्वं वोपचीयते ॥ १९ ॥
वल्मीकवच्छनैर्ग्रन्थिस्तद्वद्बह्वणुभिर्मुखैः ॥
रुग्दाहकण्डूक्लेदाढ्यो वल्मीकोऽसौ समस्तजः ॥ २० ॥
शर्करोन्मथिते पादे क्षते वा कण्टकादिभिः ॥
ग्रन्थिः कीलवदुत्सन्नो जायते कदरं तु तत् ॥ २१ ॥
वेगसन्धारणाद्वायुरपानोऽपानसंश्रयम् ॥
अणूकरोति बाह्यान्तर्मार्गमस्य ततः शकृत् ॥ २२ ॥
कृच्छ्रान्निर्गच्छति व्याधिरयं रुद्धगुदो मतः ॥
कुर्य्यात्पित्तानिलं पाकं नखमांसे सरुग्ज्वरम् ॥ २३ ॥

चिप्यमक्षतरोगं च विद्यादुपनखं च तम् ॥
कृष्णोऽभिघाताद्रूक्षश्च खरश्च कुनखो नखः ॥ २४ ॥
दुष्टकर्दमसंस्पर्शात्कण्डूक्लेदान्वितान्तराः ॥
अगुल्योऽलसमित्याहुस्तिलाभास्तिलकालकान् ॥ २५ ॥
कृष्णानवेदनास्त्वक्स्थान्माषास्तानेव चोन्नतान् ॥
माषेभ्यस्तून्नततराश्चर्म्मकीलान्सितासितान् ॥ २६ ॥
तथाविधो जतुमणि सहजो लोहितस्तु सः ॥
कृष्ण सित वा सहजं मण्डल लाञ्छन समम् ॥ २७ ॥
शोकक्रोधादिकुपिताद्वातपित्तान्मुखे तनु ॥
श्यामलं मण्डल व्यंगं वक्त्रादन्यत्र नीलिका ॥ २८ ॥
परुषं परुपस्पर्शं व्यंग श्याव च मारुतात् ॥
पित्तात्ताम्रान्तमानील श्वेतान्त कण्डुमत्कफात् ॥ २९ ॥
रक्ताद्रक्तान्तमाताम्रं शोष चिमचिमायते ॥
वायुनोदीरित. श्लेष्मा त्वच प्राप्य विशुष्यति ॥ ३० ॥
ततस्त्वग्जायते पाण्डु. क्रमेण च विचेतना ॥
अल्पकण्डूरविक्लेदा सा प्रसुप्ति प्रसुप्तित. ॥ ३१ ॥
असम्यग्वमनोदीर्णपित्तश्लेष्मान्ननिग्रहै. ॥
मण्डलान्यतिकण्डूनि रागवन्ति वहूनि च ॥ ३२ ॥
उत्कोठ. सोऽनुवन्धस्तु कोठ इत्यभिधीयते ॥
प्रोक्ता. षट्त्रिंशदित्येते क्षुद्ररोगा विभागशः ॥ ३३ ॥

इत्यष्टाङ्गहृदयसंहितायामुत्तरस्थाने एकत्रिंशोऽध्याय ॥ ३१ ॥

# द्वात्रिंशोऽध्यायः ।



अथातः क्षुद्ररोगप्रतिषेधमध्यायं व्याख्यास्यामः ।

विस्रावयेज्जलौकोभिरपक्वामजगल्लिकाम् ॥
स्वेदयित्वा यवप्रख्यां विलयाय प्रलेपयेत् ॥ १ ॥
दारुकुष्ठमनोह्वालैरिङ्ग्यापाषाणगर्दभात् ॥
विधिस्तांश्चाचरेत्पक्वान्व्रणवत्साजगल्लिकान् ॥ २ ॥
रोध्रकुस्तुम्बुरुवचाप्रलेपो मुखदूषिके ॥
वटपल्लवयुक्ता वा नारिकेलोत्थशुक्तयः ॥ ३ ॥
अशान्तौ वमनं नस्यं ललाटे च शिराव्यधः ॥
निम्बाम्बुवान्तो निम्बाम्बुसाधितं पद्मकण्टके ॥ ४ ॥
पिबेत्क्षौद्रान्वितं सर्पिर्निम्बारग्वधलेपनम् ॥
विवृतादींस्तु जालान्तांश्छिकित्सेदिरिवेल्लिकान् ॥
पित्तवीसर्पवत्तद्वत्प्रत्याख्यायाग्निरोहिणीम् ॥ ५ ॥
विलंघनं रक्तविमोक्षणं च विरूक्षणं कायविशोधनं च ॥
धात्रीप्रयोगाञ्छिशिरप्रदेहान्कुर्यात्सदा जालकगर्दभस्य६॥
विदारिकां हृते रक्ते श्लेष्मग्रन्थिवदाचरेत् ॥
मेदोऽर्बुदक्रियां कुर्यात्सुतरां शर्कराबुंदे ॥ ७ ॥
प्रवृद्धं सुबहुच्छिद्रं सशोफं मर्मणि स्थितम् ॥
वल्मीकं हस्तपादे च वर्जयेदितरत्पुनः ॥ ८ ॥
शुद्धस्यास्त्रे हृते लिम्पेत्सपट्वारेवतामृतैः ॥
श्यामाकुलत्थिकामूलदन्तीपललसक्तुभिः ॥ ९ ॥

पक्के तु दुष्टमासानि गती सर्वाश्च शोधयेत् ॥
शस्त्रेण सम्यगनु च क्षारेण ज्वलनेन वा ॥ १० ॥
शस्त्रेणोत्कृत्य नि शेष स्नेहेन कदरं दहेत् ॥
निरुद्धमणिवत्कार्य्यं रुद्धपायोश्चिकित्सितम् ॥ ११ ॥
चिप्यं शुद्ध्या जितोष्माणं साधयेच्छस्त्रकर्म्मणा ॥
दुष्टं कुनखमप्येव चरणावलसे पुन' ॥ १२ ॥
धान्याम्लसिक्तौ कासीसपटोलीरोचनातिलैः ॥
सनिम्बपत्रैरालिम्पेद्दहेत्तु तिलकालकान् ॥ १३ ॥
मापाश्च सूर्य्यकान्तेन क्षारेणयदिवाऽग्निना ॥
तद्वदुत्कृत्य शस्त्रेण चर्म्मकीलजतूमणी ॥ १४ ॥
लाञ्छनादित्रये कुर्य्याद्यथासन्न शिराव्यधम् ॥
लेपयेत्क्षीरपिष्टैश्च क्षीरिवृक्षत्वगङ्कुरैः ॥ १५ ॥
व्यङ्गेपु चार्जुनत्वग्वा मञ्जिष्ठा वा समाक्षिका ॥
लेप. सनवनीता वा श्वेताश्वखुरजामषी ॥ १६ ॥
रक्तचन्दनमञ्जिष्ठाकुष्ठरोध्रप्रियङ्गवः ॥
वटाकुरा मसूराश्च व्यङ्गघ्ना मुखकान्तिदा ॥ १७ ॥
द्वे जीरके कृष्णतिला सर्षपा पयसा सह ॥
पिष्टा कुर्वन्ति वक्रेन्दुमपास्तव्यङ्गलाञ्छनम् ॥ १८
क्षीरपिष्टा घृतक्षौद्रयुक्ता वा भृष्टनिस्तुषा ॥
मसूरा. क्षीरपिष्टा वा तीक्ष्णाः शाल्मलिकण्टका. ॥१९॥
सगुड. कोलमज्जा वा शशासृक्क्षौद्रकल्कित' ॥
सप्ताह मातुलुङ्गस्थ कुष्ठ वा मधुनान्वितम् ॥ २० ॥

पिष्टा वा छागपयसा सक्षौद्रा मौशली जटा ॥
गोरस्थिमुशलीमूलयुक्तं वा साज्यमाक्षिकम् ॥ २१ ॥
जम्ब्वाम्रपल्लवा मस्तु हरिद्रे द्वे नवो गुडः ॥
लेपः सवर्णकृत्पिष्टं स्वरसेन च तिन्दुकम् ॥ २२ ॥
उत्पलपत्रं तगरं प्रियंगुकालीयकदम्बदरमज्जा ॥
इदमुद्वर्चनमास्यं करोति शतपत्रसङ्काशम् ॥ २३ ॥
एभिरेवौषधैःपिष्टैर्मुखाभ्यङ्गाय साधयेत् ॥
यथादोषर्तुकान्स्नेहान्मधुककाथसंयुतैः ॥ २४ ॥
यवान्सर्जरसं रोध्रमुशीरं चन्दनं मधु॥
घृतं गुडं च गोमूत्रे पचेदादर्विलेपनात् ॥ २५ ॥
तदभ्यङ्गान्निहन्त्याशु नीलिकाव्यङ्गदूषिकान् ॥
मुखं करोति पद्माभं पादौ पद्मदलोपमौ॥ २६ ॥
कुंकुमोशीरकालीयलाक्षायष्ट्याह्वचन्दनम् ॥
न्यग्रोधपादास्तरुणान्पद्मकं पद्मकेसरम् ॥ २७॥
सनीलोत्पलमाञ्जिष्ठं पालिकं सतिलाढके ॥
पक्त्वा पादावशेषेण तेन पिष्टैश्च कार्षिकैः ॥ २८ ॥
लाक्षापत्तंगमांजिष्ठायष्टीमधुककुंकुमैः ॥
अजाक्षीराद्विगुणितंतैलस्य कुडवं पचेत्॥ २९ ॥
नीलिकापलितव्यङ्गवलीतिलकदूषिकान् ॥
हन्ति तन्नस्यमभ्यस्तं मुखोपचयवर्णकृत् ॥ ३० ॥
मञ्जिष्ठाशबरोद्भवस्तुवरिकालाक्षाहरिद्राद्वयं
नेपाली हरितालकुंकुमगदागोरोचनागैरिकम् ॥

पत्रंपाण्डुवटस्य चन्दनयुगकालीयक पारद
पत्तङ्गं कनकत्वच कमलज वीज तथा केसरम् ॥ ३१ ॥
सिक्थतुत्थपद्मकाद्योवसाज्य मज्जा क्षीरक्षीरिवृक्षाम्बु चाग्नौ॥
सिद्ध सिद्धं व्यङ्ग नील्यादिनाशेवक्त्रेछायामैन्दवींचाशुधत्ते३२
मार्कवस्वरसक्षीरतोयपिष्टानि नावने ॥
प्रसुप्तौ वातकुष्ठोक्त कुर्य्याद्दाहं च वह्निना ॥
उत्कोठे कफपित्तोक्त कोठे सर्वं च कौष्ठिकम् ॥ ३३ ॥

इत्यष्टाङ्गहृदयसंहितायामुत्तरस्थाने द्वात्रिंशोऽध्याय ॥ ३२ ॥

## त्रयस्त्रिंशोऽध्यायः ।

अथातो गुह्यरोगविज्ञानीयमध्याय व्याख्यास्याम ।
स्त्रीव्यवायनिवृत्तस्य सहसा भजतोऽथवा ॥
दोषाध्युषितसकीर्णमलिनानुरज पथाम् ॥१॥
अन्ययोनिमनिच्छन्तीमगम्या नवसूतिकाम् ॥
दूषित स्पृशतस्तोय रतान्तेष्वपि नैव वा॥ २ ॥
विवर्द्धयिषया तीक्ष्णान्प्रलेपादीन्प्रयच्छत ॥
मुष्टिदन्तनखोत्पीडाविषवच्छुक्रपातनै ॥ ३ ॥
वेगनिग्रहदीर्घातिखरस्पर्शविघट्टनै ॥
दोषा दुष्टा गता गुह्य त्रयोविंशतिसामयान् ॥ ४ ॥
जनयन्त्युपदंशादीनुपदंशोऽत्र पञ्चधा ॥
पृथग्दोषै सरुधिरै समस्तैश्चाऽत्र मारुतात् ॥ ५ ॥

मेढ्रशोफे रुजश्चित्राः स्तम्भस्त्वक्परिपोटनम् ॥
पक्कोदुम्बरसंकाशः पित्तेन श्वयथुर्ज्वरः ॥ ६ ॥
श्लेष्मणा कठिनः स्निग्धः कण्डूमाञ्छीतलो गुरुः ॥
शोणितेनासितस्फोटसम्भवोऽस्रस्रुतिर्ज्वरः ॥ ७ ॥
सर्वजे सर्वलिङ्गत्वं श्वयथुर्मुष्कयोरपि ॥
तीव्रारुगाशुपचनं दरणं कृमिसम्भवः ॥ ८ ॥
याप्यो रक्तोद्भवस्तेषां मृत्यवे सन्निपातजः ॥
जायन्ते कुपितैर्दोषैर्गुह्यासृक्पिशिताश्रयैः ॥ ९ ॥
अन्तर्बहिर्वा मेढ्रस्य कण्डूला मांसकीलकाः ॥
पिच्छिलास्यस्रवा योनौ तद्वच्च च्छत्रसन्निभाः ॥ १० ॥
तेऽर्शांस्युपेक्षया घ्नन्ति मेढ्रपुंस्त्वभगार्त्तवम् ॥
गुह्यस्य बहिरन्तर्वा पिटिकाः कफरक्तजाः ॥ ११ ॥
सर्षपा मानसंस्थाना घनाः सर्षपिकाः स्मृताः ॥
पिटिका बहवो दीर्घा दीर्य्यन्ते मध्यतश्च याः ॥ १२ ॥
सोऽवमन्यः कफासृग्भ्यां वेदनारोमहर्षवान् ॥
कुम्भीका रक्तपित्तोत्था जाम्बवास्थिनिभाऽशुभा ॥१३॥
अलजीं मेहवद्विद्यादुत्तमां रक्तपित्तजाम् ॥
पिटिका माषमुद्गाभा पिटिका पिटिकाचिता ॥ १४ ॥
कर्णिका पुष्करस्येव ज्ञेया पुष्करिकेति सा ॥
पाणिभ्यां भृशसंव्यूढे संव्यूढपिटिका भवेत् ॥ १५ ॥
मर्दितं वस्त्रसंरुद्धं वातकोपतः ॥
नैपाल कठिना भुग्ना वायुनाऽष्ठीलिका स्मृता ॥ १६ ॥

विमर्द्दनादिदुष्टेन वायुना चर्म्म मेढ्रजम् ॥
निवर्त्तते सरुग्दाह क्वचित्पाक च गच्छति ॥ १७ ॥
पिण्डित ग्रन्थित चर्म्म तत्प्रलम्बमधो मणे. ॥
निवृत्तसज्ञ सकफ कण्डूकाठिन्यवत्तु तत् ॥ १८ ॥
दुरूढ स्फुटित चर्म्म निर्दिष्टमवपाटिका ॥
वातेन दूषित चर्म्म मणौ सक्त रुणद्धि चेत् ॥ १९ ॥
स्रोतोमूत्र ततोऽभ्येति मन्दधारमवेदनम् ॥
मणेर्विकाशरोधश्च सनिरुद्धमणिर्गद' ॥ २० ॥
लिङ्गं शूकैरिवापूर्ण ग्रथिताख्य कफोद्भव म् ॥
शूकदूषितरक्तोत्था स्पर्शहानिस्तदाह्वया ॥ २१ ॥
छिद्रैरणुमुखैर्यस्तु सर्वतोव्याप्तलिङ्गक ॥
वातशोणितकोपेन त विद्याच्छतपोनकम् ॥ २२ ॥
पित्तासृग्भ्या त्वच' पाकस्त्वक्पाको ज्वरदाहवान् ॥
मासपाक सर्वज सर्ववेदनो मासशातन. ॥ २३ ॥
सरागैरसितै. स्फोटै. पिटिकाभिश्च पीडितम् ॥
मेहन वेदनाश्चोग्रास्तं विद्यादसृगर्बुदम् ॥ २४ ॥
मासार्बुद प्रागुदित विद्रधिश्च त्रिदोषज. ॥
कृष्णानि भूत्वा मांसानि विशीर्य्यन्ते समन्तत. ॥२५॥
पक्वानि सन्निपातेन तान्विद्यात्तिलकालकान् ॥
मासोत्थमर्बुद पाक विद्रधि तिलकालकान् ॥ २६ ॥
चतुरो वर्जयेदेताञ्छेषाञ्छीघ्रमुपाचरेत् ॥
विंशतिर्व्यापदो योनेर्जायन्ते दुष्टभोजना त् ॥ २७ ॥

विषमस्थाङ्गशयनभृशमैथुनसेवनैः ॥
दुष्टार्त्तवादपद्रव्यैर्बीजदोषेण दैवतः ॥ २८ ॥
योनौ क्रुद्धोऽनिलः कुर्य्याद्रुक्तोदायामसुप्तताः ॥
पिपीलिकासृप्तिमिव स्तम्भं कर्कशतां स्वनम् ॥ २९ ॥
फेनिलारुणकृष्णाल्पतनुरूक्षार्तवस्रुतिम् ॥
स्रंसं वंक्षणपार्श्वादौ व्यथां गुल्मं क्रमेण च ॥ ३० ॥
तांस्तांश्च स्वान्गदान्व्यापद्वातिकी नाम सा स्मृता ॥
सैवातिचरणा शोफसंयुक्ताऽतिव्यवायतः ॥ ३१ ॥
मैथुनादतिबालायाः पृष्ठजंघोरुवंक्षणम् ॥
रुजन्संदूषयेद्योनिं वायुः प्राक्चरणेति सा ॥ ३२ ॥
वेगोदावर्तनाद्योनिं प्रपीडयति मारुतः ॥
सफेनिलं रजः कृच्छ्रादुदावृत्तं विमुञ्चति ॥ ३३ ॥
इयं व्यापदुदावृत्ता जातघ्नी तु यदानिलः ॥
जातंजातं सुतं हन्ति रौक्ष्याद्दुष्टार्त्तवोद्भवम् ॥ ३४ ॥
अत्याशिताया विषमं स्थितायाः सुरते मरुत् ॥
अन्नेनोत्पीडितो योनेः स्थितः स्रोतसि वक्रयेत् ॥ ३५ ॥
सास्थिमांसं मुखं तीव्ररुजमन्तर्मुखीति सा ॥
वातलाहारसेविन्यां जनन्यां कुपितोऽनिलः ॥ ३६ ॥
स्त्रियो योनिमणुद्वारां कुर्य्यात्सूचीमुखीति सा ॥
वेगरोधादृतौ वायुर्दुष्टो विण्मूत्रसंग्रहम् ॥ ३७ ॥
करोति योनेः शोषं च शुष्काख्या सातिवेदना ॥
षडहात्सप्तरात्राद्वा शुक्रं गर्भाशयान्मरुत् ॥ ३८ ॥

वमेत्सरुङ्नीरुजो वा यस्या॰ सा वामिनी मता ॥
योनौ वातोपतप्तायां स्त्रीगर्भे वीजदोषतः ॥ ३९ ॥
नृद्वेषिण्यस्तनी च स्यात्षण्ढसज्ञानुपक्रमा ॥
दुष्टो विष्टभ्य योन्यास्य गर्भकोष्ठ च मारुत॰ ॥ ४० ॥
कुरुते विवृता स्रस्ता वातिकीमिव दु॰खिताम् ॥
उत्सन्नमासा तामाहुर्महायोनि महारुजाम् ॥ ४१ ॥
यथास्वैर्दूषणैर्दुष्ट पित्त योनिमुपाश्रितम् ॥
करोति दाहपाकोषापूतिगन्धज्वरान्विताम् ॥ ४२ ॥
भृशोष्णभूरिकुणपनीलपीतामितार्तवाम् ॥
सा व्यापत्पैत्तिकी रक्तयोन्याख्यासृगतिस्रुतेः ॥ ४३॥
कफोऽभिष्यन्दिभि॰ क्रुद्ध॰ कुर्याद्योनिमवेदनाम् ॥
शीतला कण्डुला पाण्डुपिच्छिला तद्विधस्रुतिम् ॥४४॥
सा व्यापच्छ्लैष्मिकी वातपित्ताभ्या क्षीयते रज॰ ॥
सदाहकार्श्यवैवर्ण्यं यस्या सा लोहितक्षया ॥ ४५ ॥
पित्तलाऽत्यानृसवासेक्षवथूद्गारधारणात् ॥
पित्तयुक्तेन मरुता योनि र्भवति दूषिता ॥ ४६ ॥
शूनस्पर्शासहा सार्तिर्नीलपीतास्रवाहिनी ॥
वस्तिकुक्षिगुरुत्वातीसारारोचककारिणी ॥ ४७ ॥
श्रोणिवंक्षणरुक्तोदज्वरकृत्सा परिप्लुता ॥
वातश्लेष्मामयव्याप्ता श्वेतपिच्छिलवाहिनी ॥ ४८ ॥
उपप्लुता स्मृता योनि विप्लुताख्या त्वधावनात् ॥
सञ्जातजन्तु कण्डूला कण्ड्वा चातिरतिप्रिया ॥ ४९ ॥

अकालवाहनाद्वायुः श्लेष्मरक्तविमूर्च्छितः ॥
कर्णिकां जनयेद्योनौ रजोमार्गनिरोधिनीम् ॥ ५० ॥
सा कर्णिनी त्रिभिर्दोषैर्योनिगर्भाशयाश्रितः ॥
यथास्वोपद्रवकरैर्व्यापत्सा सान्निपातिकी ॥ ५१ ॥
इति योनिगदा नारी यैः शुक्रं न प्रतीच्छति ॥
ततो गर्भं न गृह्णाति रोगांश्चाप्नोति दारुणान् ॥
असृग्दरार्शोगुल्मादीनाबाधांश्चानिलादिभिः ॥ ५२ ॥

इत्यष्टाङ्गहृदयसंहितायामुत्तरस्थाने त्रयस्त्रिंशोऽध्यायः समाप्तः ॥ ३३ ॥

## चतुस्त्रिंशोऽध्यायः ।

अथातो गुह्यरोगप्रतिषेधमध्यायं व्याख्यास्यामः ।
मेढ्रमध्ये शिरां विध्येदुपदंशे नवोत्थिते ॥
शीतां कुर्यात्क्रियां शुद्धिं विरेकेण विशेषतः ॥ १ ॥
तिलकल्कघृतक्षौद्रैर्लेपः पक्के तु पाटिते ॥
जम्ब्वाम्रसुमनोनीपश्वेतकाम्बोजिकांकुरान् ॥ २ ॥
शल्लकीबदरीबिल्वपलाशातिनिशोद्भवाः ॥
त्वचः क्षीरिद्रुमाणां च त्रिफलां च जले पचेत् ॥ ३ ॥
स क्वाथः क्षालनं तेन पक्वतैलं च रोपणम् ॥
तुत्थगैरिकलोध्रैलामनोह्वालरसाञ्जनैः ॥ ४ ॥
हरेणुपुष्पकासीससौराष्ट्रीलवणोत्तमैः ॥
लेपः क्षौद्रयुतैः सूक्ष्मैरुपदंशव्रणापहः ॥ ५ ॥

कपाले त्रिफला दग्धा सघृता रोपणं परम्॥
सामान्य साधनमिद प्रतिदोष तु शोफवत्॥ ६ ॥
न च याति यथा पाकं प्रयतेत तथा भृशम्॥
पक्के स्नायुशिरामांसे. प्रायो नश्यति हि ध्वजः॥ ७॥
अर्शसा छिन्नदग्धाना क्रिया कार्योपदंशवत्॥
सर्षपा लिखिता. सूक्ष्मैः कषायैरवचूर्णयेत्॥ ८॥
तैरेवाभ्यञ्जन तैलं साधयेद्व्रणरोपणम्॥
क्रियेयमवमन्थेऽपि रक्त स्राव्यं तथोभयो॥ ९॥
कुम्भिकाया हरेद्रक्तं पक्काया शोधिते व्रणे॥
तिन्दुकत्रिफलारोध्रैर्लेपस्तैलञ्च रोपणम्॥ १०॥
अलज्या स्नुतरक्तायामयमेव क्रियाक्रम॥
उत्तमाख्यान्तु पिटिका सञ्छिद्य वडिशोद्धृताम्॥ ११॥
कल्कैश्चूर्णैं कषायाणा क्षौद्रयुक्तैरुपाचरेत्॥
क्रम पित्तविसर्पोक्त पुष्करव्यूढयोर्हित॥ १२॥
त्वक्पाके स्पर्शहान्याञ्च सेचयेत् मृदित पुन.॥
बलातैलेन कोष्णेन मधुरैश्चोपनाहयेत्॥ १३॥
अष्ठीलिका हृते रक्ते श्लेष्मग्रन्थिवदाचरेत्॥
निवृत्त सर्पिषाऽभ्यज्य स्वेदयित्वोपनाहयेत्॥ १४॥
त्रिरात्र पञ्चरात्र वा सुस्निग्धै शाल्वलादिभि.॥
स्वेदयित्वा ततो भूय स्निग्ध चर्म्म समानयेत्॥ १५॥
मणि प्रपीड्य शनकै प्रविष्टे चोपनाहनम्॥
मणौ पुन.पुन स्निग्धं भोजनञ्चात्र शस्यते॥ १६॥

अयमेव प्रयोज्यः स्यादवपाट्यामपि क्रमः ॥
नाडीमुभयतोद्वारां निरुद्धे जानुना सृताम् ॥ १७ ॥
स्नेहाक्तां स्रोतसि न्यस्य सिञ्चेत्स्नेहैश्चलापहैः ॥
त्र्यहात्त्र्यहात्स्थूलतरां नस्यनाडीं विवर्द्धयेत् ॥ १८ ॥
स्रोतोद्वारमसिद्धौ तु विद्वाञ्छस्त्रेण पाटयेत् ॥
सेवनीं वर्जयन्युञ्ज्यात्सद्यः क्षतविधिं ततः ॥ १९ ॥
ग्रथितं स्वेदितं नाड्या स्निग्धोष्णैरुपनाहयेत् ॥
लिम्पेत्कषायैः सक्षौद्रैर्लिखित्वा शतपोनकम् ॥ २० ॥
रक्तविद्रधिवत्कार्य्या चिकित्सा शोणितार्बुदे ॥
व्रणोपचारं सर्वेषु यथावस्थं प्रयोजयेत् ॥ २१ ॥
योनिव्यापत्सु भूयिष्ठं शस्यते कर्म्म वातजित् ॥
स्नेहनस्वेदबस्त्यादिवातजासु विशेषतः ॥ २२ ॥
नहि वाताहते योनिर्वनितानां प्रदुष्यति ॥
अतो जित्वा तमन्यस्य कुर्य्याद्दोषस्य भेषजम् ॥ २३ ॥
पाययेत बलातैलं मिश्रकं सुकुमारकम् ॥
स्निग्धस्विन्नां तथा योनिं दुःस्थितां स्थापयेत्समाम् ॥ २४ ॥
पाणिनोन्नमयेज्जिह्मां संवृत्तां व्यधयेत्पुनः ॥
प्रवेशयेन्निःसृतां च विवृत्तां परिवर्तयेत् ॥ २५ ॥
स्थानापवृत्ता योनिर्हि शल्यभूता स्त्रियो भवेत् ॥
कर्म्मभिर्वमनाद्यैश्च मृदुभिर्योजयेत्स्त्रियम् ॥ २६ ॥
सर्वतः सुविशुद्धायाः शेषं कर्म्म विधीयते ॥
बस्त्यभ्यङ्गपरिषेकप्रलेपपिचुधारणम् ॥ २७ ॥

काश्मर्य्यत्रिफलाद्राक्षाकासमर्दनिशाद्वयैः ॥
गुडूचीसैर्य्यकाभीरुशुकनासापुनर्नवै. ॥ २८ ॥
परूषकैश्च विपचेत्प्रस्थमक्षसमैर्घृतात् ॥
योनिवातविकारघ्न तत्पीत गर्भद परम् ॥ २९ ॥
वचोपकुञ्चिकाजाजीकृष्णावृषकसैन्धवम् ॥
अजमोदायवक्षारशर्कराचित्रकान्वितम् ॥ ३० ॥
पिष्ट्वा प्रसन्नयाऽऽलोड्य खादेत्तद्घृतभर्जितम् ॥
योनिपार्श्वार्त्तिहृद्रोगगुल्मार्शोविनिवृत्तये ॥ ३१ ॥
वृषक मातुलुगस्यमूलानि मदयन्तिकाम् ॥
पिबेन्मद्यै. सलवणैस्तथा कृष्णोपकुञ्चिके ॥ ३२ ॥
रास्नाश्वदंष्ट्रावृषकै. शृत शूलहरम्पय ॥
गुडूचीत्रिफलादन्तीकाथैश्च परिषेचनम् ॥ ३३ ॥
नतवार्त्ताकिनीकुष्ठसैन्धवामरदारुभि ॥
तैलात्प्रसाधिताद्धार्य. पिचुर्योनिरुजापह ॥ ३४ ॥
पित्तलाना तु योनीना सेकाभ्यङ्गपिचुक्रिया· ॥
शीता पित्तजित. कार्य्याः स्नेहनार्थं घृतानि च ॥३५॥
शतावरीमूलतुलाचतुष्कात्क्षुण्णपीडितात् ॥
रसेन क्षीरतुल्येन पाचयेत घृताढकम्॥ ३६ ॥
जीवनीयै· शतावर्य्या मृद्वीकाभि· परूषकै. ॥
पिष्टै. प्रियालैश्चालाशैर्मधुकाद्विबलान्वितै. ॥ ३७ ॥
सिद्धशीते तु मधुन· पिप्पल्याश्च पलाष्टकम् ॥
शर्कराया दशपल क्षिपेल्लिह्यात्पिचुन्तत. ॥ ३८ ॥

योन्यसृक्शुक्रदोषघ्नं वृष्यं पुंसवनं परम् ॥
क्षतं क्षयमसृक्पित्तं कासं श्वासं हलीमकम् ॥ ३९ ॥
कामलां वातरुधिरं विसर्पं हृच्छिरोग्रहम् ॥
अपस्मारार्दितायाममदोन्मादांश्च नाशयेत् ॥ ४० ॥
एवमेव पयः सर्पिर्जीवनीयोपसाधितम् ॥
गर्भदं पित्तजानाञ्च रोगाणां परमं हितम् ॥ ४१ ॥
बलाद्रोणद्वयक्वाथे घृततैलाढकं पचेत् ॥
क्षीरे चतुर्गुणे कृष्णाकाकनासासितान्वितैः ॥ ४२ ॥
जीवन्तीक्षीरकाकोलीस्थिरावीरर्द्धिजीरकैः ॥
पयस्याश्रावणीमुद्गपीलुमाषाख्यपर्णिभिः ॥ ४३ ॥
वातपित्तामयान्हत्वा पानाद्गर्भं दधाति तत् ॥
रक्तयोन्यामसृग्वर्णैरनुबन्धमवेक्ष्य च ॥ ४४ ॥
यथादोषोदयं युञ्ज्याद्रक्तस्थापनमौषधम् ॥
पाठाजम्ब्वाम्रयोरास्थिशिलोद्भेदं रसाञ्जनम् ॥ ४५ ॥
अम्बष्ठा शाल्मलीपिच्छा समङ्गां वत्सकत्वचम् ॥
बाह्लीकबिल्वातिविषारोध्रतोयदगैरिकम् ॥ ४६ ॥
शुण्ठीमधूकमाचीकरक्तचन्दनकट्फलम् ॥
कट्वङ्गवत्सकानन्ताधातकीमधुकार्जुनम् ॥ ४७ ॥
पुष्ये गृहीत्वा सञ्चूर्ण्य सक्षौद्रं तन्दुलाम्भसा ॥
पिबेदर्शःस्वतीसारे रक्तं यच्चोपवेश्यते ॥ ४८ ॥
दोषा जन्तुकृता ये च बालानां तांश्च नाशयेत् ॥
योनिदोषं रजोदोषं श्यावश्वेतारुणासितम् ॥ ४९ ॥

चूर्णं पुष्पानुगं नाम हितमात्रेयपूजितम् ॥
योन्या बलासदुष्टायां सर्वं रूक्षोष्णमौषधम् ॥ ५० ॥
धातक्यामलकीपत्रस्रोतोजमधुकोत्पलैः ॥
जम्ब्वाम्रसारकासीसरोध्रकट्फलतिन्दुकैः ॥ ५१ ॥
सौराष्ट्रिकादाडिमत्वगुदुम्बरशलाटुभिः ॥
अक्षमात्रैरजामूत्रे क्षीरे च द्विगुणे पचेत् ॥ ५२ ॥
तैलप्रस्थं तदभ्यङ्गपिचुवास्तिषु योजयेत् ॥
शूनोत्तानोन्नता स्तब्धा पिच्छिला स्राविणी तथा ॥५३॥
विप्लुतोपप्लुता योनिः सिध्येत्सस्फोटशूलिनी ॥
यवान्नमभयारिष्टं सीधुतैलं च शीलयेत् ॥ ५४ ॥
पिप्पल्ययोरजःपथ्याप्रयोगाश्च समाक्षिकान् ॥
कासीसं त्रिफलाकाक्षीसाम्रजम्ब्वस्थिधातुकी ॥ ५५ ॥
पैच्छिल्ये क्षौद्रसंयुक्तचूर्णो वैशद्यकारकः ॥
पलाशधातुकीजम्बूसमङ्गामोचसर्ज्जजः ॥ ५६ ॥
दुर्गन्धे पिच्छिले क्लेदस्तम्भनश्चूर्ण इष्यते ॥
आरग्वधादिवर्गस्य कषायः परिषेचनम् ॥ ५७ ॥
स्तब्धानां कर्कशानां च कार्य्यं मार्दवकारकम् ॥
धारणं वेसवारस्य कृसरापायसस्य च ॥ ५८ ॥
दुर्गन्धानां कषायः स्यात्तैलं वा कल्क एव वा ॥
चूर्णो वा सर्वगन्धानां पूतिगन्धापकर्षणः ॥ ५९ ॥
श्लेष्मलानां कटुप्रायाः समूत्रा वस्तयो हिताः ॥
पित्ते समधुकक्षीरा वाते तैलाम्लसंयुताः ॥ ६० ॥

सन्निपातसमुत्थायाः कर्म्म साधारणं हितम् ॥
एवं योनिषु शुद्धासु गर्भं विन्दान्ति योषितः ॥ ६१ ॥
अदुष्टे प्राकृते बीजे जीवोपक्रमणे सति ॥
पञ्चकर्म्मविशुद्धस्य पुरुषस्यापि चेन्द्रियम् ॥ ६२ ॥
परीक्ष्य वर्णैर्द्दोषाणां दुष्टं तद्घ्नैरुपाचरेत् ॥
मञ्जिष्ठाकुष्ठतगरत्रिफलाशर्कराबचाः॥६३॥
द्वे निशे मधुकं मेदा दीप्यकः कटुरोहिणी ॥
पयस्याहिङ्गुकाकोलीवाजिगन्धाशतावरीः ॥ ६४ ॥
पिष्टाक्षांशैर्घृतप्रस्थं पचेत्क्षीराच्चतुर्गुणम् ॥
योनिशुक्रप्रदोषेषु तत्सर्वेषु च शस्यते ॥ ६५ ॥
आयुष्यं पौष्टिकं मेध्यं धन्यं पुंसवनंपरम् ॥
फलसर्पिरिति ख्यातं पुष्पे पीतं फलाययत् ॥ ६६ ॥
म्रियमाणप्रजानां च गर्भिणीनां च पूजितम् ॥
एतत्परञ्च बालानां ग्रहघ्नं देहवर्द्धनम् ॥ ६७ ॥

इत्यष्टाङ्गहृदयसंहितायामुत्तरस्थाने चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

## पञ्चत्रिंशोऽध्यायः ।

अथातो विषप्रतिषेधमध्यायं व्याख्यास्यामः ।

मथ्यमाने जलनिधावमृतार्थं सुरासुरैः ॥
जातः प्रागमृतोत्पत्तेः पुरुषो घोरदर्शनः ॥ १ ॥
दीप्ततेजाश्चतुर्दंष्ट्रोहरित्केशोऽनलेक्षणः ॥
जगद्विषण्णं तं दृष्ट्वा तेनासौ विषसंज्ञितः ॥ २ ॥

हुङ्कृतो ब्रह्मणा मूर्तौ ततः स्थावरजङ्गमे ॥
सोऽप्यतिष्ठन्निजं रूपमुज्झित्वा वञ्चनात्मकम् ॥ ३ ॥
स्थिरमत्युल्बण वीर्य्यं यत्कन्देषु प्रतिष्ठितम् ॥
कालकूटेन्द्रवत्साख्यशृङ्गीहालाहलादिकम् ॥ ४ ॥
सर्पलूतादिदंष्ट्रासु दारुण जङ्गम विषम् ॥
स्थावर जङ्गम चेति विष प्रोक्तमकृत्रिमम् ॥ ५ ॥
कृत्रिमं गरसंज्ञं तु क्रियते विविधौषधैः ॥
हन्ति योगवशेनाशु चिराच्चिरतराच्च तत् ॥ ६ ॥
शोफपाण्डूदरोन्माददुर्नामादीन्करोति च ॥
तीक्ष्णोष्णरूक्षविशदं व्यवाय्याशुकर लघु ॥ ७ ॥
विकासिसूक्ष्ममव्यक्तरस विषमपाकि च ॥
ओजसो विपरीत तत्तीक्ष्णाद्यैरन्वित गुणै ॥ ८ ॥
वातपित्तोत्तर नृणा सद्यो हरति जीवितम् ॥
विष हि देह सम्प्राप्य प्राग्दूषयति शोणितम् ॥ ९ ॥
कफपित्तानिलाश्चानु सम दोषान्सहाशयान् ॥
ततो हृदयमास्थाय देहोच्छेदाय कल्प्यते ॥ १० ॥
स्थावरस्योपयुक्तस्य वेगे पूर्वं प्रजायते ॥
जिह्वाया॰ शाश्वता स्तम्भो मूर्च्छा त्रास॰ क्लमो वमिः॥११॥
द्वितीये वेपथु॰ स्वेदो दाह॰ कण्ठे च वेदना ॥
विषं चामाशय प्राप्तं कुरुते हृदि वेदनाम् ॥ १२ ॥
तालुशोषस्तृतीये तु शूलं चामाशये भृशम् ॥
दुर्बले हरिते शूने जायेते चास्य लोचने ॥ १३ ॥

पक्वाशयगते तोदहिध्माकासान्त्रकूजनम् ॥
चतुर्थे जायते वेगे शिरसश्चातिगौरवम् ॥ १४ ॥
कफप्रसेको वैवर्ण्यं पर्वभेदश्च पञ्चमे ॥
सर्वदोषप्रकोपश्च पक्वाधाने च वेदना ॥ १५ ॥
षष्ठे संज्ञाप्रणाशश्च सुभृशं चातिसार्य्यते ॥
स्कन्धपृष्ठकटीभङ्गो भवेन्मृत्युश्च सप्तमे ॥ १६ ॥
प्रथमे विषवेगे तु वान्तं शीताम्बुसेचितम् ॥
सर्पिर्म्मधुभ्यां संयुक्तमगदं पाययेद् द्रुतम् ॥ १७ ॥
द्वितीये पूर्ववद्वान्तं विरिक्तं चानुपाययेत् ॥
तृतीयेऽगदपानं तु हितं नस्यं तथाञ्जनम् ॥ १८ ॥
चतुर्थे स्नेहसंयुक्तमगदं प्रतियोजयेत् ॥
पञ्चमे मधुकक्वाथमाक्षिकाभ्यां युतं हितम् ॥ १९ ॥
षष्ठेऽतिसारवत्सिद्धिरवपीडस्तु सप्तमे ॥
मूर्ध्नि काकपदं कृत्वा सासृग्वा पिशितं क्षिपेत् ॥ २० ॥
कोशातक्यग्निकः पाठा सूर्य्यवल्ल्यमृताभयाः ॥
शेलुः शिरीषः किणिही हरिद्रे क्षौद्रसाह्वया ॥ २१ ॥
पुनर्नवे त्रिकटुकं बृहत्यौ सारिवे बला ॥
एषां यवागूं निर्यूहेऽशीतां सघृतमाक्षिकाम् ॥ २२ ॥
युंज्याद्वेगान्तरे सर्वविषघ्नीं कृतकर्मणः ॥
तद्वन्मधूकमधुकपद्मकेसरचन्दनैः ॥ २३ ॥
अञ्जनं तगरं कुष्ठं हरितालं मनःशिला ॥
फलिनी त्रिकटुस्पृक्का नागपुष्पं सकेसरम् ॥ २४ ॥

हरेणु मधुकं मासी रोचना कामसालिका ॥
श्रीवेष्टक सर्जरसः शताह्वा कुङ्कुम नला ॥ २५ ॥
तमालपत्रतालीसभूर्जोशीरे निशाद्वयम् ॥
कन्योपवासिनीस्नाताशुक्लवासासधुद्धुतेः ॥ २६ ॥
द्विजानभ्यर्च्य तै. पुष्ये कल्पयेदगदोत्तमम् ॥
वैद्यश्चात्र तदा मन्त्रं प्रयतात्मा पठेदिदम् ॥ २७ ॥
नमः पुरुषसिंहाय नमो नारायणाय च ॥
यथासौ नाभिजानाति रणे कृष्णपराजयम् ॥ २८ ॥
एतेन सत्यवाक्येन अगदो मे प्रसिध्यतु ॥
नमो वैदुर्य्यमाते हुलुहुलु रक्ष मा सर्वविषेभ्य ॥ २९ ॥
गौरि गान्धारि चण्डालि मातङ्गि स्वाहा ॥
पिष्टे च द्वितीयोमन्त्र. ॥ ॐ हरिमायि स्वाहा ॥ ३० ॥
अशेषविषवेतालग्रहकार्मणपाप्मसु ॥
मरकव्याधिदुर्भिक्षयुद्धाशनिभयेषु च ॥ ३१ ॥
पापनस्याञ्जनालेपमणिबन्धादियोजित. ॥
एष चन्द्रोदयो नाम शान्ति. स्वस्त्ययन परम् ॥ ३२ ॥
जीर्णं विषघ्नौषधिभिर्हत वा दावाग्निवातातपशोषित वा ॥
स्वभावतो वा सुगुणैर्न युक्त दूषीविषाख्या विषमभ्युपैति३३॥
वीर्य्याल्पभावादविभाव्यमेतत्कफावृतं वर्षगणानुबन्धि ॥
तेनार्दितो भिन्नपुरीषवर्णो दुष्टास्त्ररोगी तृडरोचकार्त ॥३४॥
मूर्च्छन्वमन्गद्गदवाग्विमुह्यन्भवेच्च दूष्योदरलिङ्गजुष्टः ॥
आमाशयस्थे कफवातरोगी पक्वाशयस्थेऽनिलपित्तरोगी ३५॥

भवेन्नरो ध्वस्तशिरोरुहाङ्गो विलूनपक्षः स यथा विहङ्गः ॥
स्थितं रसादिष्वथवा विचित्रान्करोति धातुप्रभवान्विकारान् ॥
प्राग्वाताजीर्णशीताभ्रदिवास्वप्नाहिताशनैः ॥
दुष्टं दूषयते धातूनतो दूषीविषं स्मृतम् ॥ ३७ ॥
दूषीविषार्तं सुस्विन्नमूर्ध्वं चाधश्च शोधितम् ॥
दूषीविषारिमगदं लेहयेन्मधुना प्लुतम् ॥ ३८ ॥
पिप्पल्यो ध्यामकं मांसी रोध्रमेला सुवर्चिका ॥
कुटन्नटं नतं कुष्ठं यष्टी चन्दनगैरिकम् ॥ ३९ ॥
दूषीविषारिर्नाम्नाऽयं न चान्यत्रापि वार्यते ॥
विषदिग्धेन विद्धस्तु प्रताम्यति मुहुर्मुहुः ॥ ४० ॥
विवर्णभावं भजते विषादं चाशु गच्छति ॥
कीटैरिवावृतं चास्य गात्रं चिमिचिमायते ॥ ४१ ॥
श्रोणिपृष्ठशिरःस्कन्धसन्धयः स्युः सवेदनाः ॥
कृष्णादुष्टास्रविस्रावी तृण्मूर्च्छाज्वरदाहवान् ॥ ४२ ॥
दृष्टिकालुष्यवमथुश्वासकासकरः क्षणात् ॥
आरक्तपीतपर्यन्तः श्यावमध्योऽतिरुग्व्रणः ॥ ४३ ॥
सूयते पच्यते सद्यो गत्वा मांसं च कृष्णताम् ॥
प्रक्लिन्नं शीर्य्यतेऽभीक्ष्णं सपिच्छिलपरिस्रवम् ॥ ४४ ॥
कुर्य्यादमर्मविद्धस्य हृदयावरणं द्रुतम् ॥
शल्यमाकृष्य तप्तेन लोहेनानु दहेद्व्रणम् ॥ ४५ ॥
अथ वा मुष्ककश्वेतासोमत्वक्ताम्रवल्लितः ॥
शिरीषाद्गृध्रनख्याश्च क्षारिणः प्रतिसारयेत् ॥ ४६ ॥

शुकनासाप्रतिविषाव्याघ्रीमूलैश्च लेपयेत् ॥
कीटदष्टचिकित्सां च कुर्य्यात्तस्य यथार्हत. ॥ ४७ ॥
व्रणे तु पूतिपिशिते क्रिया पित्तविसर्पवत् ॥
सौभाग्यार्थं स्त्रियो भर्त्रे राज्ञे वाऽरातिचोदिता. ॥ ४८ ॥
गरमाहारसंपृक्तं यच्छन्त्यासन्नवर्तिनः ॥
नानाप्राण्यङ्गशमलविरुद्धौषधिभस्मनाम् ॥ ४९ ॥
विषाणां चाल्पवीर्य्याणां योगो गर इति स्मृत ॥
तेन पाण्डु' कृशोऽल्पाग्नि कासश्वासज्वरार्दित' ॥ ५० ॥
वायुना प्रतिलोमेन स्वप्नचिन्तापरायण. ॥
महोदरयकृत्प्लीही दीनवाग्दुर्बलोऽलस. ॥ ५१ ॥
शोफवान्सततध्मात' शुष्कपादकर क्षयी ॥
स्वप्ने गोमायुमार्जारनकुलव्यालवानरान् ॥ ५२ ॥
प्राय पश्यति शुष्कांश्च वनस्पतिजलाशयान् ॥
मन्यते कृष्णमात्मानं गौरो गौरं च कालक. ॥ ५३ ॥
विकर्णनासानयनं पश्येत्तद्विहतेन्द्रिय ॥
एतैरन्यैश्च बहुभि क्लिष्टो घोरैरुपद्रवै. ॥ ५४ ॥
गरार्तो नाशमाप्नोति कश्चित्सद्योऽचिकित्सितः ॥
गरार्तो वान्तवान्भुक्त्वा तत्पथ्यं पानभोजनम् ॥ ५५ ॥
शुद्धहृच्छीलयेद्धेम सूत्रस्थानविधे. स्मरन् ॥
शर्कराक्षौद्रसंयुक्तं चूर्णं ताप्यसुवर्णयो. ॥ ५६ ॥
लेह प्रशमयत्युग्रं सर्वयोगकृतं विषम् ॥
मूर्वामृतानतकणापटोलीचव्यचित्रकान् ॥ ५७ ॥

वचामुस्तविडङ्गानि तक्रं कोष्णाम्बुमस्तुभिः ॥
पिबेद्रसेन वाम्लेन गरोपहतपावकः ॥ ५८ ॥
पारावतामिषशठीपुष्कराह्वं शृतं हिमम् ॥
गरतृष्णारुजाकासश्वासहिध्माज्वरापहम् ॥ ५९ ॥
विषप्रकृतिकालान्नदोषदूष्यादिसङ्गमे ॥
विषसङ्कटमुद्दिष्टं शतस्यैकोऽत्र जीवति ॥ ६० ॥
क्षुत्तृष्णाघर्मदौर्बल्यक्रोधशोकभयश्रमैः ॥
अजीर्णवर्चो द्रवतः पित्तमारुतवृद्धिभिः ॥ ६१ ॥
तिलपुष्पफलाघ्राणभूबाष्पघनगर्जितैः ॥
हस्तिमूषिकवादित्रनिःस्वनैर्विषसङ्कटैः ॥ ६२ ॥
पुरोवातोत्पलामोदमदनैर्वर्धते विषम् ॥
वर्षासु चाम्बुयोनित्वात्संक्लेदं गुडवद्गतम् ॥ ६३ ॥
विसर्पति घनापाये तदगस्त्यो हिनस्ति च ॥
प्रयाति मन्दवीर्य्यत्वं विषं तस्माद्घनात्यये ॥ ६४ ॥
इति प्रकृतिसात्म्यर्तुस्थानवेगबलाबलम् ॥
आलोच्य निपुणं बुद्ध्या कर्मानन्तरमाचरेत् ॥ ६५ ॥
श्लैष्मिकं वमनैरुष्णरूक्षतीक्ष्णैः प्रलेपनैः ॥
कषायकटुतिक्तैश्च भोजनैः शमयेद्विषम् ॥ ६६ ॥
पैत्तिकं स्रंसनैः सेकप्रदेहैर्भृशशीतलैः ॥
कषायतिक्तमधुरैर्घृतयुक्तैश्च भोजनैः ॥ ६७ ॥
वातात्मकं जयेत्स्वादुस्निग्धाम्ललवणान्वितैः ॥
सघृतैर्भोजनैर्लेपैस्तथैव पिशिताशनैः ॥ ६८ ॥

नाघृतं स्त्रसनं शस्त प्रलेपो भोज्यमौषधम् ॥
सर्वेषु सर्वावस्थेपु विषेषु न घृतोपमम् ॥ ६९ ॥
विद्यते भेषज किञ्चिद्विशेपात्प्रबलेऽनिले ॥
अयत्नाच्छ्लैष्मिकं साध्य यत्नात्पित्ताशयाश्रयम् ॥ ७० ॥
सुदु साध्यमसाध्य वा वाताशयगत विषम् ॥ ७१ ॥

इत्यष्टाङ्गहृदयसहितायामुत्तरस्थाने पचात्रिंशोऽध्याय ॥ ३० ॥

## षट्त्रिंशोऽध्यायः ।

अथात· सर्पविपप्रतिपेधमध्यायं व्याख्यास्याम ।
दर्वीकरा मण्डलिनो राजीमन्तश्च पन्नगा ॥
त्रिधा समासतो भौमा भिद्यन्ते ते त्वनेकधा ॥ १ ॥
व्यासतो योनिभेदेन नोच्यन्तेऽनुपयोगिन ॥
विशेपाद्रूक्षकटुकमम्लोष्ण स्वादु शीतलम् ॥ २ ॥
विप दर्वीकरादीना क्रमाद्वातादिकोपनम् ॥
तारुण्यमध्यवृद्धत्वे वृष्टिशीतातपेषु च ॥ ३ ॥
विषोल्वणा भवन्त्येते व्यन्तरा ऋतुसन्धिपु ॥
रथाङ्गलाङ्गलच्छत्रस्वस्तिकाङ्कुशधारिणः ॥ ४ ॥
फणिन. शीघ्रगतय. सर्पा दर्वीकरा. स्मृताः ॥
ज्ञेया मण्डलिनोऽभोगा मण्डलैर्विविधैश्चिताः ॥ ५ ॥
प्राशवो मन्दगमना राजीमन्तस्तुराजिभि· ॥
स्निग्धा विचित्रवर्णाभि स्तिर्यगूर्ध्वं विचित्रिता ॥ ६ ॥

गोधासुतस्तु गौधेरो विषे दर्वीकरैः समः ॥
चतुष्पाद् व्यन्तरान्विद्यादेतेषामेव सङ्करात् ॥ ७ ॥
व्यामिश्रलक्षणास्ते हि सन्निपातप्रकोपनाः ॥
आहारार्थं भयात्पादस्पर्शादतिविषात्क्रुधः ॥ ८ ॥
पापवृत्तितया वैराद्देवर्षियमचोदनात् ॥
पश्यन्ति सर्पास्तेषूक्तं विषाधिक्यं यथोत्तरम् ॥ ९ ॥
आदिष्टात्कारणं ज्ञात्वा प्रतिकुर्याद्यथायथम् ॥
व्यन्तरः पापशीलत्वान्मार्गमाश्रित्य तिष्ठति ॥ १० ॥
यत्र लालापरिक्लेदमात्रं गात्रे प्रदृश्यते ॥
न तु दंष्ट्राकृतं दंशं तत्तुण्डाहतमादिशेत् ॥ ११ ॥
एकं दंष्ट्रापदं द्वे वा व्यालीढाख्यमशोणितम् ॥
दंष्ट्रापदे सरक्ते द्वे व्यालुप्तं त्रीणि तानि तु ॥ १२ ॥
मांसच्छेदादविच्छिन्नरक्तवाहीनि दंष्ट्रकम् ॥
दंष्ट्रापदानि चत्वारि तद्वद्दष्टनिपीडितम् ॥ १३ ॥
निर्विषं द्वयमत्राद्यमसाध्यं पश्चिमं वदेत् ॥
विषमाहेयमप्राप्य रक्तं दूषयते वपुः ॥ १४ ॥
रक्तमण्वपि तु प्राप्तं वर्द्धते तैलमम्बुवत् ॥
भीरोऽस्तु सर्पसंस्पर्शाद्भयेन कुपितोऽनिलः ॥ १५ ॥
कदाचित्कुरुते शोफं सर्पाङ्गाभिहतं तु तत् ॥
दुर्गान्धकारे विद्धस्य केनचिद्दष्टशङ्कया ॥ १६ ॥
विषोद्वेगो ज्वरच्छर्दिर्मूर्च्छादाहोऽपि वा भवेत् ॥
ग्लानिर्मोहोऽतिसारो वा तच्छङ्काविषमुच्यते ॥ १७ ॥

तुद्यते सविषो दंशः कण्डूशोफरुजान्वित.॥
दह्यते ग्रथितः किञ्चिद्विपरीतस्तु निर्विषः॥ १८॥
पूर्वे दर्वीकृता वेगे दुष्टं स्यावीभवत्यसृक्॥
श्यावता तेन वक्त्रादौ सर्पन्तीव च कीटका.॥ १९॥
द्वितीये ग्रन्थयो वेगे तृतीये मूर्ध्नि गौरवम्॥
दुर्गन्धो दंशविक्लेदश्चतुर्थे ष्ठीवनं वमि.॥ २०॥
सन्धिविश्लेषणं तन्द्रा पञ्चमे पर्वभेदनम्॥
दाहो हिध्मा च षष्ठे च हृत्पीडा गात्रगौरवम्॥ २१॥
मूर्च्छाविपाकोऽतीसार. प्राप्य शुक्रं तु सप्तमे॥
स्कन्धपृष्ठकटीभङ्ग. सर्वचेष्टानिवर्त्तनम्॥ २२॥
अथ मण्डलिदष्टस्य दुष्टं पीतीभवत्यसृक्॥
तेन पीताङ्गतादाहो द्वितीये श्वयथूद्भव॥ २३॥
तृतीये दंशविक्लेद स्वेदस्तृष्णा च जायते॥
चतुर्थे ज्वर्य्यते दाह पञ्चमे सर्वगात्रग॥ २४॥
दष्टस्य राजिलैर्दुष्टं पाण्डुतां याति शोणितम्॥
पाण्डुता तेन गात्राणां द्वितीये गुरुताऽति च॥ २५॥
तृतीये दंशविक्लेदो नासिकाक्षिमुखस्रवा॥
चतुर्थे गरिमा मूर्ध्नो मन्यास्तम्भश्च पञ्चमे॥ २६॥
गात्रभंगो ज्वर. शीत. शेषयो. पूर्ववद्वदेत्॥
कुर्य्यात्पञ्चसु वेगेषु चिकित्सां न तत परम्॥ २७॥
जलाप्लुता रतिक्षीणा भीता नकुलनिर्जिता.॥
शीतवातातपव्याधिक्षुत्तृष्णाश्रमपीडिताः॥ २८॥

तूर्णं देशान्तरायाता विमुक्तविषकंचुकाः ॥
कुशौषधीकण्टकवद्ये चरन्तीव काननम् ॥ २९ ॥
देशं च दिव्याध्युषितं सर्पास्तेऽल्पविषा मताः ॥
श्मशानचितिचैत्यादौ पंचमीपक्षसन्धिषु ॥ ३० ॥
अष्टमीनवमीसन्ध्यामध्यरात्रिदिनेषु च ॥
याम्याग्नेयमघाश्लेषाविशाखापूर्वनैर्ऋते ॥ ३१ ॥
नैर्ऋताख्ये मुहूर्त्ते च दष्टं मर्म्मसु च त्यजेत्॥
दष्टमात्रः सितास्याक्षः शीर्य्यमाणशिरोरुहः ॥ ३२ ॥
स्तब्धजिह्वो मुहुर्मूर्च्छञ्छीतोच्छ्वासो न जीवति ॥
हिध्मा श्वासा वमिः कासो दष्टमात्रस्य देहिनः ॥ ३३ ॥
जायन्ते युगपद्यस्य स हृच्छूली न जीवति ॥
फेनं वमति निःसञ्ज्ञः श्यावपादकराननः ॥ ३४ ॥
नासावसादोभङ्गोऽङ्गे विड्भेदः श्लथसन्धिता ॥
विषपीतस्य दष्टस्य दिग्धेनाभिहतस्य च ॥ ३५ ॥
भवन्त्येतानि रूपाणि सम्प्राप्ते जीवितक्षये ॥
न नस्यैश्चेतना तीक्ष्णैर्न क्षतात्क्षतजागमः ॥ ३६ ॥
दण्डाहतस्य नो राजीप्रयातस्य यमान्तिकम् ॥
अतोऽन्यथा तु त्वरया प्रदीप्ताङ्गारवद्भिषक् ॥ ३७ ॥
रक्षन्कण्ठगतान्प्राणान्विषमाशु शमं नयेत् ॥
मात्राशतं विषं स्थित्वा दंशे दष्टस्य देहिनः ॥ ३८ ॥
देहं प्रक्रमते धातून्रुधिरादीन्प्रदूषयेत् ॥
एतस्मिन्नन्तरे कर्म्म दंशस्योत्कर्त्तनादिकम् ॥ ३९ ॥

कुर्य्याच्छीघ्रं यथा देहे विषवल्ली न रोहति ॥
दष्टमात्रो दशेदाशु तमेव पवनाशिनम् ॥ ४० ॥
लोष्टं मही वा दशनैश्छित्त्वा चानु ससम्भ्रमम् ॥
निष्ठीवेन समालिम्पेद्दंशं कर्णमलेन वा ॥ ४१ ॥
दंशस्योपरि बध्नीयादरिष्टा चतुरंगुले ॥
क्षौमादिभिर्वेणिकया सिद्धैर्मन्त्रैश्च मन्त्रवित् ॥ ४२॥
अम्बुवत्सेतुबन्धेन बन्धेन स्तभ्यते विषम् ॥
न वहन्ति शिराश्चास्य विष बन्धाभिपीडिताः ॥ ४३ ॥
निष्पीड्यानूद्धरेद्दंश मर्म्मसन्ध्यगतं तथा ॥
न जायते विषावेगो बीजनाशादिवाङ्कुरः ॥ ४४ ॥
दंश मण्डलिना मुक्त्वा पित्तलत्वादथापरम् ॥
प्रतप्तैर्हेमलोहाद्यैर्दहेदाशूल्मुकेन वा ॥ ४५ ॥
करोति भस्मसात्सद्यो वह्निः किं नाम न क्षणात् ॥
आचूषेत्पूर्णवक्त्रो वा मृद्भस्मागदगोमयैः ॥ ४६ ॥
प्रच्छायान्तररिष्टाया मांसलं तु विशेषतः ॥
अगं सहैव दंशेन लेपयेदगदैर्मुहुः ॥ ४७ ॥
चन्दनोशीरयुक्तेन सलिलेन च सेचयेत् ॥
विषे प्रविसृते विध्याच्छिरां सा परमा क्रिया ॥ ४८ ॥
रक्ते निर्ह्रियमाणे हि कृत्स्नं निर्ह्रियते विषम् ॥
दुर्गंध सविषं रक्तमग्नौ चटचटायते ॥ ४९ ॥
यथादोषं विशुद्धं च पूर्ववल्लक्षयेदसृक् ॥
शिरास्वदृश्यमानासु योज्या शृंगजलौकसः ॥ ५० ॥

शोणितं श्रुतशेषं च प्रविलीनं विषोष्मणा ॥
लेपसेकैस्तु बहुशः स्तम्भयेन्मृशशीतलैः ॥ ५१ ॥
अस्कन्ने विषवेगाद्धि मूर्च्छायमदहृद्द्रवाः ॥
भवन्ति ताञ्जयेच्छीतैर्बीजेच्चारोमहर्षतः ॥ ५२ ॥
स्कन्ने तु रुधिरे सद्यो विषवेगः प्रशाम्यति ॥
विषं कर्षति तीक्ष्णत्वाद्धृदयं तस्य गुप्तये ॥ ५३ ॥
पिबेद् घृतं घृतक्षौद्रमगदं वा घृतप्लुतम् ॥
हृदयावरणे चास्य श्लेष्मा हृद्युपचीयते ॥ ५४ ॥
प्रवृत्तगौरवोत्क्लेशहृल्लासं वामयेत्ततः ॥
द्रवैः काञ्जिककौलत्थतैलमद्यादिवर्जितैः ॥ ५५ ॥
वमनैर्विषहृद्भिश्च नैवं व्याप्नोति तद्वपुः ॥
भुजङ्गदोषप्रकृतिस्थानवेगविशेषतः ॥ ५६ ॥
सुसूक्ष्मं सम्यगालोच्य विशिष्टां वाऽऽचरेत्क्रियाम् ॥
सिन्दुवारितमूलानि श्वेता च गिरिकर्णिका ॥ ५७ ॥
पानं दर्वीकरैर्दष्टे नस्यं मधु सपाकलम् ॥
कृष्णसर्पेण दष्टस्य लिम्पेद्दंशं हृतेऽसृजि ॥ ५८ ॥
चारटीनाकुलीभ्यां वा तीक्ष्णमूलविषेण वा ॥
पानं च क्षौद्रमञ्जिष्ठागृहधूमयुतं घृतम् ॥ ५९ ॥
तण्डुलीयककाश्मर्यकिणिहीगिरिकर्णिकाः ॥
मातुलुङ्गी सिता सेलुः पाननस्याञ्जनैर्हितः ॥ ६० ॥
अगदः फणिनां घोरे विषे राजीमतामपि ॥
समाः सुगन्धा मृद्वीका श्वेताख्या गजदन्तिका ॥ ६१ ॥

अर्धांश सौरसं पत्र कपित्थ विल्वदाडिमम् ॥
सक्षौद्रो मण्डलिविषे विशेषादगदो हितः ॥ ६२ ॥
पञ्चवल्कवरायष्टीनागपुष्पैलवालुकम् ॥
जीवकर्षभकौशीर सितापद्मकमुत्पलम् ॥ ६३ ॥
सक्षौद्री हिमवान्नाम हन्ति मण्डलिनां विषम् ॥
लेपाच्छ्वयथुवीसर्पविस्फोटज्वरदाहहा ॥ ६४ ॥
काश्मर्य्यवटशृङ्गाणि जीवकर्षभकौ सिता ॥
मञ्जिष्ठा मधुकं चेति दष्टो मण्डलिना पिबेत् ॥ ६५ ॥
वंशत्वग्बीजकटुकापाटलीबीजनागरम् ॥
शिरीषबीजातिविषे मूलं गावेधुकं वचा ॥ ६६ ॥
पिष्टो गोवारिणाघ्राङ्गो हन्ति गोनसजं विषम् ॥
कटुकातिविषाकुष्ठगृहधूमहरेणुकाः ॥ ६७ ॥
सक्षौद्रव्योषतगरा घ्नन्ति राजीमता विषम् ॥
निखनेत्काण्डचित्राया दंशं यामद्वयं भुवि ॥ ६८ ॥
उद्धृत्य प्रस्थित सर्पिर्धान्यमृद्भ्यां प्रलेपयेत् ॥
पिबेत्पुराण च घृत वराचूर्णावचूर्णितम् ॥ ६९ ॥
जीर्णे विरिक्ते भुञ्जीत यवान्न-सूपसस्कृतम् ॥
करवीरार्ककुसुममूललाङ्गलिकाकणा. ॥ ७० ॥
कल्कयेदारनालेन पाठामरिचसयुता' ॥
एष व्यन्तरदष्टानामगद' सार्वकार्मिकः॥ ७१ ॥
शिरीषपुष्पस्वरसे सप्ताहं मरिचं सितम् ॥
भावित सर्पदष्टानां पाने नस्याञ्जने हितम् ॥ ७२ ॥

द्विपलं नतकुष्ठाभ्यां घृतक्षौद्रचतुष्पलम् ॥
अपि तक्षकदष्टानां पानमेतत्सुखप्रदम् ॥ ७३ ॥
अथ दर्वीकृतां वेगे पूर्वे विस्राव्य शोणितम् ॥
अगदं मधुसर्पिर्भ्यां संयुक्तं त्वरितं पिबेत् ॥ ७४ ॥
द्वितीये वमनं कृत्वा तद्वदेवागदं पिबेत् ॥
विषापहैः प्रयुञ्जीत तृतीयेऽञ्जननावने ॥ ७५ ॥
पिबेच्चतुर्थे पूर्वोक्तां यवागूं वमने कृते ॥
षष्ठपञ्चमयोः शीतैर्दिग्धं सिक्तमभीक्ष्णशः ॥ ७६ ॥
पाययेद्वमनं तीक्ष्णं यवागूं च विषापहैः ॥
अगदं सप्तमे तीक्ष्णं युञ्ज्यादञ्जननस्ययोः ॥ ७७ ॥
कृत्वावगाढं शस्त्रेण मूर्ध्नि काकपदं गतः ॥
मांसं सरुधिरं तस्य चर्म वा तत्र निक्षिपेत् ॥ ७८ ॥
तृतीये वमितः पेयां वेगे मण्डलिनां पिबेत् ॥
अतीक्ष्णमगदं षष्ठे गणं वा पद्मकादिकम् ॥ ७९ ॥
आद्येऽवगाढं प्रच्छाय वेगे दष्टस्य राजिलैः ॥
अलाम्बुना हरेद्रक्तं पूर्ववच्चागदं पिबेत् ॥ ८० ॥
गर्भिणीबालवृद्धेषु मृदु विध्येच्छिरां न च ॥
अनुक्तेषु च वेगेषु क्रियां दर्वीकरोदिताम् ॥ ८१ ॥
षष्ठेऽञ्जनं तीक्ष्णतममवपीडं च योजयेत् ॥
त्वङ्मनोह्वानिशे वक्रं रसः शार्दूलजो नखः ॥ ८२ ॥
तमालः केसरं शीतं पीतं तन्दुलवारिणा ॥
हन्ति सर्वविषाण्येतद्वज्रिवज्रमिवासुरान् ॥ ८३ ॥

विल्वस्य मूल सुरसस्य पुष्पं फल करञ्जस्य नतं सुराह्वम् ॥
फलत्रिकव्योषनिशाद्वयंचवस्तस्य सूत्रेणसुसूक्ष्मपिष्टम् ॥८४॥
भुजङ्गलूतोन्दुरवृश्चिकाद्यैर्विषूचिकाजीर्णगरज्वरैश्च ॥
आर्तान्नरान्भूतविधर्षिताश्च स्वस्थीकरोत्यञ्जनपाननस्यैः ८५
प्रलेपाद्यैश्च निःशेष दशादप्युद्धरेद्विषम् ॥
भूयो वेगाय जायेत शेष दूषीविषाय वा ॥ ८६ ॥
विषापायेऽनिलं क्रुद्धं स्नेहादिभिरुपाचरेत् ॥
तैलमद्यकुलत्थाम्लवर्ज्यैः पवननाशनै ॥ ८७ ॥
पित्तं पित्तज्वरहरैः कषायस्नेहबस्तिभिः ॥
ससाक्षिकेण वर्गेण कफसारग्वधादिना ॥ ८८ ॥
सिता वैगन्धिको द्राक्षा पयस्या मधुकं मधु ॥
पाने समन्त्रपूताम्बुप्रोक्षण सान्त्वहर्षणम् ॥ ८९ ॥
सर्पेणाभिहते युज्यात्तथा शङ्काविषार्दिते ॥
कर्केतन मरकत वज्र वारणमौक्तिकम् ॥ ९० ॥
वैदूर्य्यगर्दभमणि पिचुक विषमूषिकाम् ॥
हिमवद्गिरिसम्भूता सोमराजी पुनर्नवाम् ॥ ९१ ॥
तथा द्रोणा महाद्रोणा मानसी सर्पजं मणिम् ॥
विषाणि पिषशान्त्यर्थं वीर्य्यवन्ति च धारयेत् ॥ ९२ ॥
छत्री जर्जरपाणिश्च चरेद्रात्रौ विशेषतः ॥
तच्छायाशब्दवित्रस्ताः प्रणश्यन्ति भुजङ्गमाः ॥ ९३ ॥

इत्यष्टाङ्गहृदयसहितायामुत्तरस्थाने षट्त्रिंशोऽध्यायः ॥ ३६ ॥

# सप्तत्रिंशोऽध्यायः ।

अथातः कीटलूतादिविषप्रतिषेधमध्यायं व्याख्यास्यामः ।

सर्पाणामेव विण्मूत्रशुक्राण्डशवकोथजाः ॥
दोषैर्व्यस्तैः समस्तैश्च युक्ताः कीटाश्चतुर्विधाः ॥ १ ॥
दष्टस्य कीटैर्वायव्यैर्दंशस्तोदरुजोल्वणः ॥
आग्नेयैरल्पसंस्रावो दाहरागविसर्पवान् ॥ २ ॥
पक्वपीलुफलप्रख्यः खर्जूरसदृशोऽथ वा ॥
कफाधिकैर्मन्दरुजः पक्वोदुम्बरसन्निभः ॥ ३ ॥
स्रावाढ्यः सर्वलिङ्गस्तु विवर्ज्यः सान्निपातिकैः ॥
वेगाश्च सर्पवच्छोफो वर्द्धिष्णुर्विस्नरक्तता ॥ ४ ॥
शिरोऽक्षिगौरवं मूर्च्छा भ्रमः श्वासोऽतिवेदना ॥
सर्वेषां कर्णिकाशोफो ज्वरः कण्डूररोचकः ॥ ५ ॥
वृश्चिकस्य विषं तीक्ष्णमादौ दहति वह्निवत् ॥
ऊर्ध्वमारोहति क्षिप्रं दंशे पश्चात्तु तिष्ठति ॥ ६ ॥
दंशः सद्योऽतिरुक्छ्यावस्तुद्यते स्फुटतीव च ॥
ते गवादिशकृत्कोथाद्दिग्धदष्टादिकोथतः ॥ ७ ॥
सर्पकोथाश्च सम्भूता मन्दमध्यमहाविषाः ॥
मन्दाः पीताः सिताः श्यावा रूक्षकर्बुरमेचकाः ॥ ८ ॥
रोमशा बहुपर्वाणो लोहिताः पाण्डुरोदराः ॥
धूम्रोदरास्त्रिपर्वाणो मध्यास्तु कपिदारुणाः ॥ ९ ॥

पिशङ्गा. शवलाश्चित्रा. शोणिताभा महाविषा. ॥
अग्न्याभा द्व्येकपर्व्वाणो रक्ताः केचित्सितोदरा. ॥१०॥
तैर्दष्टः शूनरसनः स्तब्धगात्रो ज्वरार्दित. ॥
स्वैर्वमञ्छोणितं कृष्णमिन्द्रियार्थानसंविदन् ॥ ११ ॥
खिद्यन्मूर्च्छन्विशुष्कास्यो विह्वलो वेदनातुर. ॥
विशीर्य्यमाणमांसश्च प्रायशो विजहात्यसून् ॥ १२ ॥
उच्चिटिङ्गस्तु वक्त्रेण दशत्यभ्यधिकव्यथः ॥
साध्यतोवृश्चिकात्स्तम्भ शेफसो हृष्टरोमताम् ॥ १३ ॥
करोति सेकमङ्गाना दशः शीताम्बुनेव च ॥
उष्ट्रधूमः स एवोक्तो रात्रिचाराच्च रात्रिकः ॥ १४ ॥
वातपित्तोत्तरा कीटा. श्लैष्मिकाः कणभोन्दुरा. ॥
प्रायो वातोल्वणविषा वृश्चिका. सोष्ट्रधूमकाः ॥ १५ ॥
यस्य यस्यैव दोषस्य लिङ्गाधिक्य प्रतर्कयेत् ॥
तस्य तस्यौषधै. कुर्य्याद्विपरीतगुणै क्रियाम् ॥ १६ ॥
हृत्पीडोर्ध्वानिलस्तम्भ. शिरायामोऽस्थिपर्वरुक् ॥
घूर्णनोद्वेष्टन गात्रश्यावता वातिके विषे ॥ १७ ॥
संज्ञानाशोष्णनिःश्वासौ हृद्दाहः कटुकास्यता ॥
मांसावदरण शोफो रक्त .पीतश्च पैत्तिके ॥ १८ ॥
छर्द्यरोचकहृल्लासप्रसेकोत्क्लेशपीनसै ॥
सशैत्यमुखमाधुर्य्यैर्विद्याच्छ्लेष्माधिक विषम् ॥ १९ ॥
पिण्याकेन व्रणालेपस्तैलाभ्यगश्च वातिके ॥
नाडीस्वेदो पुलाकाद्यैर्बृंहणश्च विधिर्हित. ॥ २० ॥

पैत्तिकं स्तम्भयेत्सेकैः प्रदेहैश्चातिशीतलैः ॥
लेखनच्छेदनस्वेदवमनैः श्लैष्मिकं जयेत् ॥ २१ ॥
कीटानां त्रिःप्रकाराणां त्रैविध्येन प्रतिक्रिया ॥
स्वेदालेपनसेकास्तुकोष्णान्प्रायोवचारयेत् ॥ २२ ॥
अन्यत्र मूर्च्छितादंशपाकतः कोथतोऽथ वा ॥
नृकेशाः सर्षपाः पीता गुडो जीर्णश्च धूपनम् ॥ २३ ॥
विषदंशस्य सर्वस्य काश्यपः परमब्रवीत् ॥
विषघ्नं च विधिं सर्वं कुर्य्यात्संशोधनानि च ॥ २४ ॥
साधयेत्सर्पवद्दष्टान्विषोग्रैः कीटवृश्चिकैः ॥
तन्दुलीयकतुल्यांशां त्रिवृतां सर्पिषा पिबेत् ॥ २५ ॥
याति कीटविषैः कम्पं न कैलास इवानिलैः ॥
क्षीरिवृक्षत्वगालेपः शुद्धे कीटविषापहः ॥ २६ ॥
मुक्तालेपो वरः शोफतोददाहज्वरप्रणुत् ॥
वचाहिंगुविडङ्गानि सैन्धवं गजपिप्पली ॥ २७ ॥
पाठा प्रतिविषा व्योषं काश्यपेन विनिर्म्मितम् ॥
दशांगमगदं पीत्वा सर्वकीटविषं जयेत् ॥ २८ ॥
सद्यो वृश्चिकजं दंशं चक्रतैलेन सेचयेत् ॥
विदारिगन्धासिद्धेन कवोष्णेनेतरेण वा ॥ २९ ॥
लवणोत्तमयुक्तेन सर्पिषा वा पुनः पुनः ॥
सिञ्चेत्कोष्णारनालेन सक्षीरलवणेन वा ॥ ३० ॥
उपनाहे घृते भृष्टः कल्कोजाज्याः ससैन्धवः ॥
आदंशं स्वेदितं चूर्णैः प्रच्छाय प्रतिसारयेत् ॥ ३१ ॥

रजनीसैन्धवव्योषशिरीषफलपुष्पजैः ॥
मातुलुगाम्लगोमूत्रपिष्टं च सुरसाग्रजम् ॥ ३२ ॥
लेपः सुखोष्णश्च हितः पिण्याको गोमयोऽपि वा ॥
पाने सर्पिर्मधुयुतं क्षीरं वा भूरिशर्करम् ॥ ३३ ॥
पारावतशकृत्पथ्या तगरं विश्वभेषजम् ॥
बीजपूररसोन्मिश्रः परमो वृश्चिकागदः ॥ ३४ ॥
सशैवलोग्रा दग्ध्रा च हन्ति वृश्चिकजं विषम् ॥
हिगुना हरितालेन मातुलुंगरसेन च ॥ ३५ ॥
लेपाञ्जनाभ्यां गुटिका परमं वृश्चिकापहा ॥
करञ्जार्जुनशैलूना कटुभ्यां कुटजस्य च ॥ ३६ ॥
शिरीषस्य च पुष्पाणि मस्तुना दंशलेपनम् ॥
यो मुह्यति प्रश्वसिति प्रलपत्युग्रवेदनः ॥ ३७ ॥
तस्य पथ्यानिशाकृष्णामञ्जिष्ठातिविषोषणम् ॥
सालाम्बुवृन्तं वार्ताकरसपिष्टं प्रलेपनम् ॥ ३८ ॥
सर्वत्र चोग्रालिविषे पाययेद्दधिसर्पिषी ॥
विध्येच्छिरां विदध्याच्च वमनाञ्जननावनम् ॥ ३९ ॥
उष्णस्निग्धाम्लमधुरं भोजनं चानिलापहम् ॥
नागरं गृहकपोतपुरीषं बीजपूरकरसो हरितालम् ॥४० ॥
सैन्धवं च विनिहन्त्यगदोऽयं लेपतोऽलिकुलजं विषमाशु॥
अन्ते वृश्चिकदष्टानां समुदीर्णे भृशं विषे ॥ ४१ ॥
विषेणालेपयेद्दंशमुच्चिटिङ्गेऽप्ययं विधिः ॥
नागपुरीषच्छत्रं रोहिषमूलं च शेलुतोयेन ॥ ४२ ॥

कर्य्याद्गुटिका लेपादियमालिविषनाशनी श्रेष्ठा ॥
अर्कस्यदुग्धेनशिरीषबीजंत्रिर्भावितंपिप्पलिचूर्णमिश्रम्॥४३॥
एषोगदो हन्ति विषाणि कीटभुजंगलूतोन्दुरवृश्चिकानाम् ॥
शिरीषपुष्पं सकरञ्जबीजं काश्मीरजं कुष्ठमनःशिला च॥४४॥
एषोगदो रात्रिकवृश्चिकानां संक्रान्तिकारी कथितो जिनेन ॥
कोटिभ्यो दारुणतरा लूताः षोडश ता जगुः ॥ ४५ ॥
अष्टाविंशतिरित्येके ततोऽप्यन्ये तु भूयसीः ॥
सहस्ररश्म्यनुचरा वदन्त्यन्ये सहस्रशः ॥ ४६ ॥
बहूपद्रवरूपा तु लूतैकैव विषात्मिका ॥
रूपाणि नामतस्तस्या दुर्ज्ञेयान्यतिसङ्करात् ॥ ४७ ॥
नास्ति स्थानव्यवस्था च दोषतोऽतःप्रचक्षते ॥
कृच्छ्रसाध्या पृथग्दोषैरसाध्या निचयेन सा ॥ ४८ ॥
तद्दंशः पैत्तिको दाहतृट्स्फोटज्वरमोहवान् ॥
भृशोष्मा रक्तपीताभः क्लेदी द्राक्षाफलोपमः ॥ ४९ ॥
श्लैष्मिकः कठिनः पाण्डुः परूषकफलाकृतिः ॥
निद्रां शीतज्वरं कासं कण्डूं च कुरुते भृशम् ॥ ५० ॥
वातिकः परुषः श्यावः पर्वभेदज्वरप्रदः ॥
तद्विभागं यथास्वं च दोषलिङ्गैर्विभावयेत् ॥ ५१ ॥
असाध्यायां तु हृन्मोहश्वासहिध्माशिरोरुजाः ॥
श्वेताः पीताः सिता रक्ताः पिटिकाः श्वयथूद्भवाः ॥५२॥
वेपथुर्वमथुर्दाहस्तृडान्ध्यं वक्रनासता ॥
श्यावोष्ठवक्रदन्तत्वं पृष्ठग्रीवावभञ्जनम् ॥ ५३ ॥

पक्वजम्बुसवर्णं च दशात्स्रवति शोणितम् ॥
सर्वापि सर्वजा प्रायो व्यपदेशस्तु भूयसा ॥ ५४ ॥
तीक्ष्णमध्यावरत्वेन सा त्रिधा हन्त्युपेक्षिता ॥
सप्ताहेन दशाहेन पक्षेण च परं क्रमात् ॥ ५५ ॥
लूतादंशश्च सर्वोऽपि दद्रूमण्डलसन्निभः ॥
सितोऽसितोऽरुणः पीतः श्यावो वा मृदुरुन्नत. ॥ ५६
मध्ये कृष्णोऽथवा श्यावः पर्यन्ते जालकावृतः ॥
विसर्पवाच्छोफयुतस्तप्यते बहुवेदन' ॥ ५७ ॥
ज्वराशुपाकविक्लेदकोथावदरणान्वित. ॥
क्लेदेन यत्स्पृशत्यंङ्ग तत्रापि कुरुते व्रणम् ॥ ५८ ॥
श्वासदंष्ट्राशकृन्मूत्रशुक्रलालानखार्तवै ॥
अष्टाभिरुद्वमत्येषा विषं वक्त्रैर्विशेषत. ॥ ५९ ॥
लूता नाभेर्दशत्यूर्ध्वमूर्ध्वं वाऽधश्च कीटकाः ॥
तद्दूषितं च वस्त्रादिदेहे पृक्त विकारकृत् ॥ ६० ॥
दिनार्द्धं लक्ष्यते नैव दंशो लूताविषोद्भवः ॥
सूचीव्यधवदाभाति ततोऽसौ प्रथमेऽहनि ॥ ६१ ॥
अव्यक्तवर्णं प्रचल' किञ्चित्कण्डूरुजान्वित' ॥
द्वितीयेऽभ्युन्नतोऽन्तेषु पिटकैरिव वा चित' ॥ ६२ ॥
व्यक्तवर्णो तनोर्मध्ये कण्डूमान्ग्रन्थिसन्निभः ॥
तृतीये सज्वरो रोमहर्षकृद्रक्तमण्डल. ॥ ६३ ॥
शरावरूपस्तोदाढ्यो रोमकूपेषु सस्रवः ॥
महांश्चतुर्थे श्वयथुस्तापश्वासभ्रमप्रदः ॥ ६४ ॥

विकारान्कुरुते तांस्तान्पञ्चमे विषकोपजान् ॥
षष्ठे व्याप्नोति मर्माणि सप्तमे हन्ति जीवितम् ॥ ६५ ॥
इति तीक्ष्णं विषं मध्यं हीनं च विभजेदतः ॥
एकविंशतिरात्रेण विषं शाम्यति सर्वथा ॥ ६६ ॥
अथाशु लूतादष्टस्य शस्त्रेणादंशमुद्धरेत् ॥
दहेच्च जाम्बवौष्ठाद्यैर्न तु पित्तोत्तरं दहेत् ॥ ६७ ॥
कर्कशं भिन्नरोमाणं मर्म्मसंध्यादिसंश्रितम् ॥
प्रसृतं सर्वतो दंशं नच्छिन्दीत दहेन्न च ॥ ६८ ॥
लेपयेदगधमगदैर्म्मधुसैन्धवसंयुतैः ॥
सुशीतैः सेचयेच्चानु कषायैः क्षीरिवृक्षजैः ॥ ६९ ॥
स्रवतोऽपहरेद्रक्तं शृङ्गाद्यैः शिरयापि वा ॥
सेकालेपास्ततः शीता वोधिश्लेष्मातकाक्षरैः ॥ ७० ॥
फलिनीद्विनिशाक्षौद्रसर्पिर्भिः पद्मकाह्वयः ॥
अशेषलूताकीटानामगदः सर्वकार्म्मिकः ॥ ७१ ॥
हारिद्राद्वयपत्तङ्गमंजिष्ठानतकेसरैः ॥
सक्षौद्रसर्पिः पूर्वस्मादधिकश्चम्पकाह्वयः ॥ ७२ ॥
तद्वद्गोमयनिष्पीडाशर्कराघृतमाक्षिकैः ॥
अपामार्गमनोह्वालदार्वीध्यामकगौरिकैः ॥ ७३ ॥
नतैलाकुष्ठमारिचयष्ट्याह्वघृतमाक्षिकैः ॥
अगदो मन्दरो नाम तथाऽन्यो गन्धमादनः ॥ ७४ ॥
नतरोध्रवचाकट्वीपाठैलापत्रकुंकुमैः ॥
विषघ्नं बहुदोषेषु प्रयुंजीत विशोधनम् ॥ ७५ ॥

यष्ट्याह्वमदनाकोल्लजालिनीमिन्दुवारिका. ॥
कफे श्रेष्ठाम्बुना पीत्वा विषमाशु समुद्वमेत् ॥ ७६ ॥
शिरीषपत्रत्वङ्मूलफल वाकोल्लमूलवत् ॥
विरेचयेच्च त्रिफलानीलिनीत्रिवृतादिभि ॥ ७७ ॥
निवृत्ते दाहशोफादौ कर्णिका पातयेद् व्रणात् ॥
कुसुम्भपुष्प गोदन्त. स्वर्णक्षीरी कपोतविट् ॥ ७८ ॥
त्रिवृता सैन्धव दन्तीकर्णिकापातन तथा ॥
मूलमुत्तरवारुण्या वशानिर्लेखसंयुतम् ॥ ७९ ॥
तद्वच्च सैन्धवं कुष्ठं दन्ती कटुकदौग्धिकम् ॥
राजकोशातकीमूल किणो वा मथितोद्भव' ॥ ८० ॥
कर्णिकापातसमये बृहयेच्च विषापहे ॥
स्नेहकार्यमशेष च सर्पिषैव समाचरेत् ॥ ८१ ॥
विषस्य वृद्धये तैलमग्नेरिव तृणोलुपम् ॥
ह्रीवेरवैकङ्कतगोपकन्यामुस्ताशमीचन्दनटिण्टुकानि ॥
शैवालनीलोत्पलवक्रयष्टीत्वङ्नाकुलीपद्मकराठमध्यम् ॥८२॥
रजनीघनसर्पलोचनाकणशुण्ठीकणमूलचित्रका ॥
वरुणागुरुविल्वपाटलीपिचुमन्दाभयशेलुकेसरम् ॥ ८३ ॥
विल्वचन्दननतोत्पलशण्ठीपिप्पलीनिचुलवेतसकुष्ठम् ॥
शुक्तिशाकवरपाटलिभार्ङ्गीसिन्दुवारकसघाटवरागम् ८४
पित्तकफानिललूताः पानाञ्जननस्यलेपसेकेन ॥
अगदवरा वृत्तस्था कुमतीरिव वारयन्त्येते ॥ ८५ ॥

रोध्रं सेव्यं पद्मकं पद्मरेणुः कालीयाख्यं चन्दनं यच्च रक्तम् ॥
कान्तापुष्पंदुग्धिनीकामृणालंलूताःसर्वान्घ्नन्तिसर्वक्रियाभिः ॥

इत्यष्टाङ्गहृदयसंहितायामुत्तरस्थाने सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

# अष्टत्रिंशोऽध्यायः ।



अथातो मूषिकालर्कविषप्रतिषेधमध्यायं व्याख्यास्यामः ।

लालनश्चपलः पुत्रो हसितश्चिक्किरोजिरः ॥
कषायदन्तः कुलकः कोकिलः कपिलोऽसितः ॥ १ ॥
अरुणः शबलः श्वेतः कपोतः पलितोन्दुरः ॥
छुच्छुन्दरी रसालाख्यो दशाष्टौ चेति मूषिकाः ॥ २ ॥
शुक्रं पतति यत्रैषां शुक्रदिग्धैः स्पृशन्ति वा ॥
यदङ्गमङ्गैस्तत्रास्रे दूषिते पाण्डुतां गते ॥ ३ ॥
ग्रन्थयः श्वयथुः कोथो मण्डलानि भ्रमोऽरुचिः ॥
शीतज्वरोऽतिरुक्सादो वेपथुः पर्वभेदनम् ॥ ४ ॥
रोमहर्षः स्रुतिर्मूर्च्छादीर्घकालानुबन्धनम् ॥
श्लेष्मानुबद्धबह्वाखुपोतकच्छर्दनं सतृट् ॥ ५ ॥
व्यवाय्याखुविषं कृच्छ्रं भूयोभूयश्च कुप्यति ॥
मूर्च्छांगशोफवैवर्ण्यक्लेदशब्दाश्रुतिज्वराः ॥ ६ ॥
शिरोगुरुत्वं लालासृक्छर्दिश्चासाध्यलक्षणम् ॥
शूनबस्तिं विवर्णौष्ठमाख्वाभैर्ग्रन्थिभिश्चितम् ॥ ७ ॥

छुच्छुन्दरसगन्धं च वर्जयेदाखुदूषितम् ॥
शुन: श्लेष्मोल्वणा दोषाः सञ्ज्ञां सञ्ज्ञावहाश्रिताः ॥ ८ ॥
मुष्णन्तः कुर्वते क्षोभं धातूनामतिदारुणम् ॥
लालावानन्धबधिरः सर्वतः सोऽभिधावति ॥ ९ ॥
स्रस्तपुच्छहनुस्कन्धशिरोदुःखी नतानन: ॥
दंशस्तेन विदष्टस्य सुप्तः कृष्णं क्षरत्यसृक् ॥ १० ॥
हृच्छिरोरुज्ज्वरस्तम्भस्तृष्णामूर्च्छोद्भवोऽनु च ॥
अनेनान्येऽपि बोद्धव्या व्याला दंष्ट्राप्रहारिणः ॥ ११ ॥
कण्डूनिस्तोदवैवर्ण्यसुप्तिक्लेदज्वरभ्रमाः ॥
विदाहरागरुक्पाकशोथग्रन्थिविकुञ्चनम् ॥ १२ ॥
दंशावदरणं स्फोटाः कर्णिका मण्डलानि च ॥
सर्वत्र सविषे लिङ्गं विपरीतं तु निर्विषे ॥ १३ ॥
दष्टो येन तु तच्चेष्टां रुतं कुर्वन्विनश्यति ॥
पश्यंस्तमेव चाकस्मादादर्शसलिलादिषु ॥ १४ ॥
योऽद्भ्यस्त्रस्येददष्टोऽपि शब्दसंस्पर्शदर्शनैः ॥
जलसन्त्रासनामानं दष्टं तमपि वर्जयेत् ॥ १५ ॥
आखुना दष्टमात्रस्य दंशं काण्डेन दाहयेत् ॥
दर्पणेनाथवा तीव्ररुजा स्यात्कर्णिकान्यथा ॥ १६ ॥
दग्धं विस्रावयेद्दंशं प्रच्छिन्नं च प्रलेपयेत् ॥
शिरीषरजनीवक्रकुङ्कुमामृतवल्लिभिः ॥ १७ ॥
अगारधूममञ्जिष्ठारजनीलवणोत्तमैः ॥
लेपो जयत्याखुविषं कर्णिकायाश्च पातनः ॥ १८ ॥

ततोऽम्लैः क्षालयित्वाऽनु तोयैरनु च लेपयेत् ॥
पालिन्दीश्वेतकटभीविल्वमूलगुडूचिभिः ॥ १९ ॥
अन्यैश्च विषशोफघ्नैः शिरा वा मोक्षयेद्द्रुतम् ॥
छर्दनं नीलिनीक्काथैःशुकाख्याङ्कोल्लयोरपि ॥ २० ॥
कोशातक्याः शुकाख्यायाः फलं जीमूतकस्य च ॥
मदनस्य च संचूर्ण्य दध्ना पीत्वा विषं वमेत् ॥ २१ ॥
वचामदनजीमूतकुष्ठं वा मूत्रपेषितम् ॥
पूर्वकल्पेन पातव्यं सर्वोन्दुरविषापहम् ॥ २२ ॥
विरेचनं त्रिवृन्नीलित्रिफलाकल्क इष्यते ॥
अंजनं गोमयरसो व्योषसूक्ष्मरजोऽन्वितः ॥ २३ ॥
कपित्थगोमयरसो मधुमानवलेहनम् ॥
तन्दुलीयकमूलेन सिद्धं पाने हितं घृतम् ॥ २४ ॥
द्विनिशाकटभीरक्तायष्ट्याह्वैर्वाऽमृतान्वितैः ॥
आस्फोतमूलसिद्धं वा पञ्चकापित्थमेव वा ॥ २५ ॥
सिन्दुवारनतं शिग्रु बिल्वमूलं पुनर्नवा ॥
वचाश्वदंष्ट्राजीमूतमेषां क्वाथं समाक्षिकम् ॥ २६ ॥
पिबेच्छाल्योदनं दध्ना भुंजानो मूषिकार्दितः ॥
तक्रेण शरपुंखाया बीजं संचूर्ण्य वा पिबेत् ॥ २७ ॥
अङ्कोल्लमूलकल्को वा बस्तमूत्रेण कल्कितः ॥
पानालेपनयोर्युक्तः सर्वाखुविषनाशनः ॥ २८ ॥
कपित्थमध्यातिलकतिलाङ्कोल्लजटाः पिबेत् ॥
गवां मूत्रेण पयसा मञ्जरी तिलकस्य वा ॥ २९ ॥

अथवा सैर्य्यकान्मूल सक्षौद्र तन्दुलाम्बुना ॥
कटुकालाबुविन्यस्त पीत वाम्बु निशोषितम् ॥ ३० ॥
सिन्दुवारस्य मूलानि विडालास्थिविषं नतम् ॥
जलपिष्टो गदो हन्ति नस्याद्यैराखुज विषम् ॥ ३१ ॥
सशोष मूषिकविष प्रकुप्यत्यभ्रदर्शने ॥
यथायथं वा कालेषु दोषाणा वृद्धिहेतुषु ॥ ३२ ॥
तत्र सर्वे यथावस्थ प्रयोज्या. स्युरुपक्रमाः ॥
यथास्वं ये च निर्दिष्टास्तथा दूषीविषापहाः ॥ ३३ ॥
दंश ह्यलर्कदष्टस्य दग्धमुष्णेन सर्पिषा ॥
प्रदिह्यादगदैस्तैस्तै पुराणं च घृतं पिबेत् ॥ ३४ ॥
अर्कक्षीरयुतं चास्य योज्यमाशु विरेचनम् ॥
अकोलोत्तरमूलाम्बु त्रिपल सहवि. फलम् ॥ ३५ ॥
पिबेत्सधत्तूरफला श्वेता वापि पुनर्नवाम् ॥
ऐकध्यं पललं तैल रूपिकाया पयो गुड. ॥ ३६ ॥
भिनत्ति विषमालर्क घनवृन्दमिवानिलः ॥
समन्त्रं सौषधीरत्नं स्नपन च प्रयोजयेत् ॥ ३७ ॥
चतुष्पाद्भिर्द्विपाद्भिर्वा नखदन्तपरिक्षतम् ॥
शूयते पच्यते रागज्वरस्रावरुजान्वितम् ॥ ३८ ॥
सोमवल्कोऽश्वकर्णश्च गोजिह्वा हसपादिका ॥
रजन्यौ गैरिक लेपो नखदन्तविषापहाः ॥ ३९ ॥

इत्यष्टाङ्गहृदयसंहितायामुत्तरस्थाने अष्टत्रिंशोऽध्याय , विषतन्त्र च समाप्तम् ॥ ३८ ॥

# एकोनचत्वारिंशोऽध्यायः ।



अथातो रसायनाध्यायं व्याख्यास्यामः ।

दीर्घमायुः स्मृतिं मेधामारोग्यं तरुणं वयः ॥
प्रभावर्णस्वरौदार्यं देहेन्द्रियबलोदयम् ॥ १ ॥
वाक्सिद्धिं वृषतां कान्तिमवाप्नोति रसायनात् ॥
लाभोपायो हि शस्तानां रसादीनां रसायनम् ॥ २ ॥
पूर्वे वयसि मध्ये वा तत्प्रयोज्यं जितात्मनः ॥
स्निग्धस्य स्रुतरक्तस्य विशुद्धस्य च सर्वथा ॥ ३ ॥
अविशुद्धे शरीरे हि युक्तो रासायनो विधिः ॥
वाजीकरो वा मलिने वस्त्रे रंग इवाफलः ॥ ४ ॥
रसायनानां द्विविधं प्रयोगमृषयो विदुः ॥
कुटीप्रावेशिकं मुख्यं वातातपिकमन्यथा ॥ ५ ॥
निर्वाते निर्भये हर्म्ये प्राप्योपकरणे पुरे ॥
दिश्युदीच्यां शुभे देशे त्रिगर्भां सूक्ष्मलोचनाम् ॥ ६ ॥
धूमातपरजोव्यालस्त्रीमूर्खाद्यविलंघिताम् ॥
सज्जवैद्योपकरणां सुमृष्टां कारयेत्कुटीम् ॥ ७ ॥
अथ पुण्येऽह्नि सम्पूज्य पूज्यास्तां प्रविशेच्छुचिः ॥
तत्र संशोधनैः शुद्धः सुखी जातबलः पुनः ॥ ८ ॥
ब्रह्मचारी धृतियुतः श्रद्दधानो जितेन्द्रियः ॥
दानशीलदयासत्यव्रतधर्मपरायणः ॥ ९ ॥

देवतानुस्मृतौ युक्तो युक्तस्वप्नप्रजागरः ॥
प्रियौषध. पेशलवाक्प्रारभेत रसायनम् ॥ १० ॥
हरीतकीमामलक सैन्धव नागर वचाम् ॥
हरिद्रा पिप्पली वेल्लं गुड चोष्णाम्बुना पिबेत् ॥ ११ ॥
स्निग्ध. स्विन्नो नर. पूर्वं तेन साधु विरिच्यते ॥
तत शुद्धशरीराय कृतससर्जनाय च ॥ १२ ॥
त्रिरात्र वा पञ्चरात्रं सप्ताहं वा घृतान्वितम् ॥
दद्याद्यावकमाशुद्धेः पुराणशकृतोऽथवा ॥ १३ ॥
इत्थ सस्कृतकोष्ठस्य रसायनमुपाहरेत् ॥
यस्य यद्योगिकं पश्येत्सर्वमालोच्य सात्म्यवित् ॥ १४ ॥
पथ्यासहस्रं त्रिगुणधात्रीफलसमन्वितम् ॥
पञ्चाना पञ्चमूलाना सार्द्धं पलशतद्वयम् ॥ १५ ॥
जले दशगुणे पक्त्वा दशभागस्थिते रसे ॥
आपोथ्य कृत्वा व्यस्थीनि विजयामलकान्यथ ॥ १६ ॥
विनीय तस्मिन्निर्यूहे योजयेत्कुडवाशकम् ॥
त्वगेलामुस्तरजनीपिप्पल्यगुरुचन्दनम् ॥ १७ ॥
मण्डूकपर्णीकनकशंखपुष्पीवचाप्लवम् ॥
यष्ट्याह्वय विडङ्ग च चूर्णितं तुलयाधिकम् ॥ १८ ॥
सितोपलार्द्धभार च पात्राणि त्रीणि सर्पिष. ॥
द्वे च तैलात्पचेत्सर्व तदश्नो लेहता गतम् ॥ १९ ॥
अवतीर्णं हिमं युञ्ज्याद्विंशैः क्षौद्रशतैस्त्रिभिः ॥
तत खजेन मथित निदध्याद्घृतभाजने ॥ २० ॥

यानोपरुन्ध्यादाहारमेकं मात्रास्य सा स्मृता ॥
षष्टिकः पयसा चात्र जीर्णे भोजनमिष्यते ॥ २१ ॥
वैखानसा वालखिल्यास्तथा चान्ये तपोधनाः ॥
ब्रह्मणा विहितं धन्यमिदं प्राश्य रसायनम् ॥ २२ ॥
तन्द्राश्रमक्लमवलीपलितामयवर्जिताः ॥
मेधास्मृतिबलोपेता वभूवुरमितायुषः ॥ २३ ॥
अभयामलकसहस्रं निरामयं पिप्पलीसहस्रयुतम् ॥
तरुणपलाशक्षारद्रवीकृतं स्थापयेद्भाण्डे ॥ २४ ॥
उपयुक्ते च क्षारे छायासंशुष्कचूर्णितं योज्यम् ॥
पादांशेन सितायाश्चतुर्गुणाभ्यां मधुघृताभ्याम् ॥२५॥
तद्घृतकुम्भे भूमौ निधाय षण्मासस्थमुद्धृत्य ॥
प्राह्णे प्राश्य यथानलमुचिताहारो भवेत्सततम् ॥ २६ ॥
इत्युपयुज्याशेषंवर्षशतमनामयो जरारहितः ॥
जीवतिबलपुष्टिवपुःस्मृतिमेधाद्यन्वितो विशेषेण ॥२७॥
नीरुजार्द्रपलाशस्य छिन्ने शिरसि तत्क्षतम् ॥
अन्तर्द्विहस्तं गम्भीरं पूर्य्यमामलकैर्नवैः ॥ २८ ॥
आमूलं वेष्टितं दर्भैः पद्मिनीपङ्कलेपितम् ॥
आदीप्य गोमयैर्वन्यैर्निर्वाते स्वेदयेत्ततः ॥ २९ ॥
स्विन्नानितान्यामलकानितृप्त्याखादेन्नरःक्षौद्रघृतान्वितानि॥
क्षीरं सृतं चानुपिबेत्प्रकामंतेनैव वर्तेत च मासमेकम् ॥ ३० ॥

वर्ज्यानि वर्ज्यानि च तत्र यत्नाः
स्स्पृश्यं च शीताम्बु न पाणिनापि ॥
एकादशाहेऽस्य ततो व्यतीते
पतन्ति केशा दशना नखाश्च ॥ ३१ ॥
अथाल्पकैरेव दिनैः सुरूपः स्त्रीष्वक्षयः कुञ्जरतुल्यवीर्यः ॥
विशिष्टमेधाबलबुद्धिसत्त्वो भवत्यसौ वर्षसहस्रजीवी ॥३२॥
दशमूलबलामुस्तजीवकर्षभकोत्पलम् ॥
पर्णिन्यौ पिप्पली शृङ्गी मेदातामलकी त्रुटिः ॥ ३३ ॥
जीवन्ती जोङ्गकं द्राक्षा पौष्करं चन्दनं शठी ॥
पुनर्नवर्द्धिकाकोली काकनासामृताह्वया ॥ ३४ ॥
विदारी वृषमूलं च तदेकध्यं पलोन्मितम् ॥
जलद्रोणे पचेत्पञ्चधात्रीफलशतानि च ॥ ३५ ॥
पादशेषं रसं तस्माद्व्यस्थीन्यामलकानि च ॥
गृहीत्वा भर्जयेत्तैलघृताद्द्वादशभिः पलैः ॥ ३६ ॥
मत्स्याण्डिकातुलार्धेन युक्तं तल्लेहवत्पचेत् ॥
स्नेहार्द्धं मधु सिद्धे तु तवक्षीर्य्याश्चतुष्पलम् ॥ ३७ ॥
पिप्पल्या द्विपलं दद्याच्चतुर्जातं कणार्द्धितम् ॥
अतोऽवलेहयेन्मात्रां कुटीस्थः पथ्यभोजनः ॥ ३८ ॥
इत्येष च्यवनप्राशो यत्प्राश्य च्यवनो मुनिः ॥
जराजर्जरितोऽप्यासीन्नारीनयननन्दनः ॥ ३९ ॥
कासं श्वासं ज्वरं शोषं हृद्रोगं वातशोणितम् ॥
मूत्रशुक्राश्रयान्दोषान्वैस्वर्यं च व्यपोहति ॥
बालवृद्धक्षतक्षीणकृशानामङ्गवर्द्धनः ॥ ४० ॥

मेधा स्मृतिं कान्तिमनामयत्वमायुःप्रकर्षं पवनानुलोम्यम् ॥
स्त्रीषु प्रहर्षं बलमिन्द्रियाणामग्नेश्च कुर्य्याद्विधिनोपयुक्तः॥४१॥
मधुकेन कवक्षीर्या पिप्पल्या सिन्धुजन्मना ॥
पृथग्लोहैःसुवर्णेन वचया मधुसर्पिषा ॥ ४२ ॥
सितया वा समायुक्ता समायुक्ता रसायनम् ॥
त्रिफला सर्वरोगघ्नी मेधायुःस्मृतिवुद्धिदा ॥ ४३ ॥
मण्डूकपर्ण्याःस्वरसं यथाग्निक्षीरेण यष्टीमधुकस्य चूर्णम्॥
रसं गुडूच्याः सहमूलपुष्प्याःकल्कंप्रयुञ्जीत च शंखपुष्प्याः४४
आयुः प्रदान्यामयनाशनानि वलाग्निवर्णस्वरवर्द्धनानि ॥
मेध्यानिचैतानि रसायनानि मेध्या विशेषेण तु शंखपुष्पी४५
नलदं कटुरोहिणी पयस्या मधुकं चन्दनसारिवोग्रगन्धाः ॥
त्रिफलाकटुकत्रयं हरिद्रे सपटोलं लवणं च तैः सुपिष्टैः॥४६॥
त्रिगुणेन रसेन शंखपुष्प्याः सपयस्कं घृतनल्वणं विपक्वम्॥
उपयुज्यभवेज्जडोऽपिवाग्मीश्रुतधारी प्रतिभानवानरोगः ४७
पेष्यैर्मृणालविसकेसरपत्रवीजैः
सिद्धं सहेमशकलं पयसा च सर्पिः ॥
पंचारविन्दमिति तत्प्रथितं पृथिव्यां
प्रभ्रष्टपौरुषवलप्रतिभैर्निषेव्यम् ॥ ४८ ॥
यन्नालकन्ददलकेसरवद्विपक्वं ।
नीलोत्पलस्य तदपि प्रथितं द्वितीयम् ॥
सर्पिश्चतुः कुवलयं सहिरण्यपत्रं ।
मेध्यं गवामपि भवेत्किमु मानुषाणाम् ॥ ४९ ॥

ब्राह्मीवचासैन्धवशखपुष्पीमत्स्याक्षकब्रह्मसुवर्चलेन्ध्य ॥
वैदेहिका च त्रियवा'पृथक्स्युर्यवौसुवर्णस्यतिलोविपस्य॥५०॥
सर्पिषश्च पलमेकत एतद्योजयेत्परिणते च घृताढग्म् ॥
भोजनं समधु वत्सरमेवं शीलयन्नधिकधीस्मृतिमेध ५१
अतिक्रान्तजराव्याधितन्द्रालस्यश्रमक्लम ॥
जीवत्यशब्दतं पूर्णं श्रीतेजःकान्तिदीप्तिमान् ॥ ५२ ॥
विशेषत. कुष्ठकिलासगुल्मविषज्वरोन्मादगरोदराणि॥
अथर्वमन्त्रादिकृताश्चकृत्या.शाम्यन्त्यनेनातिवलाश्चवाता ॥
शरन्मुखे नागवला पुष्ययोगे समुद्धरेत् ॥
अक्षमात्र ततो मूलाच्चूर्णितात्पयसा पिवेत् ॥ ५४॥
लिह्यान्मधुघृताभ्या वा क्षीरवृत्तिरनन्नभुक् ॥
एव वर्षप्रयोगण जीवेद्वर्षशतं वली ॥ ५५ ॥
फलोन्मुखो गोक्षुरक.समूलच्छायाविशुष्क'सुविचूर्णिताग:॥
सुभावित'स्वेनरसेनतस्मान्मात्रापराप्रासृतिकीपिवेच्च:॥५६॥
क्षीरेण तेनैव च शालिमश्नञ्जीर्णे भवेत्सद्भितुलोपयोगात् ॥
शक्त सुरूप'सुभग.शतायु कामीककुह्मानिवगोकुलस्थ. ५७॥
वाराही कन्दमार्द्राद्र क्षीरेण क्षीरप. पिवेत् ॥
मास निरन्नो मास च क्षीरान्नादी जरा जयेत् ॥ ५८ ॥
तत्कन्दश्लक्ष्णचूर्णं वा स्वरसेन सुभावितम् ॥
घृतक्षौद्रप्लुतं लिह्यात्तत्पक्व वा घृत पिवेत् ॥ ५९ ॥

तद्वद्विदार्य्यतिबलाबलामधुकवायसीः ॥
श्रेयसी श्रेयसी युक्तापथ्याधात्रीस्थिरास्मृताः ॥ ६० ।
मण्डूकीशंखकुसुमावाजिगंधाशतावरीः ॥
उपयुञ्जीत मेधावी वयःस्थैर्य्यबलप्रदाः ॥ ६१ ॥
यथास्वं चित्रकः पुष्पैर्ज्ञेयः पीतसितासितैः ।
यथोत्तरं सगुणवान्विधिना च रसायनम् ॥ ६२ ॥
छायाशुष्कं ततो मूलं मासं चूर्णीकृतं लिहन् ॥
सर्पिषा मधुसर्पिर्भ्यां पिबन्वा पयसा यतिः ॥ ६३ ॥
अम्भसा वा हितान्नाशी शतं जीवति नीरुजः ॥
मेधावी बलवान्कान्तो वपुष्मान्दीप्तपावकः ॥ ६४ ॥
तैलेन लीढो मासेन वातान्हन्ति सुदुस्तरान् ॥
मूत्रेण श्वित्रकुष्ठानि पीतस्तक्रेण पायुजान् ॥ ६५ ॥
भल्लातकानि पुष्टानि धान्यराशौ निधापयेत् ॥
ग्रीष्मे संगृह्य हेमन्ते स्वादुस्निग्धहिमैर्वपुः ॥ ६६ ॥
संस्कृत्य तान्यष्टगुणे सलिलेऽष्टौ विपाचयेत् ॥
अष्टांशशिष्टं तत्क्वाथं सक्षीरं शीतलं पिबेत् ॥ ६७ ॥
वर्द्धयेत्प्रत्यहं चानु तत्रैकैकमरुष्करम् ॥
सप्तरात्रत्रयं यावत्त्रीणि त्रीणि ततः परम् ॥ ६८ ॥
आचत्वारिंशतस्तानि ह्रासयेद्वृद्धिवत्ततः ॥
सहस्रमुपयुञ्जीत सप्ताहैरिति सप्तभिः ॥ ६९ ॥

यन्त्रितात्मा घृतक्षीरशालिषष्टिकभोजनः॥
तद्वत्त्रिगुणितं काल प्रयोगान्तेऽपि चाचरेत्॥ ७० ॥
आशिषो लभते पूर्वा वह्नेर्दीप्ति विशेषत. ॥
प्रमेहकृमिकुष्ठार्शो मेदोदोषविवर्जित. ॥ ७१ ॥
पिष्टस्वेदनमरुजैः पूर्णं भल्लातकैर्विजर्जरितैः॥
भूमिनिखाते कुम्भे प्रतिष्ठित कृष्णमृल्लिप्तम् ॥ ७२ ॥
परिवारित समन्तात्पचेत्ततो गोमयाग्निना मृदुना ॥
तत्स्वरसो यश्च्यवते गृह्णीयात्त दिनेऽन्यस्मिन्॥ ७३ ॥
असुमुपयुज्य स्वरस मध्वष्टमभागिकं द्विगुणसर्पि. ॥
पूर्वविधियन्त्रितात्मा प्राप्नोति गुणान्स तानेव ॥ ७४ ॥
पुष्टानि पाकेन परिच्युतानि भल्लातकान्याढकसम्मितानि॥
घृष्टेष्टिकाचूर्णकणैर्जलेन प्रक्षाल्य सशोष्य च मारुतेन॥७५॥
जर्जराणि विपचेज्जलकुम्भे पादशेषधृतगालितशीते॥
तद्रस पुनरपि श्रपयेत क्षीरकुम्भसहित चरणस्थे॥७६॥
सर्पि पक्वं तन तुल्यप्रमाणंयुञ्ज्यात्स्वेच्छ शर्कराया रजोभिः॥
एकीभूततरखजक्षोभणेनस्थाप्य धान्ये सप्तरात्रसुगुप्तम्॥७७॥

तममृतरसपाक य॰ प्रगे प्राशमश्न-
न्ननुपिबति यथेष्टं वारिदुग्ध रस वा ॥
स्मृतिमतिबलमेधास्सत्त्वसारैरुपेत
कनकनिचयगौर.सोऽश्नुते दीर्घमायुः ॥ ७८ ॥

द्रोणेऽम्भसो व्रणकृतां त्रिशताद्विपक्का-
त्क्वाथाढके पलसमैस्तिलतैलपात्रम् ॥
तिक्ताविषाद्वयवरागिरिजन्मताक्ष्यैः
सिद्धं परं निखिलकुष्ठनिबर्हणाय ॥ ७९ ॥
सहामलकशुक्तिभिर्दधिसरेण तैलेन वा
गुडेन पयसा घृतेन यवसक्तुभिर्वा सह ॥
तिलेन सह माक्षिकेण पललेन सूपेन वा
वपुष्करमरुष्करं परमेध्यमायुष्करम् ॥ ८० ॥
भल्लातकानि तीक्ष्णानि पाकीन्यग्निसमानि च ॥
भवन्त्यमृतकल्पानि प्रयुक्तानि यथाविधि ॥ ८१ ॥
कफजो न स रोगोऽस्ति न विबन्धोऽस्ति कश्चन ॥
यं न भल्लातकं हन्याच्छीघ्रमग्निबलप्रदम् ॥ ८२ ॥
वातातपविधानेऽपि विशेषेण विवर्जयेत् ॥
कुलत्थदधि शुक्तानि तैलाभ्यङ्गाग्निसेवनम् ॥ ८३ ॥
वृक्षास्तुवरका नाम पश्चिमार्णवतीरजाः ॥
वीचीतरङ्गविक्षोभमारुतोद्धूतपल्लवाः ॥ ८४ ॥
तेभ्यः फलान्याददीत सुपक्कान्यम्बुदागमे ॥
मज्जां फलेभ्यश्चादाय शोषयित्वाऽवचूर्ण्य च ॥ ८५ ॥
तिलवत्पीडयेद्द्रोण्यां क्वाथयेद्वा कुसुम्भवत् ॥
तत्तैलं सम्भृतं भूयः पचेदासलिलक्षयात् ॥ ८६ ॥

अवतार्य्य करोषे च पक्षमात्रं निधापयेत् ॥
स्निग्धस्विन्नो हृतमल पक्षादुद्धृत्य तत्तत· ॥ ८७ ॥
चतुर्थभक्तान्तरित· प्रात· पाणितल पिबेत् ॥
मन्त्रेणानेन पूतस्य तैलस्य दिवसे शुभे ॥ ८८ ॥
मज्जासारमहावीर्य्य सर्वान्धातून्विशोधय ॥
शंखचक्रगदापाणिस्त्वामाज्ञापयतेऽच्युत· ॥ ८९ ॥
तेनास्योर्ध्वमधस्ताच्च दोषा यान्त्यसकृत्ततः ॥
साय सस्नेहलवणा यवागूं शीतला पिबेत् ॥ ९० ॥
पञ्चाहानि पिबेत्तैलमित्थं वर्ज्यानि वर्जयेत् ॥
पक्षं मुद्गरसान्नाशी सर्वकुष्ठैर्विमुच्यते ॥ ९१ ॥
तदेव खदिरक्वाथे त्रिगुणे साधु साधितम् ॥
निहित पूर्ववत्पक्ष पिबेन्मास सुयन्त्रित ॥ ९२ ॥
तेनाभ्यक्तशरीरश्च कुर्वन्नाहारमीरितम् ॥
अनेनाशु प्रयोगेण साधयेत्कुष्ठिन नरम् ॥ ९३ ॥
सर्पिर्मधुयुतं पीत तदेव खदिराद्विना ॥
पक्षं मासरसाहारं करोति द्विशतायुषम् ॥ ९४ ॥
तदेव नस्ये पञ्चाशद्दिवसानुपयोजितम् ॥
वपुष्मन्तं श्रुतधर करोति त्रिशतायुषम् ॥ ९५ ॥
पञ्चाष्टौ सप्त दश वा पिप्पलीर्मधुसर्पिषा ॥
रसायनगुणान्वेषी समामेका प्रयोजयेत् ॥ ९६ ॥

तिस्रस्तिस्रस्तु पूर्वाह्णे भुक्त्वाग्रे भोजनस्य च ॥
पिप्पल्यः किंशुकक्षारभाविता घृतभर्जिताः ॥ ९७ ॥
प्रयोज्या मधुसंमिश्रा रसायनगुणैषिणा ॥
क्रमवृद्ध्या दशाहानि दश पैप्पलिकं दिनम् ॥ ९८ ॥
वर्द्धयेत्पयसा सार्धं तथैवापनयेत्पुनः ॥
जीर्णौषधश्च भुञ्जीत षष्टिकं क्षीरसर्पिषा ॥ ९९ ॥
पिप्पलीनां सहस्रस्य प्रयोगोऽयं रसायनम् ॥
पिष्टास्ता बलिभिः पेयाः सृता मध्यबलैर्नरैः ॥ १०० ॥
तद्वच्च छागदुग्धेन द्वे सहस्रे प्रयोजयेत् ॥
एभिः प्रयोगैः पिप्पल्यः कासश्वासगलग्रहान् ॥ १०१ ॥
यक्ष्मामेहग्रहण्यर्शःपाण्डुत्वविषमज्वरान् ॥
घ्नंति शोफं वमिं हिध्मां प्लीहानं वातशोणितम् ॥१०२॥
बिल्वार्धमात्रेणचपिप्पलीनांपात्रंप्रलिम्पेदयसो निशायाम् ॥
प्रातःपिबेत्तत्सलिलाञ्जलिभ्यांजर्ययथेष्टाशनपानचेष्टः॥१०३॥
शुण्ठीविडङ्गत्रिफलागुडूचीयष्टीहरिद्रातिबलाबलाश्च ॥
मुस्ता सुराह्वा गुरुचित्रकाश्च सौगन्धिकं पङ्कजमुत्पलानि॥४॥
धवाश्वकर्णासनबालपत्रसारास्तथा पिप्पलिवत्प्रयोज्याः ॥
लोहोपलिप्ताःपृथगेवजीवेत्समाःशतंव्याधिजराविमुक्तः ॥५॥
क्षीराञ्जलिभ्यां च रसायनानि युक्तान्यमून्यायसलेपनानि ॥
कुर्वन्ति पूर्वोक्तगुणप्रकर्षमायुःप्रकर्षं द्विगुणं ततश्च ॥ १०६ ॥

असनखदिरयूषैर्भाविता सोमराजी
मधुघृतशिखिपथ्यालोहचूर्णैरुपेताम् ॥
शरदमवलिहानः पारिणामान्विकारा-
स्त्यजति मितहिताशी तद्वदाहारजातान् ॥ ७ ॥
तीव्रेण कुष्ठेन परीतमूर्तिर्यः सोमराजी नियमेन खादेत् ॥
संवत्सरं कृष्णतिलद्वितीयाससोमराजी वपुषाऽतिशेते ॥८॥
ये सोमराज्या वितुषीकृतायाश्चूर्णैरुपेतात्पयसः सुजातात् ॥
उद्धृत्य सार मधुना लिहन्ति तक्र तदेवानुपिबन्ति चान्ते॥९॥
कुष्ठिन कुथ्यमानाङ्गास्ते जाताङ्गुलिनासिका. ॥
भान्ति वृक्षा इव पुन प्ररूढनवपल्लवा' ॥ ११० ॥
शीतवातहिमदग्धतनूना स्तब्धभुग्नकुटिलव्यथितास्थ्नाम् ॥
भेषजस्य पवनोपहताना वक्ष्यते विधिरतो लशुनस्य ॥ ११ ॥
राहोरमृतचौर्येण लूनाद्ये पतिता गलात् ॥
अमृतस्य कणा भूमौ ते रसोनत्वमागता ॥ १२ ॥
द्विजा नाश्नति तमतो दैत्यदेहसमुद्भवम् ॥
साक्षादमृतसम्भूते ग्रामणी. स रसायनम् ॥ १३ ॥
शीलयेल्लशुन शीते वसन्तेऽपि कफोल्बण. ॥
घनोदयेऽपि वातार्त्त सदा वा ग्रीष्मलीलया ॥ १४ ॥
स्निग्धशुद्धतनु' शीतमधुरोपस्कृताशय' ॥
तदुत्तसावतसाभ्या चर्च्चितानुचराजिरः ॥ १५ ॥

तस्य कन्दान्वसन्तान्ते हिमवच्छकदेशजान् ॥
अपनीतत्वचोरात्रौतीमयेन्मदिरादिभिः ॥ १६ ॥
तत्कल्कं स्वरसं प्रातः शुचितांतवपीडितम् ॥
खदिरायाः सुदृढायास्त्रिभागेन समन्वितम् ॥ १७ ॥
मद्यस्यान्यस्य तैलस्य मस्तुनः कांजिकस्य वा ॥
तत्काल एव वा युक्तं युक्तमालोच्यमात्रया ॥ १८ ॥
तैलसर्पिर्वसामज्जक्षीरमांसरसैःपृथक् ॥
क्वाथेन वा यथाव्याधि रसं केवलमेव वा ॥ १९ ॥
पिबेद्गंडूषमात्रं प्राक्कंठनाडीविशुद्धये ॥
प्रततं स्वेदनं चानु वेदनायां प्रशस्यते ॥ १२० ॥
शीतांबुसेकः सहसा वमिमूर्च्छाययोर्मुखे ॥
शेषं पिबेत्कलमापाये स्थिरतां गत ओजसि ॥ २१ ॥
विदाहपरिहाराय परं शीतानुलेपनः ॥
धारयेत्सांबुकणिका मुक्ताः कर्पूरमालिकाः ॥ २२ ॥
कुडवोऽस्य परा मात्रा तदर्द्धं केवलस्य तु ॥
पलं पिष्टस्य तन्मज्ञः सभक्तं प्राक्च शीलयेत् ॥ २३ ॥
जीर्णशाल्योदनं जीर्णे शंखकुन्देंदुपांडुरम् ॥
भुंजीत यूषैः पयसा रसैर्वा धन्वचारिणाम् ॥ २४ ॥
मद्यमेकं पिबेत्तत्र तत्प्रबंधे जलान्वितम् ॥
अमद्यपस्त्वारनालं फलाम्बुपारीसिद्धिकाम् ॥ २५ ॥

तत्कल्कं वा समघृतं घृतपात्रे खजाहतम् ॥
स्थितं दशाहादश्नीयात्तद्वद्वा वसया समम् ॥ २६ ॥
विरूचुकप्राज्यरसोनगर्भान्सशूल्यमांसान्विविधोपदंशान् ॥
विमर्दकान्वाघृतशुक्तयुक्तान्प्रकाममद्याल्लघुतुल्यमश्नन् २७॥
पित्तरक्तविनिर्मुक्तसमस्तावरणावृते ॥
शुद्धे वा विद्यते वायौ न द्रव्यं लशुनात्परम् ॥ २८ ॥
प्रियाम्बुगुडदुग्धस्य मांसमद्याम्लविद्विषः ॥
अतितिक्ष्णोरजीर्णं च रसोनो व्यापयेद्ध्रुवम् ॥ २९ ॥
पित्तकोपभयादन्ते युंज्यान्मृदु विरेचनम् ॥
रसायनगुणानेवं परिपूर्णान्समश्नुते ॥ १३० ॥
ग्रीष्मेऽर्कतप्ता गिरयो जतुतुल्यं वमन्ति यत् ॥
हेमादिषड्धातुरसं प्रोच्यते तच्छिलाजतु ॥ ३१ ॥
सर्वं च तिक्तकटुकं नात्युष्णं कटुपाकतः ॥
छेदनं च विशेषेण लोहं तत्र प्रशस्यते ॥ ३२ ॥
गोमूत्रगंधि कृष्णं गुग्गुल्वाभं विशर्करं मृत्स्नम् ॥
स्निग्धमनम्लकषायं मृदुगुरुचशिलाजतु श्रेष्ठम् ॥ ३३ ॥
व्याधिव्याधितसात्म्यं समनुस्मरन्भावयेदयःपात्रे ॥
प्राक्केवलजलधौतं शुष्कं क्वाथैस्ततो भाव्यम् ॥ ३४ ॥
समगिरिजमष्टगुणिते निष्क्वाथ्य भावनौषधं तोये ॥
तन्निर्यूहेऽष्टांशे पूतोष्णे प्रक्षिपेद्गिरिजम् ॥ ३५ ॥

तत्समरसता यातं संशुष्कं प्रक्षिपेद्रसे भूयः ॥
स्वैः स्वैरेवं क्वाथैर्भाव्यं वारान्भवेत्सप्त ॥ ३६ ॥
अथ स्निग्धस्य शुद्धस्य घृतं तिक्तकसाधितम् ॥
त्र्यहं युंजीत गिरिजमेकैकेन तथा त्र्यहम् ॥ ३७ ॥
फलत्रयस्य यूषेण पटोल्यामधुकस्य च ॥
योगयोग्यं ततस्तस्य कालापेक्षं प्रयोजयेत् ॥ ३८ ॥
शिलाजमेवं देहस्य भवत्यत्युपकारकम् ॥
गुणान्समग्रान्कुरुते सहसा व्यापदं न च ॥ ३९ ॥
एकत्रिसप्तसप्ताहं कर्षमर्द्धपलं पलम् ॥
हीनमध्योत्तमो योगः शिलाज्यस्य क्रमान्मतः ॥ १४० ॥
संस्कृतं संस्कृते देहे प्रयुक्तं गिरिजाह्वयम् ॥
युक्तं व्यस्तैः समस्तैर्वा ताम्रायोरूप्यहेमभिः ॥ ४१ ॥
क्षीरेणालोडितं कुर्य्याच्छीघ्रं रासायनं फलम् ॥
कुलत्थां काकमाचीं च कपोतांश्च सदा त्यजेत् ॥ ४२ ॥
न सोऽस्ति रोगोभुवि साध्यरूपोजत्वश्मजं यं न जयेत्प्रसह्य॥
तत्कालयोगैर्विधिवत्प्रयुक्तंस्वस्थस्यचोजाँविपुलां दधाति ४३
कुटीप्रवेशः क्षणिनां परिच्छदवतां हितः ॥
अतोऽन्यथा तु ये तेषां सूर्यमारुतिको विधिः ॥ ४४ ॥
वातातपसहा योगा वक्ष्यंतेऽतो विशेषतः ॥
सुखोपचारा भ्रंशेऽपि ये न देहस्य बाधकाः ॥ ४५ ॥

शीतोदकं पयः क्षौद्रं घृतमेकैकशो द्विशः ॥
त्रिशः समस्तमथवा प्राक्पीतं स्थापयेद्वयः ॥ ४६ ॥
गुडेन मधुना शुण्ठ्या कृष्णया लवणेन वा ॥
द्वेद्वे खादन्सदा पथ्ये जीवेद्वर्षशतं सुखी ॥ ४७ ॥
हरीतकी सर्पिंषि संप्रताप्य समश्नतस्तत्पिबतो घृतं च ॥
भवेच्चिरस्थायि बलं शरीरे सकृत्कृतं साधु यथा कृतज्ञे॥४८॥
धात्रीरसक्षौद्रसिताघृतानि हिताशनानां लिहतां नराणाम्॥
प्रणाशमायातिजराविकाराग्रथाविशालाइवदुर्गृहीताः ॥४९॥
धात्रीकृमिघ्नासनसारचूर्णं सतैलसर्पिर्मधुलोहरेणु ॥
निषेवमाणस्यभवेन्नरस्यतारुण्यलावण्यमविप्रणष्टम् १५०॥
लोहं रजो वेल्लभवं च सर्पिः क्षौद्रद्रुतं स्थापितमब्दमात्रम्॥
सामुद्रकेबीजकसारकल्कसेलिहन्वलीजीवतिकृष्णकेशः॥५१॥
विडंगभल्लातकनागराणि येऽश्नन्ति सर्पिर्मधुसंयुतानि ॥
जरानदीं रोगतरंगिणीं ते लावण्ययुक्ताः पुरुषास्तरन्ति॥५२॥
खदिरासनयूषभावितायास्त्रिफलाया घृतमाक्षिकप्लुतायाः ॥
नियमेननरानिषेवितारोयदिजीवत्यरुजः किमत्रचित्रम् ५३॥
बीजकस्य रसमंगुलिहार्यं शर्करामधुघृतं त्रिफलां च ॥
शीलयत्सु जरता पुरुषेषु स्वागतापि विनिवर्तत एव ॥ ५४ ॥
पुनर्नवस्यार्द्धपलं नवस्य पिष्टं पिबेद्यः पयसार्द्धमासम् ॥
मासद्वयंतत्त्रिगुणंसमांवा जीर्णोऽपिभूयःसपुनर्नवःस्यात् ५५॥

मूर्वाब्दहृत्यंशुमती बलानामुशीरपाठासनसारिवाणाम् ॥
कालानुसार्यां गुरुचंदनानां वदंति पौनर्नवमेव कल्पम् ॥५६॥
शतावरीकल्ककषायसिद्धं ये सर्पिरश्नंति सिताद्वितीयम् ॥
ताञ्जीवितध्वानमभिप्रपन्नान्नविप्रलुंपंति विकारचौराः॥५७॥
पीताश्वगंधापयसार्द्धमासं घृतेन तैलेन सुखांबुना वा ॥
कृशस्य पुष्टिं वपुषोविधत्तेबालस्यसस्यस्य यथासुवृष्टिः॥५८॥
दिने दिने कृष्णतिलप्रकुंचं समश्नुतां शीतजलानुपानम् ॥
पोषः शरीरस्य भवत्यनल्पो दृढीभवंत्यामरणाच्च दंताः॥५९॥
चूर्णं श्वदंष्ट्रामलकामृतानां लिहन्ससर्पिर्मधुभागमिश्रम् ॥
वृषःस्थिरःशांतविकारदुःखःसमाःशतंजीवतिकृष्णकेशः॥६०
सार्द्धं तिलैरामलकानि कृष्णैरक्षाणि संक्षुद्य हरीतकीर्वा ॥
येऽद्युर्मयूरा इव ते मनुष्या रम्यं परीणाममवाप्नुवंति॥६१॥
शिलाजतुक्षौद्रविडंगसर्पिर्लोहाभयापारदताप्यभक्षः ॥
आपूर्यते दुर्बलदेहधातुस्त्रिपंचरात्रेण यथा शशाकः॥ ६२ ॥
ये मासमेकं स्वरसं पिबंति दिने दिने भृंगरजःसमुत्थम् ॥
क्षीराशिनस्ते बलवीर्ययुक्ताःसमाःशतंजीवितमाप्नुवंति ६३॥
मासं वचामप्युपसेवमानः क्षीरेण तैलेन घृतेन वाऽपि ॥
भवंति रक्षोभिरधृष्यरूपामेधाविनोनिर्मलमृष्टवाक्याः ॥६४॥
मंडूकपर्णीमपि भक्षयंतो भृष्टां घृते मासमनन्नभक्ष्याः ॥
जीवंतिकालंविपुलंप्रगल्भास्तारुण्यलावण्यगुणोदयस्थाः ६५

लांगलीत्रिफलालोहपलपञ्चांगतीकृतम् ॥
मार्कवस्वरसे पष्ट्या गुटिकाना शतत्रयम् ॥ ६६ ॥
छायाविशुष्कं गुटिकार्द्धमद्यात्पूर्वं समस्तामपि ता क्रमेण ॥
भजेद्विरिक्तः क्रमशश्च मंड पेया विलेपी रसकौदनं च॥६७॥
सर्पिःस्निग्धमासमेकयतात्मा मासादूर्ध्वं सर्वथास्नैर गुत्ति ॥
वर्ज्यं यत्नात्सर्वकाल त्वजीर्णं वर्षेणैव योगमेवोपयुञ्ज्यात् ६८
भवति विगतरोगो योऽप्यसाध्यामयार्त्त
प्रबलपुरुषकार शोभते योऽपि वृद्ध ॥
उपचितपृथुगात्रश्रोत्रनेत्रादियुक्त-
स्तरुणइव समाना पञ्च जीवेच्छतानि ॥ ६९ ॥
गायत्रीशिखिशिशपासनशिवावेल्लाक्षकारुष्करा-
न्पिष्ट्वाष्टादशसंगुणेभसिधृतान्खडे, सहायोमयै ॥
पात्रेलोहमयेऽन्यहं रविकरैरालोडयन्पाचयेदग्नौ
चानुमृदौ सलोहशकल पादस्थिततत्पचेत् ॥ १७० ॥
पूतस्याश क्षीरतोशस्तथाशो
भार्गान्निर्यासाद्द्वौ वरायास्त्रयोशा. ॥
अशाश्चत्वारश्चेह हैयगवीना
देकीकृत्यैतत्साधयेत्कृष्णलोहे ॥ ७१ ॥
विमलखडसितामधुभि. पृथ-
ग्युतमयुक्तमिदं यदि वा घृतम् ॥

स्वरुचिभोजनपानविचेष्टितो
भवतिना पलशः परिशीलयन् ॥ ७२ ॥
श्रीमान्निर्धूत पाप्मा वनमहिपवलो वाजिवेगः स्थिरांगः
केशैर्भृंगागनीलैर्मधु सुरभिमुखो नैकयोपित्निषेवी ॥
बाङ्मेधाधीसमृद्धः सपटुहुतवहोमासमात्रोपयोगा
द्धत्तेऽसौ नारसिंहं वपुरनलशिखातप्तचामीकराभम् ॥ ७३ ॥
अत्तारं नारसिंहस्य व्याधयो न स्पृशंत्यपि ॥
चक्रोज्ज्वलभुजं भीता नारसिंहमिवासुराः ॥ ७४ ॥
भृंगप्रवालानमुनैवभृष्टान्घृतेन यः खादति यंत्रितात्मा ॥
विशुद्धकोष्ठोऽन्नसारसिद्धदुग्धानुपस्तत्कृतभोजनार्थः॥७५॥
मासोपयोगात्ससुखी जीवत्यब्दशतद्वयम् ॥
गृह्णाति सकृदप्युक्तमविलुप्तस्मृतींद्रियः ॥ ७६ ॥
अनेनैव च कल्पेन यस्तैलमुपयोजयेत् ॥
तानेवाप्नोति सगुणात्कृष्णकेशश्च जायते ॥ ७७ ॥
कानिशक्यानिफलान्वितानि युगानुरूपाणि रसायनानि॥
महानृशंसान्यपिचापराणिप्राप्त्यादिकष्टानिनकीर्तितानि७८
रसायनविधिभ्रंशाज्जायेरन्व्याधयो यदि ॥
यथास्वमौषधं तेषां कार्यं मुक्त्वा रसायनम् ॥ ७९ ॥
सत्यवादिनमक्रोधमध्यात्मप्रवणेंद्रियम् ॥
शांतं सद्वृत्तनिरतं विद्यान्नित्यरसायनम् ॥ १८० ॥

गुणैरेभिः समुदित. सेवते यो रसायनम् ॥
निवृत्तात्मा सदीर्घायु. परत्रेहे च मोदते ॥ ८१ ॥
शास्त्रानुसारिणी चर्या चित्तज्ञा· पार्श्ववर्तिनः ॥
बुद्धिरस्खलितार्थेषु परिपूर्ण रसायनम् ॥ ८२ ॥

इत्यष्टाङ्गहृदयसंहितायामुत्तरस्थाने एकोनचत्वारिंशोऽध्याय ॥ ३९ ॥

## चत्वारिंशोऽध्यायः ।

अथातो वाजीकरणाध्यायं व्याख्यास्याम. ।
वाजीकरणमन्विच्छेत्सतत विषयी पुमान् ॥
तुष्टि पुष्टिरपत्य च गुणवत्तत्र संश्रितम् ॥ १ ॥
अपत्यसतानकर यत्सद्य सप्रहर्षणम् ॥
वाजीवाऽतिबलो येन यात्यप्रतिहतोगना ॥ २ ॥
भवत्यतिप्रिय स्त्रीणा येन येनोपचीयते ॥
तद्वाजीकरण तद्धि देहस्योर्जस्करपरम् ॥ ३ ॥
धर्म्यं यशस्यमायुष्य लोकद्वयरसायनम् ॥
अनुमोदामहे ब्रह्मचर्यमेकातनिर्मलम् ॥ ४ ॥
अल्पसत्त्वस्य तु क्लेशैर्बाध्यमानस्य रागिणः ॥
शरीरक्षयरक्षार्थं वाजीकरणमुच्यते ॥ ५ ॥
कल्पस्योदग्रवयसो वाजीकरणसेविन. ॥
सर्वेष्वृतुष्वहरहर्व्यवायो न निवार्यते ॥ ६ ॥

अथ स्निग्धविशुद्धानां निरूहान्सानुवासनान् ॥
घृततैलरसक्षीरशर्कराक्षौद्रसंयुतान् ॥ ७ ॥
योगविद्योजयेत्पूर्वं क्षीरमांसरसाशिनम् ॥
ततो वाजीकरान्योगाञ्छुक्रापत्यविवर्द्धनान् ॥ ८ ॥
अच्छायः पूतिकुसुमः फलेन रहितो द्रुमः ॥
यथैकश्चैकशाखश्च निरपत्यस्तथा नरः ॥ ९ ॥
स्खलद्गमनमव्यक्तवचनं धूलिधूसरम् ॥
अपिलालाविलमुखं हृदयाह्लादकारकम् ॥ १० ॥
अपत्यं तुल्यता केन दर्शनस्पर्शनादिषु ॥
किं पुनर्यद्यशोधर्ममानश्रीकुलवर्द्धनम् ॥ ११ ॥
शुद्धकाये यथाशक्ति वृष्ययोगान्प्रयोजयेत् ॥
शरेक्षुकुशकाशानां विदार्या वीरणस्य च ॥ १२ ॥
मूलानि कंटकार्याश्च जीवकर्षभकौ बलाम् ॥
मेदे द्वे द्वे च काकोल्यौ शूर्पपर्ण्यौ शतावरीम् ॥ १३ ॥
अश्वगंधामतिबलामात्मगुप्तां पुनर्नवाम् ॥
वीरां पयस्यां जीवंतीमृद्धिं रास्नां त्रिकंटकम् ॥ १४ ॥
मधुकं शालिपर्णीं च भागांस्त्रिपलिकान्पृथक् ॥
माषाणामाढकं चैतद्विद्रोणे साधयेदपाम् ॥ १५ ॥
रसेनाढकशेषेण पचेत्तेन घृताढकम् ॥
दत्त्वा विदारीधात्रीक्षुरसानामाढकाढकम् ॥ १६ ॥

घृताच्चतुर्गुणं क्षीर पेष्याणीमानि चावपेत् ॥
वीरा स्वगुप्ता काकोल्यौ यष्टी फल्गूनि पिप्पलीम् ॥१७॥
द्राक्षा विदारी खर्जूर मधुकानि शतावरीम् ॥
तत्सिद्धपूत चूर्णस्य पृथक्प्रस्थेन योजयेत् ॥ १८ ॥
शर्करायास्तुगायाश्च पिप्पल्या कुडवेन च ॥
मरिचस्यप्रकुचेन पृथगर्द्धपलोन्मितै ॥ १९ ॥
त्वगेलाकेशरै श्लक्ष्णै.क्षौ द्राद्द्विकुडवेन च ॥
पलमात्र ततः खादेत्प्रत्यह रसदुग्धभुक् ॥ २० ॥
तेनारोहति वाजीव कुलिग इव हृष्यति ॥
विदारीपिप्पलीशालिप्रियालेक्षुरकाद्रज ॥ २१ ॥
पृथक्स्वगुप्ता मूलाच्च कुडवाश तथा मधु ॥
तुलार्द्धं शर्कराचूर्णात्प्रस्थार्द्धं नवसर्पिष ॥ २२ ॥
सोऽक्षमात्रमत खादेद्यस्य रामाशतं गृहे ॥
स्वात्मगुप्ताफलान्क्षीरे गोधूमान्साधितान्हिमान् ॥ २३ ॥
माषान्वासघृतक्षौद्रान्खादन्गृष्टिपयोनुप. ॥
जागर्ति रात्रि सकलामखिन्न खेदयेत्स्त्रिय. ॥ २४ ॥
वस्ताण्डसिद्धे पयसि भावितानसकृत्तिलान् ॥
य. खादेत्ससितान्गच्छेत्सस्त्रीशतमपूर्ववत् ॥ २५ ॥
चूर्णं विदार्या बहुश. स्वरसेनैव भावितम् ॥
क्षौद्रसर्पिर्युत लीढ्वा प्रमदाशतमृच्छति ॥ २६ ॥

कृष्णाधात्रीफलरजः स्वरसेन सुभावितम् ॥
शर्करामधुसर्पिर्भिर्लीढ्वा योऽनुपयः पिबेत् ॥ २७ ॥
स नरोऽशीतिवर्षोऽपि युवेव परिहृष्यति ॥
कर्षं मधुकचूर्णस्य घृतक्षौद्रसमन्वितम् ॥ २८ ॥
पयोऽनुपानं यो लिह्यान्नित्यवेगः स ना भवेत् ॥
कुलीरशृंग्या यः कल्कमालोड्य पयसा पिबेत् ॥ २९ ॥
सिताघृतपयोन्नाशी स नारीषु वृषायते ॥
यः पयस्या पयःसिद्धा खादेन्मधुघृतान्विताम् ॥ ३० ॥
पिबेद्बाष्कयणं चानु क्षीरं न क्षयमेति सः ॥
स्वयंगुप्तेक्षुरकयोर्बीजचूर्णं सशर्करम् ॥ ३१ ॥
धारोष्णेन नरः पीत्वा पयसा रासभायते ॥
उच्चट्टाचूर्णमप्येवं शतावर्याश्च योजयेत् ॥ ३२ ॥
चंद्रशुभ्रं दधिसरं ससितं षष्टिकौदनम् ॥
पटे सुमार्जितं भुक्त्वा वृद्धोऽपि तरुणायते ॥ ३३ ॥
श्वदंष्ट्रेक्षुरमाषात्मगुप्ताबीजशतावरीः ।
पिबन्क्षीरेण जीर्णोऽपि गच्छति प्रमदाशतम् ॥ ३४ ॥
यत्किंचिन्मधुरं स्निग्धं बृंहणं बलवर्द्धनम् ॥
मनसो हर्षणं यच्च तत्सर्वं वृष्यमुच्यते ॥ ३५ ॥
द्रव्यैरेवंविधैस्तस्माद्दर्पितः प्रमदां व्रजेत् ॥
आत्मवेगेन चोदीर्णः स्त्रीगुणैश्च प्रहर्षितः ॥ ३६ ॥
सेव्या सर्वेंद्रियसुखा धर्मकल्पद्रुमांकुराः ॥
विषयातिशयाः पंच शराः कुसुमधन्वनः ॥ ३७ ॥

इष्टाह्येकैकशोप्यर्था हर्षप्रीतिकरा· परम् ॥
कि पुन. स्त्रीशरीरे ये सघातेन प्रतिष्ठिता ॥ ३८ ॥
नामापि यस्या हृदयोत्सवाय या पश्यता तृप्तिरनाप्तपूर्वा ॥
सर्वेंद्रियाकर्षणपाशभूता कातानुवृत्तिव्रतदीक्षिता या ॥ ३९ ॥
कलाविलासागवयोविभूषा शुचिः सलज्जा रहसि प्रगल्भा ॥
प्रियवदा तुल्यमन.शया या सा स्त्री वृषत्वाय पर नरस्य॥४०॥
आचरेच्च सकला रतिचर्या कामशास्त्रविहितामनवद्याम् ॥
देशकालवलशक्त्यनुरोधाद्वैद्यतत्रसमयोत्त्यविरुद्धाम् ॥४१॥
अभ्यजनोद्वर्त्तनसेकगधसृक्पत्रवस्त्राभरणप्रकारा.॥
गाधर्वकाव्यादिकथाप्रवीणा समस्वभावावशगा वयस्या ४२
दीर्घिकास्वभवनातनिविष्टापद्मरेणुमधुमत्तविहंगा ॥
नीलसानुगिरिकूटनितवे काननानि पुरकठगतानि ॥ ४३ ॥
दृष्टिसुखा विविधातरुजाति श्रोत्रसुखः कलकोकिलनादः ॥
अगसुखर्त्तुवशेनविभूषा चित्तसुख· सकल· परिवार· ॥ ४४ ॥
ताबूलमच्छमदिरा काता काता निशाशशाकाका ॥
यद्यच्च किंचिदिष्ट मनसोवाजीकरं तत्तत् ॥ ४५ ॥

मधुमुखमिव सोत्पल प्रियाया
कलरणनापरिवादिनी प्रियेव ॥
कुसुमचयमनोरमा च शय्या
किसल यिनी लतिकेव पुष्पिताग्रा ॥ ४६ ॥
देशे शरीरे च नकाचिदर्ति
रर्थेषु नाल्पोऽपि मनोविघातः ॥

वाजीकराः सन्निहिताश्च योगाः
कासस्य कासं परिपूरयंति ॥ ४७ ॥
मुस्तापर्प्पटकं ज्वरे तृपि जलं मृत्भृष्टलोष्टोद्भवं
लाजाछर्दिषु वस्तिजेषु गिरिजं मेहेषु धात्रीनिशे ॥
पांडौ श्रेष्ठभयोभयानिलकके प्लीहामये पिप्पली
संधाने कृमिजा विशेषुकतरुर्मेदोनिले गुग्गुलु. ॥ ४८ ॥
वृषोस्त्रपित्ते कुटजोऽतिसारे भल्लातकोऽर्शःसुगरेषु हेम ॥
स्थलेषुतार्क्ष्यंकृमिषु क्रिमिघ्नं शोषे सुराच्छागपयोऽनुमांसम्॥४९
अक्ष्यामयेषु त्रिफलागुडूची वातास्त्ररोगेमथितं गृहिण्याम् ॥
कुष्ठेषु सेव्यः खदिरस्यसारः सर्वेषुरोगेषु शिलाह्वयं च॥५०॥
उन्मादं घृतमनवं शोकं मद्यं विसंस्मृतीं ब्राह्मी॥
निद्रानाशं क्षीरंजयतिरसाला प्रतिश्यायम् ॥ ५१ ॥
मांसं कार्श्यं लशुनः प्रभंजनं स्तब्धगात्रतां स्वेदः ॥
गुडमंजर्याः खपुरो नस्यां स्कंधांसबाहुरुजम् ॥ ५२ ॥
नवनीतखंडमर्दितमौष्ट्रं सूत्रं पयश्च हंत्युदरम् ॥
नस्यं मूर्द्धविकारान्विद्रधिमचिरोत्थमस्त्रविस्त्रावः ॥ ५३ ॥
नस्यंकवलमुखजां नस्यांजनतर्पणानि नेत्ररुजः ॥
वृद्धत्वं क्षीरघृते मूर्छां शीतांबुमारुतच्छायाः ॥ ५४ ॥
ससशुक्तार्द्रकमात्रा मंदे वह्नौ श्रमे सुरास्नानम् ॥
दुःखसहत्वेस्थैर्ये व्यायामो गोक्षुरुर्हितः कृच्छ्रे ॥ ५५ ॥
कासे निदग्धिका पार्श्वशूले पुष्करजाजटा ॥
वयसः स्थापनेधात्री त्रिफलागुग्गुलुर्व्रणे ॥ ५६ ॥

वस्तिर्वातविकारान्पैत्तान्रेक' कफोद्भवान्वमनम् ॥
क्षौद्र जयति वलास सर्पि पित्त समीरण तैलम् ॥ ५७ ॥
इत्यग्र्यं यत्प्रोक्त रोगाणामौषध शमायालम् ॥
तद्देशकालवलतो विकल्पनीय यथायोगम् ॥ ५८ ॥
इत्यात्रेयादागमय्यार्थसूत्र तत्सूक्ताना पेशलानामतृप्त. ॥
भेडादीना समतो भक्तिनम्र पप्रच्छेद सशयानोऽग्निवेश.५९

दृश्यते भगवन्केचिदात्मवतोऽपि रोगिण ॥
द्रव्योपस्थातृसपन्नावृद्धवैद्यमतानुगा ॥ ६० ॥
क्षीयमाणामयप्राणा विपरीतास्तथापरे ॥
हिताहितविभागस्य फल तस्मादनिश्चितम् ॥ ६१ ॥
किंशास्तिशास्त्रमस्मिन्निति कल्पयतोऽग्निवेशमुख्यस्य ॥
शिष्यगणस्य पुनर्वसुराचख्यौकार्त्स्न्यतस्तत्वम् ॥ ६२ ॥
न चिकित्साऽचिकित्सा च तुल्याभवितुमर्हति ॥
विनापिक्रिययाऽस्वास्थ्य गच्छता षोडशाशया ॥ ६३ ॥
आतकपंकमग्नाना हस्तालवो भिषग्जितम् ॥
जीवित म्रियमाणाना सर्वेषामेव नौषधात् ॥ ६४ ॥
नह्युपायमपेक्षते सर्वे रोगा न चान्यथा ॥
उपायसाध्या. सिध्यति नाहेतुर्हेतुमन्यत ॥ ६५ ॥
अप्येवोपाययुक्तस्य धीमतो जातुचित्क्रिया ॥
न सिध्येद्दैववैगुण्यान्न त्विय षोडशात्मिका ॥ ६६ ॥

कस्यासिद्धोग्नितोयादिः स्वेदस्तंभादिकर्मणि ॥
न प्रीणनं कर्शनं वा कस्य क्षीरगवेधुकम् ॥ ६७ ॥
कस्य माषात्सगुप्तादौ वृष्यत्वे नास्ति निश्चयः ॥
विण्मूत्रकरणाक्षेपौ कस्य संशयितौ यवे ॥ ६८ ॥
विषं कस्य जरां याति मंत्रतंत्रविवर्जितम् ॥
कः प्राप्तः कल्पतां पथ्यादृते रोहिणिकादिषु ॥ ६९ ॥
अपि चाकालमरणं सर्वसिद्धांतनिश्चितम् ॥
महतापि प्रयत्नेन वार्यतां कथमन्यथा ॥ ७० ॥
चंदनाद्यपि दाहादौ रूढमागमपूर्वकम् ॥
शास्त्रादेव गतं सिद्धिं ज्वरे लंघनबृंहणम् ॥ ७१ ॥
चतुष्पाद्गुणसंपन्ने सम्यगालोच्य योजिते ॥
मा कृथा व्याधिनिर्घातं विचिकित्सां चिकित्सिते ॥ ७२ ॥
एतद्धि मृत्युपाशानामकांडे छेदनं दृढम् ॥
रोगोत्रासितभीतानां रक्षासूत्रमसूत्रकम् ॥ ७३ ॥
एतत्तदमृतं साक्षाज्जगत्यायासवर्जितम् ॥
याति हालाहलत्वं च सद्यो दुर्भाजनस्थितम् ॥ ७४ ॥
अज्ञातशास्त्रसद्भावाञ्छास्त्रमात्रपरायणान् ॥
त्यजेद्दूराद्भिषक्पाशान्पाशान्वैवस्वतानिव ॥ ७५ ॥
भिषजां साधुवृत्तानां भद्रमागमशालिनाम् ॥
अभ्यस्तकर्मणां भद्रं भद्रं भद्राभिलाषिणाम् ॥ ७६ ॥

इति तन्त्रगुणैर्युक्त तन्त्रदोषविवर्जितम् ॥
चिकित्साशास्त्रमखिल व्यापठ्य परित स्थितम् ॥७७॥
विपुलामलविज्ञानमहामुनिमतानुगम् ॥
महासागरगभीरसंग्रहार्थोपलक्षणम् ॥ ७८ ॥

अष्टागवैद्यकमहोदधिमथनेन
योष्टागसंग्रहमहामृतराशिरास. ॥
तस्मादनल्पफलमल्पसमुद्यमान
प्रीत्यर्थमेतदुदितं पृथगेव तन्त्रम् ॥ ७९ ॥

इदमागमसिद्धत्वात्प्रत्यक्षफलदर्शनात् ॥
मन्त्रवत्सप्रयोक्तव्य न मीमास्य कथचन ॥ ८० ॥
दीर्घजीवितमारोग्य धर्ममर्थं सुख यशः ॥
पाठावबोधानुष्ठानैरधिगच्छत्यतो ध्रुवम् ॥ ८१ ॥

एतत्पठन्सग्रहबोधशक्त स्वभ्यस्तकर्मा भिषगप्रकप्य ॥
आकपयत्यन्यविशालतन्त्रकृताभियोगान्यदि तन्न चित्रम्८२

यदि चरकमधीते तद्ध्रुव सुश्रुतादि-
प्रणिगदितगदाना नाम मात्रेऽपि बाह्यः ॥
अथ चरकविहीन प्रक्रियायामखिन्न
किमिह खलु करोतु व्याधिताना वराक ॥ ८३ ॥

ाभिनिवेशवशादभियुज्यते सुभणितेऽपि न यो दृढमूढक॥
पठतु यत्नपरः पुरुषायुष स खलु वैद्यकमाद्यमनिर्विद.॥८४॥

वाते पित्ते श्लेष्मशांतौ च पथ्यं तैलं सर्पिर्माक्षिकं च क्रमेण॥
एतद्ब्रह्मा भाषतेब्रह्मजोवा का निर्मंत्रे वक्तृभेदोक्तिशक्तिः८५
अभिधातृवशात्किंवा द्रव्यशक्तिर्विशिष्यते ॥
अतो मत्सरमुत्सृज्य माध्यस्थमवलंव्यताम् ॥ ८६ ॥
ऋषिप्रणीते प्रीतिश्चेन्मुक्त्वा चरकसुश्रुतौ ॥
भेडाद्याः किं न पठ्यन्ते तस्माद्ग्राह्यं सुभाषितम्॥८७॥
हृदयमिव हृदयमेतत्सर्वायुर्वेदवाङ्मयपयोधेः ॥
दृष्ट्वा यच्छुभमाप्तं शुभमस्तु परं ततो जगतः ॥ ८८ ॥

इति श्रीसिंहगुप्तात्मजवाग्भटविरचितयाया मष्टाङ्गहृदयसंहिताया
मुत्तरस्थान ग्रन्थश्च समाप्तः ।




खेमराज श्रीकृष्णदास, "श्रीवेङ्कटेश्वर" स्टीम्, प्रेस-बंबई.